वेदनिधि ग्रन्थमाला ...201DV

# यजुर्वेदीय
# तैत्तिरीय संहिता




## अवधूत दत्तपीठम्

श्रीगणपति सच्चिदानन्द आश्रमः, दत्त नगरम्

मैसूरु 570025

वेदनिधि ग्रन्थमाला – 201DV

# यजुर्वेदीय तैत्तिरीय संहिता

May 2017

Editorial Team

**Dr.Vamshi Krishna Ghanapathi**

**DH Prasanna**

**DVS Manoj Kumar**




Printed by

**Ma Prints,** Bengaluru

Published by

**SVAMI (SGS VedaNidhi Academy & Masters' Institute)**

**Avadhoota Datta Peetham**

**Sri Ganapathy Sachchidananda Ashrama**

Datta Nagara, Ooty Road, Mysore 570025 India

**Email - veda@dattapeetham.com**

Website - www.vedanidhi.in/books



अवधूत दत्तपीठाधीश्वराणां जगद्गुरूणां

परमपूज्यानां

श्री श्री श्री गणपति सच्चिदानन्द स्वामिश्रीचरणानां

# आविष्कार वचांसि

।। नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणम् ।।

महतां सज्जनानां सम्पत्तिः - ऋचः, यजूंषि, सामानि, तद्विनियोजकानि प्रख्यापकानि ब्राह्मणवाक्यानि - इति श्रुतिः ब्रवीति। तथाविध सम्पत्तिमन्तः नैके महान्तः श्रोत्रियाः ब्रह्मनिष्ठागरिष्ठाः शब्दब्रह्मोपासनधुरीणाः वर्षेऽस्मिन् भारते राराजन्ते स्म। ऋषिकल्पानां तादृशां महतां परम्परा अद्यापि प्रकर्षेण वर्तते, यस्याः परिपोषणाय छात्राणामधीतिः निदानमास्ते। तदधीत्यै उपकुर्वन्ति महान्ति उपकरणानि बहूनि वर्तन्ते, यदन्यतमं पुस्तकजातम् - इति सम्प्रति वैदिकलोकः गाढं विश्वसिति।।

आचार्योपदिष्टानि वेदवाक्यानि समामनन्तः छात्राः, स्वेषामध्ययनाय मुद्रितग्रन्थानेव सर्वथा आद्रियन्ते। अतः गुरुणा उपदिष्टान्, उपदेष्टव्यान्, विकार- लोप- आगम- आदेशात्मकान् विषयान् सङ्कलय्य मुद्रापितो वेदग्रन्थः, नितरां छात्रोपकाराय कल्पते। तथा च मन्त्रसम्बन्धि ऋषि-च्छन्दो- दैवत-विनियोग-प्रकरणादिकं तत्तद्देशेषु निविष्टं सत्, पाठकेषु सुकृतं सम्पादयेत्।

एवंविधग्रन्थसहायेन अध्ययनसम्पत्त्या समासादितयशसः संसाधितपरमेश्वरानुग्रहाः भूयासुरिति सङ्कल्पः दत्तगुरोरनुग्रहेण पूर्वं समजनि।

तदीयमहितकृपावशेन, सद्यः अस्माकं दत्तपीठस्य वेदनिधिबृन्दः पूर्वोदित-बह्वंश-कलितं वेदग्रन्थसमुदायं प्रकाशयतीति महान्तमानन्दमनुबोभूयामहे।

तदस्य ग्रन्थजातस्य पठनेन, अधीयाना अपि भूयिष्ठानन्दभाजस्सन्तः, शब्दब्रह्मोपासनधुरं ससुखं वहन्तः श्रेयसे पारयेयुरिति श्रीदत्त सद्गुरुं प्रार्थयामहे।

प्रायेण संवत्सराष्टकात् सञ्चलतः वेदग्रन्थप्रकाशनस्य आविष्कृतिरूपा समुद्गतिः महत्यस्मिन् वज्रोत्सवे विधीयत इति विषयं, दत्तगुरोः समधिकवरिवस्याफलत्वेन सम्भावयामः। महतोऽस्मात् वज्रोत्सवादारभ्य वैदिकलोकः निरायासं निश्शुल्कं ग्रन्थजातमिदं (अन्तर्जालात्) वेदनिधि निवेशनात् (वॆब्सैट् द्वारा) प्राप्नुवन्तु - इति श्रीदत्तस्मरणपूर्वकं समाशास्महे।

शेवधिर्यः पुमर्थानां षडध्वातीत विग्रहः।

राद्धान्तो निगमार्थानां प्रसद्यात् दत्तसद्गुरुः।।

# विज्ञापनम्

विद्वान् वंशीकृष्ण घनपाठी
निर्देशकः - वेदनिधि प्रकाशनम्

## तद्विश्वमुप जीवति।

यददो ब्रह्म- विश्वस्य अधिष्ठानत्वेन परस्सहस्त्रैः श्रौत स्मार्त पौराणिक वाक्य प्रमाणैः सङ्कीर्तितं- तदिदं विश्वं सञ्जीवयति, तदाधारेण विश्वमिदं उपजीवतीति भारतीयेषु सम्प्रदायसिद्धं सत्यम्। विश्वसिसृक्षोः अभितप्ताद्ब्रह्मणः- त्रयो लोकाः, त्रयो वेदाः, गायत्र्यास्त्रयः पादाः, तिस्रो व्याहृतयो जज्ञिर इति मन्त्रेभ्यः, तदुपबृंहक ब्राह्मणवाक्येभ्यश्च अवगम्यते।

तदासु वेदवाक्यराजीषु अद्वितीयतया विजेगीयमानः यजुरात्मको मन्त्रः इति वैदिकलोके नितरां रूढ एव विषयः। यज- देवपूजा सङ्गतिकरणदानेषु इति धातोः उत्पन्नः यजुश्शब्दः योगरूढ इति ज्ञायते। समवेतार्थस्मारकता- अमिताक्षरता- विच्छन्दस्कता चेत्येतत्त्रयँ यजुषां लक्षणमिति स्पष्टं विभाव्यते। सर्ववेद ग्रन्थेषु सतीष्वप्यृक्षु, यजुर्मन्त्रप्रचुरतया अस्यैव ग्रन्थस्य यजुर्वेद इति प्रसिद्धिमुपलभामहे।

यजुषां वेदः, यजुर्भिर्लक्षितो वा वेदः इति यजुर्वेदपदस्य व्युत्पत्तिः कथ्यते, यत्र तैत्तिरीय- काण्व- माध्यन्दिन – मैत्रायणीय शाखाः सम्प्रति अध्ययनपरम्परायां वर्तन्ते। तैत्तिरीय शाखाया वैलक्षण्यमेवं वर्तते, यत्र ऋग्यजुर्मन्त्रैस्सह तद्विनियोग- प्रशंसक ब्राह्मणवाक्यानि च एकस्मिन्नेव ग्रन्थे वर्तन्ते। अपरा वैचित्री चेयं यत्र समानविषयको ग्रन्थः, तैत्तिरीयसंहिता तैत्तिरीयब्राह्मणनाम्ना द्वेधा भिन्नः इति च। इदमेव मन्त्रब्राह्मण साङ्कर्यं यजुर्वेदस्य कृष्णत्वव्यवहारे हेतुरिति च कथ्यते।

प्रकृतः तैत्तिरीय संहिता ग्रन्थः 2198 पञ्चाशत्सु, 44 प्रपाठकेषु, 7 काण्डेषु विभक्तस्सन् लोके अधीयते। इतरवेदवैलक्षण्यात् परिदृश्यमानोऽन्यो विषयः, काण्डविभागश्च देवताऽनुरोधेन प्रजापति – सोम- अग्नि- विश्वदेव- स्वायम्भुवब्रह्मनाम्ना वर्तते। अस्य काण्डानुक्रमः मन्त्रब्राह्मणसंश्लिष्टस्सन्नपि, प्रयोगानुसारीति प्रसिद्धमेव। एतद्भिन्नः क्रमः सारस्वतपाठनाम्ना लोके अध्ययनक्रमे सम्प्रति विनियुज्यते।

प्रकृतः सारस्वतपाठक्रमानुसारी तैत्तिरीय संहिताग्रन्थः, बहुभिः धार्मिकैः बहुवारं मुद्रितोऽपि तत्तत्कालिकच्छात्र पठितृवर्ग प्रयोजनाय, पौनःपुन्येन बहुधा प्राकाश्यंन्नीयत इति मोदस्य महत आस्पदं भवति।

सम्प्रति पाठकोपकाराय श्रीमदवधूत दत्तपीठाधीश्वराणां श्री **श्री गणपति सच्चिदानन्द स्वामि** श्री चरणानां दिव्याशीर्मञ्जूषया, दत्तपीठस्य विद्वांसः नैकान् वर्षानधीत्य ग्रन्थमेनं प्रकाशयन्तीति, तेषु गुरुकृपा वृष्टिर्नूनं भूयोभूयो भवेदिति समाशासाना निवेदयामः।

तथा च वेदनिधि.ग्रन्थमालायां बहवो वैदिका ग्रन्थाः देशभाषासु मुद्राप्यन्त इति, तत्तत्सम्पादका विपश्चितो वेदविद्व.दुपकारैकपथिकाः वेदपुरुषस्वरूपं सद्गुरुवर्यं सेवमाना इति, तेषु सर्वेषु- आदिगुरो.र्दत्तात्रेयस्य वात्सल्य.दृक्पातो निरन्तरं संपद्यतामिति च प्रार्थयन्तो विरमामः।

# यजुर्वेदीय तैत्तिरीय संहिता विषय सूचिका

# ꧁ अस्मिन् प्रकाशने प्रयुक्तानि चिह्नानि

- आदौ अष्टक - प्रपाठक संख्या (यथा - प्रथमाष्टके प्रथमः प्रपाठकः,)
- ततः प्राजापत्यादि काण्ड विधाने विनियोग प्रकारेण तत्तत्काण्डस्य निर्देशः, काण्डस्थं प्रकरणं, मन्त्र ब्राह्मण निर्देश पूर्विका प्रकरणगत अनुवाक संख्या च निर्दिश्यते। (यथा - सौ।का।1। आध्वर्यव मन्त्राः 4 (एकोऽनुवाकः 1)
- प्रा।का। प्राजापत्यं काण्डं, सौ।का। सौम्यकाण्डं, आ।का। आग्नेय काण्डं, वै। का। वैश्वदेवं काण्डम्।
- वेदः - स्तरः1, शाखा - स्तरः 2, ग्रन्थः - स्तरः 3

ʊ अष्टक/ काण्ड प्रारम्भः (स्तरः 4)

꧁ अध्याय/ प्रपाठक प्रारम्भः (स्तरः 5)

❀ सूक्त/ अनुवाक प्रारम्भः (स्तरः 6)

❀ वर्गः/ पञ्चाशत/ दशतिः (स्तरः 7)

卐 मन्त्र/ ब्राह्मण वाक्य समूहः (स्तरः 8)

✡ परिशिष्टम्

❃ मन्त्रप्रतीकः

Ω गणान्तः (ऋग्वेदे)

। वाक्यावसानः,।। (ऋक्/ यजुः/ साम मन्त्र) वाक्यसमूहावसानः

‡ मन्द्रस्थायिना वक्तव्यम् अथवा इतः प्राक् पाठं नावसादयेत्।

ɵ वाक्यावसानयुक्तम् पञ्चाशदवसानम्।

---------------------------

⇆ साम्प्रदायिकं पाक्षिकं वर्णसँयुतत्वम् (तस्मिन्⇆वयम्)

ᔕ अनुषङ्गः,

ऽऽ आकार प्रश्लेषः, ऽअकार प्रश्लेषः

ꣳ उपध्मानीय/जिह्वामूलीये

_ अनुदात्तः, ' स्वरितः, ' अध्यर्ध स्वरितः, " दीर्घ स्वरितः

ॅ सानुनासिक गकारविशिष्ट अनुस्वार आगमः (गणपतिॅ हवामहे)

ॅ निरनुनासिक गकारविशिष्ट अनुस्वार आगमः (याॅ स्वस्तिमग्निः)

ँ सानुनासिक गकार द्वित्वविशिष्ट अनुसारागमः (सँश्रवा ह सौवर्चनसः)

ँ सानुनासिक यकार/वकार/ लकार विशिष्टः (अर्धानुस्वारः) (यँ वयम्, त्यम्बकँ यजामहे

ं अनुस्वारः

- द्राविड सम्प्रदाये नकार वकार सँयोगस्य सूचकम् ⇆,
- द्विमात्रादि कालोच्चारण संकेतः '2', '3', '4'
- क्लिष्टा दशतिः ☞, उच्चारणे धारणे वा विशिष्टं स्थलम् ☝, मन्त्रविशेषाः ✍,
- -- अनुषङ्गः, मन्त्रारम्भे -- चिह्नं आदौ वक्तव्यमनुषङ्गं सूचयति। मन्त्रावसाने वर्तमानं -- चिह्नं मन्त्रान्ते वक्तव्यमनुषङ्गं बोधयति। तथा चँ अनुषङ्ग भागं सूचयति। • अधो निर्दिष्ट स्थले (फुट् नोट्) द्राविड सम्प्रदाय भेदः, पाठान्तरँ वा, प्रतीकत्वेन दर्शितस्य मन्त्रस्य कृत्स्नः पाठो वा प्रदर्श्यते।

---

**वेदश्शिवश्शिवो वेदो वेदाध्यायी सदाशिवः।**

**तस्मात् सर्वप्रयत्नेन वेदमेव सदा जपेत्।।**

**उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत्।**

**तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः।।**

---



**अजास्यः पीतवर्ण.स्स्या-द्यजुर्वेदोऽक्षसूत्रधृक्।**
**वामे कुलिशपाणिस्तु भूतिदो मङ्गलप्रदः।।**

**तस्य यजुरेव शिरः।**
**यजुर्वेदे तिष्ठति मध्ये अह्नः।।**

## ॐ प्रथमकाण्डम्

## प्रथमकाण्डे प्रथमः प्रपाठकः

### प्रा।का।1 पौरोडाशिक मन्त्राः – 1 (त्रयोदशानुवाकाः 13)

श्री गुरुभ्यो नमः। हरिः ओम्।

卐इषे 卐त्वोर्जे त्वा 卐वायव स्स्थोपाऽऽयव स्स्थ 卐देवो व.स्सविता प्रार्पयतु श्रेष्ठतमाय कर्मण 卐आ प्यायध्व मघ्निया देवभाग मूर्जस्वतीः पयस्वतीः प्रजावती रनमीवा अयक्ष्मा मा व.स्स्तेन ईशत माऽघशꣳसो 卐रुद्रस्य हेतिः परि वो वृणक्तु 卐ध्रुवा अस्मि न्गोपतौ स्यात बह्वी 卐र्यजमानस्य पशू न्पाहि।। 1।। (इषे त्रिचत्वारिꣳशत्। 1।)

卐यज्ञस्य घोषदसि 卐प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः 卐प्रेय मगा द्धिषणा बर्हि रच्छ मनुना कृता स्वधया वितष्टा त आ वहन्ति कवयः पुरस्ता द्देवेभ्यो जुष्ट मिह बर्हि रासदे 卐देवानां परिषूत मसि वर्षवृद्धमसि 卐देवबर्हि मा त्वाऽन्वङ्मा तिर्य.क्पर्व ते राध्यास 卐माच्छेत्ता ते मा रिष 卐न्देवबर्हि श्शतवल्शँ वि रोह 卐सहस्रवल्शाः।। 2।। वि वयꣳ रुहेम 卐पृथिव्या स्सम्पृचः पाहि 卐सुसम्भृता त्वा सम्भरा卐म्यदित्यै रास्नासीन्द्राण्यै सन्नहनं 卐पूषा ते ग्रन्थि.ङ्ग्रथ्नातु 卐स ते माऽऽस्था卐दिन्द्रस्य त्वा बाहुभ्या मुद्यच्छे बृहस्पते मूर्ध्ना हरा 卐म्युर्वन्तरिक्ष मन्विहि 卐देवङ्गमसि।। 3।। (सहस्रवल्शा अष्टात्रिꣳशच्च। 2।)

卐शुन्धध्व न्दैव्याय कर्मणे देवयज्यायै 卐मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वा 卐र्वसूनां पवित्रमसि शतधारँ वसूनां पवित्रमसि सहस्रधारꣳ 卐हुत स्स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वाऽऽयु स्सा विश्वव्यचा स्सा विश्वकर्मा सं पृच्यध्व मृतावरी रूर्मिणी र्मधुमत्तमा मन्द्रा धनस्य सातये 卐सोमेन त्वाऽऽतनच्मीन्द्राय दधि 卐विष्णो~ हव्यꣳ रक्षस्व।। 4।। (सोमेनाष्टौ च। 3।)

卐कर्मणे वा न्देवेभ्य श्शकेयँ 卐वेषाय त्वा 卐प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो 卐धूरसि धूर्व धूर्वन्त न्धूर्व तँ योऽस्मा.न्धूर्वति तन्धूर्व यँ वय न्धूर्वाम 卐स्त्वन्देवाना मसि सस्नितमं पप्रितम.ञ्जुष्टतमँ वह्नितम न्देवहूतम 卐मह्रुतमसि हविर्धान न्दृꣳहस्व मा ह्वा 卐र्मित्रस्य त्वा चक्षुषा प्रेक्षे मा भे.र्मा सँ विक्था मा त्वा।। 5।। हिꣳसिष 卐मुरु वाताय 卐देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्या मग्नये जुष्ट न्निर्वपा 卐म्यग्नीषोमाभ्या 卐मिद न्देवाना 卐मिद मु न स्सह 卐स्फात्यै त्वा नारात्यै 卐सुव

रभि वि ख्येषँ फ्रवैश्वानर.ञ्ज्योति फ्रर्दृ॰हन्ता न्दुर्या द्यावापृथिव्यो फ्ररुर्वन्तरिक्ष मन्वि फ्रह्यदित्या स्त्वोपस्थे सादयाफ्रम्यग्ने हव्य॰ रक्षस्व।। 6।। (मा त्वा षड्चत्वारि॰शच्च। 4।)

☸❀फ्रदेवो व स्सवितोत्पुना फ्रत्वच्छिद्रेण पवित्रेण फ्रवसो स्सूर्यस्य रश्मिभि फ्ररापो देवी रग्रेपुवो अग्रेगुवोऽग्र इमँ यज्ञ न्नयताग्रे यज्ञपति न्धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूय मिन्द्र मवृणीध्वँ वृत्रतूर्ये प्रोक्षिता फ्रस्स्थाग्नये वो जुष्टं प्रोक्षा फ्रम्यग्नीषोमाभ्या॰ फ्रशुन्धध्व न्दैव्याय कर्मणे देवयज्याया फ्रअवधूत॰ रक्षोऽवधूता अरातयो फ्रऽदित्या स्त्वगसि प्रति त्वा।। 7।।❀ पृथिवी वे फ्रत्त्वधिषवण मसि वानस्पत्यं प्रति त्वाऽऽदित्या स्त्वग्वे फ्रत्त्वग्ने स्तनूरसि वाचो विसर्जन न्देववीतये त्वा गृह्णा फ्रम्यद्रिरसि वानस्पत्य स्स इद न्देवेभ्यो हव्य॰ सुशमि शमि फ्रष्वेष मावदोर्ज मा वद द्युम द्वदत वय॰ सङ्घात ञ्जेष्म फ्रवर्षवृद्धमसि फ्रप्रति त्वा वर्षवृद्धँ वेत्तु फ्रपरापूत॰ रक्षः परापूता अरातयो फ्ररक्षसां भागोऽसि फ्रवायुर्वो वि विनक्तु फ्रदेवो व स्सविता हिरण्यपाणिः प्रति गृह्णातु।। 8।। (त्वा भाग एकादश च। 5।)

☸❀फ्र अवधूत॰ रक्षोऽवधूता अरातयो फ्रऽदित्या स्त्वगसि प्रति त्वा पृथिवी वेत्तु फ्रदिव स्स्कम्भनिरसि प्रति त्वाऽऽदित्या स्त्वग्वेत्तु फ्रधिषणाऽसि पर्वत्या प्रति त्वा दिवस्स्कम्भनि वेत्तु फ्रधिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु फ्रदेवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्या मधि वपामि धान्यमसि धिनुहि देवा फ्रन्प्राणाय त्वा फ्रऽपानाय त्वा फ्रव्यानाय त्वा फ्रदीर्घा मनु प्रसिति मायुषे धा न्देवो व स्सविता हिरण्यपाणिः प्रति गृह्णातु।। 9।। (प्राणाय त्वा पञ्चदश च। 6।)

☸❀फ्र धृष्टि रसि ब्रह्म यच्छा फ्रपाग्नेऽग्नि मामाद ञ्जहि फ्रनिष्क्रव्याद॰ सेधा फ्रऽऽदेवयजँ वह फ्रनिर्दग्ध॰ रक्षो निर्दग्धा अरातयो फ्रध्रुवमसि पृथिवी न्दृ॰हायु र्दृ॰ह प्रजा न्दृ॰ह सजाता नस्मै यजमानाय पर्यूह फ्रधर्त्र मस्यन्तरिक्ष न्दृ॰ह प्राण न्दृ॰हापान न्दृ॰ह सजाता नस्मै यजमानाय पर्यूह फ्रधरुणमसि दिव न्दृ॰ह चक्षुः।। 10।।❀ दृ॰ह श्रोत्र न्दृ॰ह सजाता नस्मै यजमानाय पर्यूह फ्रधर्मासि दिशो दृ॰ह योनि न्दृ॰ह प्रजा न्दृ॰ह सजाता नस्मै यजमानाय पर्यूह फ्रचितस्स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह फ्रभृगूणा मङ्गिरसा न्तपसा तप्यध्वँ फ्रयानि घर्मे कपाला न्युपचिन्वन्ति वेधसः। पूष्ण स्तान्यपि व्रत इन्द्रवायू वि मुञ्चताम्।। 11।। (चक्षु रष्टाचत्वारि॰शच्च। 7।)

卐 सँ वपामि 卐समापो अद्भि रग्मत समोषधयो रसेन स९ रेवती जगतीभि र्मधुमती र्मधुमतीभि स्सृज्यध्व 卐मद्भ्यः परि प्रजातास्स्थ समद्भिः पृच्यध्व 卐ञ्जनयत्यै त्वा सँ यौ 卐म्यग्नये त्वा 卐ऽग्नीषोमाभ्यां 卐मखस्य शिरोऽसि 卐घर्मोऽसि विश्वायु 卐रुरु प्रथस्वोरु ते यज्ञपतिः प्रथता 卐न्त्वच ङ्गृह्णी 卐ष्वान्तरित९ रक्षोऽन्तरिता अरातयो 卐देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाके 卐ऽग्निस्ते तनुवं माऽति धा 卐गग्ने हव्य९ रक्षस्व 卐सं ब्रह्मणा पृच्य 卐स्वैकताय स्वाहा 卐द्विताय स्वाहा 卐त्रिताय स्वाहा।। 12।। (सविता द्वावि९शतिश्च। 8।)

卐 आ दद 卐इन्द्रस्य बाहुरसि दक्षिण स्सहस्रभृष्टि श्शततेजा वायुरसि तिग्मतेजाः 卐पृथिवि देवयज न्योषध्यास्ते मूलं मा हि९सिष 卐मपहतोऽररुः पृथिव्यै 卐व्रजङ्गच्छ गोस्थानँ 卐वर्षतु ते द्यौ 卐र्बधान देव सवितः परमस्यां परावति शतेन पाशै र्योऽस्मा न्द्वेष्टि यञ्च वयन्द्विष्म स्तमतो मा मौ 卐गपहतोऽररुः पृथिव्यै देवयजन्यै 卐व्रजम्।। 13।। ❀ गच्छ गोस्थानँ 卐वर्षतु ते द्यौ 卐र्बधान देव सवितः परमस्यां परावति शतेन पाशै र्योऽस्मा न्द्वेष्टि यञ्च वय न्द्विष्म स्तमतो मा मौ 卐गपहतोऽररुः पृथिव्या अदेवयजनो 卐व्रज ङ्गच्छ गोस्थानँ 卐वर्षतु ते द्यौ 卐र्बधान देव सवितः परमस्यां परावति शतेन पाशै र्योऽस्मा न्द्वेष्टि यञ्च वय न्द्विष्म स्तमतो मा।। 14।। ❀ मौ.卐गररुस्ते दिवं मा स्कान् 卐वसवस्त्वा परि गृह्णन्तु गायत्रेण छन्दसा 卐रुद्रास्त्वा परि गृह्णन्तु त्रैष्टुभेन छन्दसा 卐ऽऽदित्यास्त्वा परि गृह्णन्तु जागतेन छन्दसा 卐देवस्य सवितु स्सवे कर्म कृण्वन्ति वेधस 卐ऋत म 卐स्यृतसदन म 卐स्यृतश्री रसि 卐धा असि स्वधा~ अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरफ्शि 卐न्नुदादाय पृथिवी.ञ्जीरदानु र्यामैरय¤ञ्चन्द्रमसि स्वधाभि स्तान्धीरासो अनुदृश्य यजन्ते।। 15।। (देवयजन्यै व्रज न्तमतो मा विरफ्शिन्नेकादश च। 9।)

卐प्रत्युष्ट९ रक्षः प्रत्युष्टा अरातयो 卐ऽग्नेर्व स्तेजिष्ठेन तेजसा निष्टपामि 卐गोष्ठं मा निर्मृक्षँ वाजिनन्त्वा सपत्नसाह९ सम्मार्ज्मि 卐वाचं प्राण 卐ञ्चक्षु श्श्रोत्रं 卐प्रजाँ योनिं मा निर्मृक्षँ वाजिनीन्त्वा सपत्नसाही९ सम्मा 卐ज्यार्शासाना सौमनसं प्रजा९ सौभाग्य न्तनूम्। अग्ने रनुव्रता भूत्वा सन्नह्ये सुकृताय कम्।।

卐 सुप्रजसस्त्वा वय९ सुपत्नी रुप।। 16।। ❀ सेदिम। अग्ने सपत्नदम्भन मदब्धासो अदाभ्यम्।।

卐 इमँ विष्यामि वरुणस्य पाशँ यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि।।

卐 समायुषा सं प्रजया समग्ने वर्चसा पुनः। सं पत्नी पत्याऽह ङ्गच्छे समात्मा तनुवा मम।।

卐 महीनां पयोऽस्योषधीना॰ रस स्तस्य तेऽक्षीयमाणस्य निः।। 17।।❀ वपामि 卐महीनां पयोऽस्योषधीना॰ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय 卐तेजोऽसि 卐तेजोऽनु प्रे 卐ह्यग्निस्ते तेजो मा वि नै 卐दग्ने र्जिह्वाऽसि सुभू र्देवाना न्धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भव 卐शुक्र मसि 卐ज्योति रसि 卐तेजोऽसि 卐देवो व स्सवितोत्पुना 卐त्वच्छिद्रेण पवित्रेण 卐वसो स्सूर्यस्य रश्मिभि 卐श्शुक्रन्त्वा शुक्राया न्धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि 卐ज्योतिस्त्वा ज्योति 卐ष्यर्चि स्त्वाऽर्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि।। 18।। (उप नी रश्मिभि श्शुक्र॰ षोडश च। 10।)

❀卐कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा 卐वेदिरसि बर्हिषे त्वा स्वाहा 卐बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा 卐दिवे त्वा 卐ऽन्तरिक्षाय त्वा 卐पृथिव्यै त्वा 卐स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवी ङ्गच्छत 卐विष्णो स्स्तूपो 卐ऽस्यूर्णाम्रदस न्त्वा स्तृणामि स्वासस्थ न्देवेभ्यो 卐गन्धर्वोऽसि विश्वावसु र्विश्वस्मा दीषतो यजमानस्य परिधि रिड ईडित 卐इन्द्रस्य बाहुरसि।। 19।।❀ दक्षिणो यजमानस्य परिधि रिड ईडितो 卐मित्रावरुणौ त्वोत्तरतः परि धत्ता न्ध्रुवेण धर्मणा यजमानस्य परिधि रिड ईडित 卐स्सूर्यस्त्वा पुरस्तात्पातु कस्याश्चि दभिशस्त्या 卐वीतिहोत्र न्त्वा कवे द्युमन्त॰ समिधीमह्यग्ने बृहन्त मध्वरे 卐विशो यन्त्रे स्थो 卐वसूना॰ रुद्राणा मादित्याना॰ सदसि सीद 卐जुहू 卐रुपभृ 卐द्ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सी 卐दैता असद ❀'2' न्थसुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि माँ यज्ञनियम्।। 20।। (बाहुरसि प्रिये सदसि पञ्चदश च। 11।)

❀卐भुवन मसि वि प्रथस्वाग्ने यष्टरिद न्नमः। 卐जुह्वे ह्यग्निस्त्वा ह्वयति देवयज्याया 卐उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया 卐अग्नाविष्णू मा वा मव क्रमिषँ वि जिहाथां मा मा सन्ताप्तँ लोकं मे लोककृतौ कृणुतँ 卐विष्णो स्स्थानमसीत इन्द्रो अकृणो द्वीर्याणि 卐समारभ्योर्ध्वो अध्वरो दिविस्पृश मह्रुतो यज्ञो यज्ञपते रिन्द्रावान्थ्स्वाहा 卐बृहद्भाः 卐पाहि माऽग्ने दुश्चरिता दामा सुचरिते भज 卐मखस्य शिरोऽसि सञ्ज्योतिषा ज्योति रङ्क्ताम्।। 21।। (अह्रुत एकविंशतिश्च। 12।)

❀卐वाजस्य मा प्रसवेनोद्ग्राभेणो दग्रभीत्। 卐अथा सपत्ना॰ इन्द्रो मे निग्राभेणाधरा॰ अकः।।

卐 उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन्न्। 卐अथा सपत्ना निन्द्राग्नी मे विषूचीना न्व्यस्यताम्।।

卐 वसुभ्य स्त्वा 卐रुद्रेभ्यस्त्वा 卐ऽऽदित्येभ्यस्त्वा 卐ऽक्त॰ रिहाणा वियन्तु वयः। 卐प्रजाँ योनिं मा निर्मृक्ष 卐माप्यायन्ता माप ओषधयो 卐मरुतां पृषतय स्स्थ दिवम्।। 22।।❀ गच्छ ततो नो वृष्टि

मेरय। ꖛआयुष्मा अग्नेऽस्यायुर्मे पाहि चक्षुष्मा अग्नेऽसि चक्षुर्मे पाहि ꖛध्रुवाऽसि ꖛयं परिधिं पर्यधत्था अग्ने देव पणिभि र्वीयमाणः। तन्त एत मनु जोषं भरामि नेदेष त्वदपचेतयातै ꖛयज्ञस्य पाथ उप समितꣳ ꖛसꣳस्रावभागा स्स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च।। 23।। ❀ देवा इमाँ वाच मभि विश्वे गृणन्त आसद्यास्मि न्बर्हिषि मादयध्व ꖛमग्ने र्वा मपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्त ꖛन्धुरि धुर्यौ पात ꖛमग्ने ऽदब्धायो ऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरिता दविषन्नः पितुङ्कृणु सुषदा योनिꣳ स्वाहा ꖛदेवा गातुविदो गातुँ वित्त्वा गातु मित मनस स्पत इम न्नो देव देवेषु यज्ञꣳ स्वाहा ꖛवाचि स्वाहा ꖛवाते धाः।। 24।। (दिवञ्च वित्त्वा गातु न्त्रयोदश च। 13।)

**वै।का। 12 याज्या: 1 (एकोऽनुवाक: 1)**

❀ꖛउभा वा.मिन्द्राग्नी~ आहुवध्या- उभा राधस स्सह मादयध्यै। उभा दातारा.विषाꣳ रयीणा- मुभा वाजस्य सातये हुवे वाम्।।

ꖛ अश्रवꣳ हि भूरिदावत्तरा वाँ - विजामातु रुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्या- मिन्द्राग्नी~ स्तोम.ञ्जनयामि नव्यम्।।

ꖛ इन्द्राग्नी नवतिं पुरो- दासपत्नी रधूनुतम्। साक मेकेन कर्मणा।।

ꖛ शुचि.न्नु स्तोम.न्नवजात म-द्येन्द्राग्नी~ वृत्रहणा जुषेथाम्।। 25।। ❀उभा हि वाꣳ सुहवा जोहवीमि- ता वाजꣳ सद्य उशते धेष्ठा।।

ꖛ वयमु त्वा पथस्पते - रथन्न वाजसातये। धिये पूष न्नयुज्महि।।

ꖛ पथस्पथः परिपतिँ वचस्या - कामेन कृतो~ अभ्यान.ड्र्कम्। स नो रास च्छुरुध श्चन्द्राग्रा- धियन्धियꣳ सीषधाति प्र पूषा।।

ꖛ क्षेत्रस्य पतिना वयꣳ- हितेनेव जयामसि। गामश्वं पोषयित्वा - स नः।। 26।। ❀ मृडातीदृशे।।

ꖛ क्षेत्रस्य पते मधुमन्त मूर्मि- न्धेनुरिव पयो~ अस्मासु धुक्ष्व। मधुश्चुत ङ्घृतमिव सुपूत- मृतस्य नः पतयो मृडयन्तु।।

ꖛ अग्ने नय सुपथा राये~ अस्मान् - विश्वानि देव वयुनानि विद्वान्। युयोध्यस्म ज्जुहुराण मेनो- भूयिष्ठान्ते नमउक्तिं विधेम।।

卐 आ देवाना मपि पन्था मगन्म - यच्छक्नवाम तदनु प्रवोढुम्। अग्नि र्विद्वान्थ्स यजात्।। 27।। ❀ सेदु होता सो~ अध्वरान्थ्स ऋतू न्कल्पयाति।।

卐 यद्वाहिष्ठ न्तदग्नये - बृहदर्च विभावसो। महिषीव त्वद्रयि- स्त्वद्वाजा उदीरते।।

卐 अग्ने त्वं पारया नव्यो~ अस्मा-न्थ्स्वस्तिभि.रति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी - भवा तोकाय तनयाय शँ योः।।

卐 त्वमग्ने व्रतपा असि - देव आ मर्त्येष्वा। त्वँ यज्ञेष्वीड्यः।।

卐 यद्वो वयं प्रमिनाम व्रतानि - विदुषा न्देवा अविदुष्टरासः। अग्निष्ट द्विश्व मा पृणाति विद्वान् - येभि र्देवा॰ ऋतुभिः कल्पयाति।। 28।। (जुषेथा मा स नो यजादा त्रयोवि॰तिश्च।। 14।)

(इषे त्वा यज्ञस्य शुन्धध्व ङ्कर्मणे वा न्देवोऽवधूत न्धृष्टि स्सँ वपाम्या ददे प्रत्युष्ट ङ्कृष्णोऽसि भुवनमसि वाजस्योभा वा श्चतुर्दश।। 14। इषे दृ॰ह भुवन मष्टावि॰शतिः।। 28।। इषे त्वा कल्पयाति।)

## ≋◊≋ ≋◊≋प्रथमकाण्डे द्वितीयः प्रपाठकः

### सौ।का।1 आध्वर्यव मन्त्राः – 2 (त्रयोदशानुवाकाः 13)

❀卐 आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस 卐ओषधे त्रायस्वैनँ 卐स्वधिते मैन॰ हि॰सी 卐र्देवश्रू रेतानि प्र वपे 卐स्वस्त्युत्तराण्यशीया 卐ऽऽपो अस्मा न्मातर श्शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्र वहन्तु रिप्र 卐मु दाभ्य श्शुचि रा पूत एमि 卐सोमस्य तनूरसि तनुवं मे पाहि 卐महीनां पयोऽसि 卐वर्चोधा असि वर्चः।। 1।। ❀ मयि धेहि 卐वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहि 卐चित्पतिस्त्वा पुनातु 卐वाक्पतिस्त्वा पुनातु 卐देवस्त्वा सविता पुना त्वच्छिद्रेण पवित्रेण वसो स्सूर्यस्य रश्मिभि 卐स्तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेय 卐मा वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह 卐इन्द्राग्नी द्यावापृथिवी आप ओषधी 卐स्त्वन्दीक्षाणा मधिपति रसीह मा सन्तं पाहि।। 2।। (वर्च ओषधीरष्टौ च। 1।)

❀卐आकूत्यै प्रयुजेऽग्नये स्वाहा 卐मेधायै मनसेऽग्नये स्वाहा 卐दीक्षायै तपसेऽग्नये स्वाहा 卐सरस्वत्यै पूष्णेऽग्नये स्वाहा 卐ऽऽपो देवी र्बृहती र्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा 卐विश्वे देवस्य नेतु र्मर्तो वृणीत सख्यँ विश्वे राय इषुध्यसि द्युम्नँ वृणीत पुष्यसे 卐स्वाहर्क्सामयो श्शिल्पे स्थ स्ते वा.मारभे ते मा।। 3।। ❀ पातमाऽऽस्य यज्ञस्योदृच 卐इमा न्धियँ॰ शिक्षमाणस्य देव क्रतु न्दक्षं वरुण स॰ शिशाधि ययाऽति विश्वा दुरिता तरेम सुतर्माण मधि नाव॰ रुहे

卐मोगस्याङ्गिर स्यूर्णम्रदा ऊर्जं मे यच्छ 卐पाहि मा मा मा हि॰सी 卐र्विष्णो श्शर्मासि शर्म यजमानस्य शर्म मे यच्छ 卐नक्षत्राणां माऽतीकाशा त्पा 卐हीन्द्रस्य योनि रसि।। 4।। ❀ मा मा हि॰सीঃ 卐कृष्यै त्वा सुसस्यायै 卐सुपिप्पलाभ्य स्त्वौषधीभ्य 卐स्सूपस्था देवो वनस्पति 卐रूर्ध्वो मा पाह्योदृच स्स्वाहा 卐यज्ञं मनसा स्वाहा द्यावापृथिवीभ्या॰ स्वाहोरो रन्तरिक्षा थ्स्वाहा यज्ञँ वाता दा रभे।। 5।। (मा योनिरसि त्रि॰शच्च। 2।)

❀卐दैवी न्धियं मनामहे सुमृडीका मभिष्टये वर्चोधाँ यज्ञवाहस॰ सुपारा नो असद्वशे।। 卐ये देवा मनोजाता मनोयुज स्सुदक्षा दक्षपितार स्ते नঃ पान्तु ते नोऽवन्तु तेभ्यो नम स्तेभ्य 卐स्स्वाहाऽग्ने त्व॰ सु जागृहि वय॰ सु मन्दिषीमहि गोपाय न स्स्वस्तये प्रबुधे नঃ पुनर्ददः।
卐त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वम्।। 6।। ❀ यज्ञेष्वीड्यः।।

卐विश्वे देवा अभि मामाऽववृत्र 卐न्पूषा सन्या सोमो राधसा 卐देव स्सविता वसो र्वसुदावा रास्वेय थ्सोमा ऽऽभूयो भर मा पृण न्पूर्त्या वि राधि माऽह मायुषा 卐चन्द्र मसि मम भोगाय भव 卐वस्त्र मसि मम भोगाय भ 卐 वोस्त्रासि मम भोगाय भव 卐हयोऽसि मम भोगाय भव 卐।। 7।। ❀ छागोऽसि मम भोगाय भव 卐मेषोऽसि मम भोगाय भव 卐वायवे त्वा 卐वरुणाय त्वा 卐निरृत्यै त्वा 卐रुद्राय त्वा 卐देवी रापो अपा.न्नपा.द्य ऊर्मिर् हविष्य इन्द्रियावा न्मदिन्तम स्तँ वो माऽव क्रमिष मच्छिन्न न्तन्तुं पृथिव्या अनु गेषं 卐भद्रा दभि श्रेयঃ प्रेहि बृहस्पतिঃ पुरएता ते अ 卐स्त्वथेमव स्य वर आ पृथिव्या 卐आरे शत्रू न्कृणुहि सर्ववीर 卐एद मगन्म देवयजनं पृथिव्या विश्वे देवा यदजुषन्त पूर्व ऋक्सामाभ्याँ यजुषा सन्तरन्तो राय स्पोषेण समिषा मदेम।। 8।। (आ त्व॰ हयोऽसि मम भोगाय भव स्य पञ्चवि॰शतिश्च। 3।)

❀卐इयन्ते शुक्र तनू रिदँ वर्च स्तया सं भव भ्राज ङ्गच्छ 卐जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसঃ प्रसवे वाचो यन्त्र मशीय स्वाहा 卐शुक्रम.स्यमृत.मसि वैश्वदेव॰ हवि 卐स्सूर्यस्य चक्षु राऽरुह मग्ने.रक्ष्णঃ कनीनिकाँ यदेतशेभि रीयसे भ्राजमानो विपश्चिता 卐चिदसि मनाऽसि धीरसि दक्षिणा।। 9।। असि यज्ञियाऽसि क्षत्रिया ऽस्यदिति रस्युभयत.श्शीर्ष्णी सा न स्सुप्राची सुप्रतीची सं भव 卐मित्रस्त्वा पदि बध्नातु 卐पूषाऽध्वनঃ पात्विन्द्रा.याध्यक्षायानु त्वा माता मन्यता मनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्य स्सा देवि देव मच्छेहीन्द्राय सोम॰ रुद्रस्त्वाऽऽवर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या।। 10।। (दक्षिणा सोमसखा पञ्च च। 4।)

☃❀卐वस्व्य॑सि卐रु॒द्राऽस्य॑ 卐दिति॑र 卐स्यादि॒त्याऽसि॑ 卐शु॒क्राऽसि॑- 卐च॒न्द्राऽसि॑ 卐बृह॒स्पति॑स्त्वा सु॒म्ने र॑ण्वतु रु॒द्रो वसु॑भि रा चि॑केतु 卐पृथि॒व्यास्त्वा॑ मू॒र्धन्ना जि॑घर्मि दे॒वय॑जन इडा॑याः प॒दे घृ॒तव॑ति स्वाहा॑ 卐परि॑लिखित॒ꣳ रक्षः॒ परि॑लिखिता॒ अरा॑तय इ॒दम॒हꣳ रक्ष॑सो ग्री॒वा॑ अपि॑ कृन्तामि॒ यो॑ऽस्मा न्द्वेष्टि॒ यञ्च॑ व॒य न्द्वि॒ष्म इ॒द म॑स्य ग्री॒वाः।। 11।❀ अपि॑ कृन्ता 卐म्य॒स्मे राय॒ 卐स्त्वे राय॒ 卐स्तोते॒ राय॒ 卐स्सन्दे॑वि दे॒व्योर्व॑श्या॒ पश्य॑स्व॒ 卐त्वष्टी॑मती ते सपेय सु॒रेता॒ रेतो॒ दधा॑ना वी॒रँ वि॑दे॒य॒ तव॑ स॒न्दृशि॒ 卐माऽहꣳ रा॒यस्पोषे॑ण॒ वि यो॑षम्।। 12।। (अस्य ग्रीवा एकान्न त्रिꣳशच्च। 5।)

☃❀卐अꣳशुना॑ ते अꣳशुः॒ पृच्य॑तां॒ परु॑षा॒ परु॑ र्ग॒न्धस्ते॒ काम॑ मवतु॒ मदा॑य॒ रसो॒ अच्यु॑तो॒ऽमात्यो॑ऽसि शु॒क्रस्ते॒ ग्रहो॒ 卐ऽभि त्य.न्दे॒वꣳ स॑वि॒तार॑ मू॒ण्योः॑ क॒विक्र॑तु॒ मर्चा॑मि स॒त्यस॑वसꣳ रत्न॒धा म॒भि प्रि॒यं म॒तिं मू॒र्ध्वा यस्या॒मति॒ र्भा अदि॑द्युत.थ्स॒वीम॑नि॒ हिर॑ण्यपाणि रमिमीत सु॒क्रतुः॑ कृ॒पा सुवः॑। 卐प्र॒जाभ्य॑स्त्वा 卐प्रा॒णाय॑ त्वा 卐व्या॒नाय॑ त्वा 卐प्र॒जा स्त्व मनु॒ प्राणि॑हि प्र॒जा स्त्वामनु॒ प्राण॑न्तु।। 13।। (अनु॑ स॒प्त च। 6।)

☃❀卐सोम॑न्ते क्रीणा.म्यू॒र्जस्व॑न्तं॒ पय॑स्वन्तं वी॒र्या॑वन्त मभिमाति॒षाहꣳ॑ शु॒क्रन्ते॑ शु॒क्रेण॑ क्रीणामि च॒न्द्र.ञ्च॒न्द्रेणा॒मृत॑ म॒मृते॑न स॒म्यत्ते॒ गो 卐र॒स्मे च॒न्द्राणि॑ 卐तप॑स स्त॒नूर॑सि प्र॒जाप॑ते॒ र्वर्ण॒ स्तस्या॑स्ते स॒हस्र॒पोषं पुष्य॑न्त्या श्च॒रमे॑ण प॒शुना॑ क्रीणा 卐म्य॒स्मे॒ ते॒ बन्धु॒ 卐र्मयि॑ ते॒ राय॑ श्श्रयन्ता 卐म॒स्मे ज्योति॑ 卐स्सोमविक्र॒यिणि॒ तमो॒ 卐मि॒त्रो न॒ एहि॒ सुमि॑त्रधा 卐इन्द्र॑स्यो॒रु मा वि॑श॒ दक्षि॑ण मु॒श न्नु॒शन्त॑ꣳ स्यो॒न स्स्यो॒नꣳ 卐स्वान॒ भ्राजाङ्घा॑रे॒ बम्भा॑रे॒ हस्त॒ सुह॑स्त॒ कृशा॑न.वे॒ते व॒ स्सो॒मक्रय॑णा॒ स्तान्र॑क्षध्वं॒ मा वो॒ दभन्न्।। 14।। (ऊरु न्द्वाविꣳशतिश्च। 7।)

☃❀卐उदायु॑षा स्वा॒यु॒षो.दोष॑धीना॒ꣳ रसे॑नो.त्प॒र्जन्य॑स्य॒ शुष्मे॒णो.द॑स्था म॒मृता॒ꣳ अनु॑। 卐उ॒र्व॑न्तरि॑क्ष मन्वि॒ 卐ह्यदि॑त्या॒ स्सदो॒ 卐ऽस्यदि॑त्या॒ स्सद॒ आ सी॑ 卐दास्त॑भ्नाद्या मृ॑ष॒भो अ॒न्तरि॑क्ष ममिमीत वरि॒माणं॑ पृथि॒व्या आऽसी॑द॒ द्विश्वा॒ भुव॑नानि स॒म्राड्विश्वेत्तानि॒ वरु॑णस्य व्र॒तानि॑ 卐वने॑षु॒ व्य॑न्तरि॑क्ष न्तता॒न वाज॒ मर्व॑थ्सु॒ पयो॑ अघ्नि॒यासु॑ हृ॒त्सु।। 15।।❀ क्रतुँ॒ वरु॑णो वि॒क्ष्व॑ग्नि न्दि॒वि सूर्य॑ मदधा.थ्सोम॒ मद्रा॒ 卐वुदु॒ त्य.ञ्जा॒तवे॑दसँ दे॒वँ व॑हन्ति के॒तवः॑। दृ॒शे विश्वा॑य॒ सूर्य॑म्। 卐उस्रा.वे॒त न्धूर्षाहा वन॒श्रू अवी॑रह॒णौ ब्र॑ह्म॒चोद॑नौ 卐वरु॑णस्य॒ स्कम्भ॑न मसि 卐वरु॑णस्य स्कम्भ॒सर्ज॑नमसि 卐प्रत्य॑स्तो॒ वरु॑णस्य॒ पाशः॑।। 16।। (हृथ्सु पञ्चत्रिꣳशच्च। 8।)

卐प्र च्यवस्व भुवस्पते विश्वा.न्यभि धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसु रा दघ 卐च्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवै स्सङ्स्कृतँ यजमानस्य स्वस्त्ययन्य. 卐स्यपि पन्था मगस्महि स्वस्तिगा मनेहसँ येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु 卐नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत 卐वरुणस्य स्कम्भन.मसि 卐वरुणस्य स्कम्भसर्जन म 卐स्युन्मुक्तो वरुणस्य पाशः।। 17।। (मित्रस्य त्रयोविꣳशतिश्च। 9।)

卐-- अग्ने रातिथ्य.मसि विष्णवे त्वा 卐--सोमस्यातिथ्य.मसि विष्णवे त्वा 卐--ऽतिथे रातिथ्य.मसि विष्णवे त्वा 卐--ऽग्नये त्वा रायस्पोषदाव्न्ने विष्णवे त्वा 卐-- श्येनाय त्वा सोमभृते विष्णवे त्वा 卐या ते धामानि हविषा यजन्ति ता ते विश्वा परिभू रस्तु यज्ञ.ङ्गयस्फानः प्रतरण स्सुवीरो ऽवीरहा प्र चरा सोम दुर्या 卐नदित्या स्सदो 卐ऽस्यदित्या स्सद आ।। 18।। सीद 卐वरुणोऽसि धृतव्रतो 卐वारुण.मसि शँयो र्देवानाꣳ सख्यान्मा देवाना मपस श्छित्स्म 卐ह्यापतये त्वा गृह्णामि 卐परिपतये त्वा गृह्णामि 卐तनूनप्त्रे त्वा गृह्णामि 卐शाक्वराय त्वा गृह्णामि 卐शक्म न्नोजिष्ठाय त्वा गृह्णा 卐म्यनाधृष्ट मस्यनाधृष्य न्देवाना मोजोऽभिशस्तिपा अनभिशस्तेन्य 卐मनु मे दीक्षा न्दीक्षापति र्मन्यता मनु तप स्तपस्पति रञ्जसा सत्य.मुप गेषꣳ सुविते मा धाः।। 19।। (आ मैकञ्च। 10।)

卐अꣳशुरꣳशु स्ते देव सोमाऽऽप्यायता मिन्द्रायैकधनविद आ तुभ्य मिन्द्रः प्यायता मा त्वमिन्द्राय प्यायस्वा 卐ऽऽप्यायय सखी न्थ्सन्या मेधया स्वस्ति ते देव सोम सुत्या मशी 卐येष्टा रायः प्रेषे भगायर्त मृतवादिभ्यो नमो दिवे नमः पृथिव्या 卐अग्ने व्रतपते त्वँ व्रतानाँ व्रतपति रसि या मम तनू रेषा सा त्वयि।। 20।। या तव तनू रियꣳ सा मयि सह नौ व्रतपते व्रतिनो र्व्रतानि 卐या ते अग्ने रुद्रिया तनू स्तया नः पाहि तस्यास्ते स्वाहा 卐या ते अग्नेऽयाशया- 卐-- रजाशया- 卐-- हराशया तनू र्वर्षिष्ठा गह्वरेष्ठोग्रँ वचो अपा वधी न्त्वेषँ वचो अपा वधीꣳ स्वाहा।।। 21।। (त्वयि चत्वारिꣳशच्च। 11।)

卐वित्तायनी मेऽसि 卐तिक्तायनी मे 卐ऽस्यवता न्मा नाथित 卐मवता न्मा व्यथितँ 卐विदे रग्नि र्नभो नामाग्ने अङ्गिरो योऽस्यां पृथिव्या म-.स्यायुषा नाम्नेहि 卐यत्तेऽनाधृष्ट न्नाम यज्ञिय न्तेन त्वाऽऽदधे 卐--ऽग्ने अङ्गिरो यो द्वितीयस्या --, 卐-- न्तृतीयस्यां पृथिव्या मस्या 卐युषा नाम्नेहि 卐यत्तेनाधृष्ट न्नाम।। 22।। यज्ञिय न्तेन त्वाऽऽदधे 卐सिꣳहीरसि महिषी र 卐स्युरु प्रथस्वोरु ते यज्ञपतिः प्रथता 卐न्ध्रुवाऽसि 卐देवेभ्य श्शुन्धस्व 卐देवेभ्य श्शुम्भ 卐स्वेन्द्रघोषस्त्वा वसुभिः पुरस्ता त्पातु

卐मनोजवास्त्वा पितृभि र्दक्षिणतः पातु 卐प्रचेतास्त्वा रुद्रैः पश्चा त्पातु 卐विश्वकर्मा त्वाऽऽदित्यै रुत्तरतः पातु 卐सिꣳहीरसि सपत्नसाही स्वाहा 卐सिꣳहीरसि सुप्रजावनि स्स्वाहा 卐सिꣳहीः।। 23।।❀ असि रायस्पोषवनि स्स्वाहा 卐सिꣳही रस्यादित्यवनि स्स्वाहा 卐सिꣳही र.स्या वह देवा न्देवयते यजमानाय स्वाहा 卐भूतेभ्य स्त्वा 卐विश्वाऽऽयु रसि पृथिवीन्दꣳह 卐ध्रुवक्षिद.स्यन्तरिक्ष. न्दꣳ 卐हाच्युतक्षिदसि दिव न्दꣳ 卐हाग्ने र्भस्मास्यग्नेः पुरीषमसि।। 24।। (नाम सुप्रजावनि स्स्वाहा सिꣳहीः पञ्चत्रिꣳशच्च। 12।)

❀卐युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनावि.देक इन्मही देवस्य सवितुः परिष्टुतिः।।

卐 सुवाग्देव दुर्याꣳ आ वद देवश्रुतौ देवेष्वा घोषेथा 卐मा नो वीरो जायता ङ्कर्मण्यो यꣳ सर्वेऽनुजीवाम यो बहूना मसद्वशी।।

卐 इदँ विष्णु र्वि चक्रमे त्रेधा नि दधे पदम्। समूढमस्य।। 25।।❀ पाꣳसुर 卐इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे यशस्ये। व्यस्कभ्ना द्रोदसी विष्णु रेते दाधार पृथिवी मभितो मयूखैः।। 卐प्राची प्रेत मध्वर ङ्कल्पयन्ती ऊर्ध्वँ यज्ञ न्नयतं मा जीह्वरत 卐मत्र रमेथाँ वर्ष्म न्पृथिव्या 卐दिवो वा विष्ण.वुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षा द्धस्तौ पृणस्व बहुभि र्वसव्यैरा प्र यच्छ।। 26।।❀ दक्षिणा.दोत सव्यात्। 卐विष्णो.र्नुकँ वीर्याणि प्र वोचँ यः पार्थिवानि विममे रजाꣳसि यो अस्कभाय दुत्तरꣳ सधस्थँ विचक्रमाण स्त्रेधोरुगायो 卐विष्णो रराट मसि 卐विष्णोः पृष्ठ मसि 卐 विष्णो-श्श्नप्त्रे स्थो 卐विष्णो स्स्यूरसि 卐विष्णो र्ध्रुव.मसि 卐वैष्णव.मसि विष्णवे त्वा।। 27।। (अस्य यच्छैकान्न चत्वारिꣳशच्च। 13।)

**वै।का।12 याज्या: 2 (एकोऽनुवाक: 1)**

❀卐कृणुष्व पाजः प्रसिति न्न पृथ्वीँ याहि राजेवामवाꣳ इभेन। तृष्वी मनु प्रसिति न्द्रूणानोऽस्ताऽसि विध्य रक्षस स्तपिष्ठैः।।

卐 तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः। तपूꣳष्यग्ने जुह्वा पतङ्गा नसन्दितो वि सृज विष्वगुल्काः।।

卐 प्रति स्पशो वि सृज तूर्णितमो भवा पायु र्विशो अस्या अदब्धः। यो नो दूरे अघशꣳसः।। 28।। यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत्।।

卐 उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राꣳ ओषता त्तिग्महेते। यो नो अरातिꣳ समिधान चक्रे नीचा तन्ध.क्ष्यतस न्न शुष्कम्।।

卐 ऊर्ध्वो भव प्रति विध्या.ध्यस्म दावि.ष्कृणुष्व दैव्या.न्यग्ने। अव स्थिरा तनुहि यातुजूना ञ्जामि मजामिं प्र मृणीहि शत्रून्।।

卐 स ते।। 29।।❀ जानाति सुमतिँ यविष्ठ य ईवते ब्रह्मणे गातु मैरत्। विश्वा.न्यस्मै सुदिनानि रायो द्युम्ना.न्यरो वि दुरो अभि द्यौत्।।

卐 सेदग्ने अस्तु सुभग स्सुदानु र्यस्त्वा नित्येन हविषा य उक्थैः। पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना साऽसदिष्टिः।।

卐 अर्चामि ते सुमति ङ्घोष्यर्वा.ख्सन्ते वावाता जरताम्।। 30।।❀ इयङ्गीः। स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारये रनु द्यून्।।

卐 इह त्वा भूर्या चरे दुप त्म.न्दोषावस्त र्दीदिवाꣳस मनु द्यून्। क्रीडन्तस्त्वा सुमनस स्सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाम्।।

卐 यस्त्वा स्वश्व स्सुहिरण्यो अग्न उपयाति वसुमता रथेन। तस्य त्राता भवसि तस्य सखा यस्त आतिथ्य मानुष.ग्जुजोषत्।।

卐 महो रुजामि।। 31।❀ बन्धुता वचोभि स्तन्मा पितु र्गोतमा दन्वियाय। त्वन्नो अस्य वचस श्चिकिद्धि होत र्यविष्ठ सुक्रतो दमूनाः।।

卐 अस्वप्नज स्तरणय स्सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः। ते पायव स्सध्रियञ्चो निषद्याग्ने तव नꣳ पान्त्वमूर।।

卐 ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्ध न्दुरिता दरक्षन्न्। ररक्ष तान्थ्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह।। 32।।❀ देभुः।।

卐 त्वया वयꣳ सधन्य स्त्वोता स्तव प्रणीत्यश्याम वाजान्। उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण।।

卐 अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमान.ङ्गृभाय। दहाशसो रक्षसꣳ पाह्यस्मा न्द्रुहो निदो मित्रमहो अवद्यात्।।

卐 रक्षोहणँ वाजिन मा जिघर्मि मित्रं प्रथिष्ठ मुप यामि शर्म। शिशानो अग्निः क्रतुभि स्समिद्ध स्स नो दिवा।। 33।। ❀ स रिषः पातु नक्तम्।।

卐 वि ज्योतिषा बृहता भात्यग्नि रावि र्विश्वानि कृणुते महित्वा। प्रादेवी र्माया स्सहते दुरेवा शिशीते शृङ्गे रक्षसे विनिक्षे।।

卐 उत स्वानासो दिविषन्त्वग्ने स्तिग्मा ऽऽयुधा रक्षसे हन्तवा उ। मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः।। 34।। (अघशꣳस स्स ते जरताꣳ रुजामि ह दिवैकचत्वारिꣳशच्च। 14।

आप उन्द.न्त्वाकूत्यै दैवी मियन्ते वस्व्यस्यꣳशुना ते सोमन्त उदायुषा प्र च्यवस्वाग्ने रातिथ्य मꣳशुरꣳशु र्वित्तायनी मेऽसि युञ्जते कृणुष्व पाज श्चतुर्दश। 14। आपो वस्व्यसि या तवेयञ्ची श्चतुस्त्रिꣳशत्।। 34।। आप उन्द.न्त्वदेवीः।)

## ≤◊≥ ≤◊≥प्रथमकाण्डे तृतीयः प्रपाठकः

### सौ।का।1 आध्वर्यव मन्त्राः – 3 (त्रयोदशानुवाकाः 13)

❀卐देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्या मा ददे 卐ऽभ्रि रसि नारि रसि 卐परिलिखितꣳ रक्षः परिलिखिता अरातय इद महꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मा न्द्वेष्टि यञ्च वयन्द्विष्म इद मस्य ग्रीवा अपि कृन्तामि 卐दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा 卐शुन्धताँ लोकः पितृषदनो 卐यवोऽसि यवयास्मद्द्वेषः।। 1।। ❀ यवयारातीः 卐पितृणाꣳ सदन म 卐स्युद्दिवꣻ स्तभाना ऽऽन्तरिक्षं पृण पृथिवी न्दꣳह 卐द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयो र्ध्रुवेण धर्मणा 卐ब्रह्मवनि.न्त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि 卐ब्रह्म दꣳह क्षत्र न्दꣳह प्रजा न्दꣳह रायस्पोष न्दꣳह 卐घृतेन द्यावापृथिवी आ पृणेथा 卐मिन्द्रस्य सदोऽसि 卐विश्वजनस्य छाया 卐परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धा ऽऽयु मनु वृद्धयो जुष्टा भवन्तु जुष्टय 卐इन्द्रस्य स्यूर 卐सीन्द्रस्य ध्रुव म 卐स्यैन्द्र मसीन्द्राय त्वा।। 2।। (द्वेष इमा अष्टादश च। 1।)

❀卐रक्षोहणो वलगहनो वैष्णवा न्खना 卐मीद मह न्तँ वलग मुद्वपामि यन्न स्समानो य.मसमानो निचखानेद.मेन मधर ङ्करोमि यो न स्समानो योऽसमानो ऽरातीयति गायत्रेण छन्दसा 卐ऽवबाढो वलगः 卐किमत्र 卐भद्र 卐न्तन्नौ सह 卐विराडसि सपत्नहा 卐सम्राडसि भ्रातृव्यहा 卐स्वराड.स्यभिमातिहा 卐विश्वाराडसि विश्वासा न्नाष्ट्राणाꣳ हन्ता।। 3।। ❀卐रक्षोहणो वलगहनः प्रोक्षामि वैष्णवा 卐न्रक्षोहणो वलगहनोऽव नयामि वैष्णवान् 卐यवोऽसि यवयास्म.द्वेषो यवयाराती

卐रक्षोहणो वलगहनोऽव स्तृणामि वैष्णवा 卐न्रक्षोहणो वलगहनोऽभि जुहोमि वैष्णवा 卐न्रक्षोहणौ वलगहना वुप दधामि वैष्णवी 卐रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी 卐रक्षोहणौ वलगहनौ परि स्तृणामि वैष्णवी 卐रक्षोहणौ वलगहनौ वैष्णवी 卐बृह.न्नसि बृहद्ग्रावा बृहती मिन्द्राय वाचँ वद।। 4।।
(हन्तेन्द्राय द्वे च। 2।)

❀卐विभूरसि प्रवाहणो- 卐वह्निरसि हव्यवाहन- 卐श्श्वात्रोऽसि प्रचेता- 卐स्तुथोऽसि विश्ववेदा- 卐उशिगसि कवि- 卐रङ्घारिरसि बम्भारि- 卐रवस्युरसि दुवस्वा- 卐ञ्छुन्ध्यूरसि मार्जालीय- 卐स्सम्राडसि कृशानुः- 卐परिषद्योऽसि पवमानः- 卐प्रतक्वाऽसि नभस्वा- 卐नसंमृष्टोऽसि हव्यसूद- 卐ऋतधामाऽसि सुवर्ज्योति- 卐र्ब्रह्मज्योति रसि सुवर्धा- 卐माऽजोऽस्येकपा- 卐दहिरसि बुध्नियो- रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।। 5।। (अनीकेनाष्टौ च। 3।)

❀卐त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्ताऽसि वरूथꣴ स्वाहा 卐जुषाणो अप्तु राज्यस्य वेतु स्वाहा 卐ऽयन्नो अग्नि र्वरिवः कृणो त्वयं मृधः पुर एतु प्रभिन्दन्न्। 卐अयꣳ शत्रू न्जयतु जर्हृषाणोऽयँ वाज ञ्जयतु वाजसातौ।। 卐उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि। 卐घृत.ङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर।। 卐सोमो जिगाति गातुवित्।। 6।। ❀ देवानामेति निष्कृतमृतस्य योनि मासद 卐मदित्या स्सदो 卐ऽस्यदित्या स्सद आ सी 卐दैष वो देव सवित स्सोम स्तꣳ रक्षध्वं मा वो दभ 卐देतत्त्वꣳ सोम देवो देवा नुपागा इदमहं मनुष्यो मनुष्यान्थ्सह प्रजया सह रायस्पोषेण 卐नमो देवेभ्य 卐स्स्वधा पितृभ्य 卐इदमह न्निर्वरुणस्य पाशा 卐थ्सुव रभि।। 7।। ❀ वि ख्येषँ 卐वैश्वानर ञ्ज्योति 卐रग्ने व्रतपते त्वँ व्रतानाँ व्रतपतिरसि या मम तनू स्त्वय्यभू दियꣳ सा मयि या तव तनू र्मय्यभू देषा सा त्वयि यथायथ न्नौ व्रतपते व्रतिनो र्व्रतानि।। 8।। (गातुवि दभ्येकत्रिꣳशच्च। 4।)

❀卐अत्यन्या नगा न्नान्या नुपागा मर्वाक्त्वा परै रविदं परोऽवरै स्तन्त्वा जुषे वैष्णव न्देवयज्यायै 卐देवस्त्वा सविता मध्वाऽन 卐क्त्वोषधे त्रायस्वैनꣴ 卐स्वधिते मैनꣳ हिꣳसी 卐र्दिव मग्रेण मा लेखी रन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या सं भव 卐वनस्पते शतवल्शो वि रोह 卐सहस्रवल्शा वि वयꣳ रुहेम 卐यन्त्वाऽयꣴ स्वधिति स्तेतिजानः प्रणिनाय महते सौभगा 卐याच्छिन्नो राय स्सुवीरः।। 9।।
(य न्दश च। 5।)

❀卐पृथिव्यै त्वा 卐ऽन्तरिक्षाय त्वा 卐दिवे त्वा 卐शुन्धताँ लोकः पितृषदनो 卐यवोऽसि यवयास्म द्वेषो यवयारातीः 卐पितृणाꣳ सदनमसि 卐स्वावेशोऽस्यग्रेगा नेतृणाँ वनस्पतिरधि त्वा स्थास्यति तस्य

वित्ता फद्देवस्त्वा सविता मध्वाऽनक्तु फसुपिप्पलाभ्य स्त्वौषधीभ्य फउद्दिवङ्ग् स्तभानान्तरिक्षं पृण पृथिवी मुपरेण दृ९ह फते ते धामा.न्युश्मसि।। 10।। ❀ गमध्ये गावो यत्र भूरिश्रृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पद मव भाति भूरेः।। फविष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्य स्सखा।। फतद्विष्णोः परमं पद९ सदा पश्यन्ति सूरयः। दिवीव चक्षु राततम्। फब्रह्मवनिं त्वा क्षत्रवनि९ सुप्रजावनि९ रायस्पोषवनिं पर्यूहामि फब्रह्म दृ९ह क्षत्र न्दृ९ह प्रजा न्दृ९ह रायस्पोष न्दृ९ह फपरिवी रसि परि त्वा दैवी विंशो व्ययन्तां परीम९ रायस्पोषो यजमानं मनुष्या फअन्तरिक्षस्य त्वा साना.वव गूहामि।। 11।। (उश्मसी पोष मेकान्न वि९शतिश्च। 6।)

❀फइषे फत्वोपवी रस्युपो देवा न्दैवी विंशः प्रागु र्वह्नी रुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्ता न्देव त्वष्ट र्वसु रण्व रेवती रमध्व फमग्ने र्जनित्र मसि फवृषणौ स्थ फउर्वश्य फस्यायुरसि पुरूरवा फघृतेनाक्ते वृषण न्दधाथा फङ्गायत्र ञ्छन्दोऽनु प्र जायस्व फत्रैष्टुभ फ-- ज्ञागत ञ्छन्दोऽनु प्र जायस्व फभवतम्।। 12।। ❀ न स्समनसौ समोकसा वरेपसौ।। मा यज्ञ९ हि९सिष्टं मा यज्ञपति ज्ञातवेदसौ शिवौ भवत मद्य नः। फअग्नावग्नि श्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया क र्भागधेयम्।। 13।। (भवत मेकत्रि९शच्च। 7।)

❀फ-- आ दद फऋतस्य त्वा देव हविः पाशेना ऽऽरभे फधर्षा मानुषा फनद्भ्य स्त्वौषधीभ्यः प्रोक्षा फम्यपां पेरुरसि फस्वात्त ञ्चित्सदेव९ हव्य मापो देवी स्स्वदतैन९ फसन्ते प्राणो वायुना गच्छता९ फ सँ यजत्रै रङ्गानि फसँ यज्ञपति राशिषा फघृतेनाक्तौ पशु न्त्रायेथा९ फरेवती र्यज्ञपतिं प्रियधाऽऽविश फतोरो अन्तरिक्ष सजू र्देवेन।। 14।। ❀ वातेनास्य हविष स्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपति न्धाः फपृथिव्या स्संपृचः पाहि फनमस्त आता फनानर्वा प्रेहि घृतस्य कुल्या मनु सह प्रजया सह रायस्पोषेणा फऽऽपो देवी श्शुद्धायुव श्शुद्धा यूय न्देवा९ ऊढ्व९ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म।। 15।। (देवेन चतुश्चत्वारि९शच्च। 8।)

❀फवाक्त आ प्यायतां फप्राणस्त आ प्यायता फञ्चक्षुस्त आ प्यायता९ फश्रोत्र न्त आ प्यायताँ फया ते प्राणा न्छुग्जगाम या चक्षु र्या श्रोत्रँ यत्ते क्रूरँ यदास्थित न्तत्त आ प्यायता न्तत्त एतेन शुन्धता फन्नाभिस्त आ प्यायतां फपायुस्त आ प्यायता९ फशुद्धा श्चरित्रा श्शमद्भ्यः।। 16।। ❀ शमोषधीभ्य श्शं पृथिव्यै फशमहोभ्या फमोषधे त्रायस्वैनङ्ग् फस्वधिते मैन९ हि९सी फरक्षसां भागोऽ फसीद मह९ रक्षोऽधम न्तमो नयामि योऽस्मा न्द्वेष्टि यञ्च वयं द्विष्म फइद मेन मधम न्तमो नया फमीषे त्वा फघृतेन

द्यावापृथिवी प्रोर्ण्वाथा ॥मच्छिन्नो राय स्सुवीर ॥उर्वन्तरिक्ष मन्विहि ॥वायो वीहि स्तोकाना९ स्वा ॥होर्ध्वनभसं मारुत ङ्गच्छतम्।। 17।। (अघ्यो वीहि पञ्च च। 9।)

॥सन्ते मनसा मन स्सं प्राणेन प्राणो जुष्ट न्देवेभ्यो हव्य ङ्घृतव त्स्वा ॥हैन्द्रः प्राणो अङ्गेअङ्गे नि देध्य दैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुव द्देव त्वष्ट भूँरि ते स९स मेतु विषुरूपा यथ्सलक्ष्माणो भवथ देवत्रा यन्त मवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥श्रीर.स्यग्निस्त्वा श्रीणा त्वाप स्समरिणन्वातस्य।। 18।। त्वा ध्रज्यै पूष्णो र९ह्या अपा मोषधीना९ रोहिष्यै ॥घृत ङ्घृतपावानः पिबत वसाँ वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय ॥दिशः ॥प्रदिश ॥आदिशो ॥विदिश ॥उद्दिश स्वाहा ॥दिग्भ्यो नमो दिग्भ्यः।। 19।। (वातस्याष्टावि९शतिश्च। 10।)

॥समुद्र ङ्गच्छ स्वाहा ॥ऽन्तरिक्ष ङ्गच्छ स्वाहा ॥देव९ सवितार ङ्गच्छ स्वाहा ॥ऽहोरात्रे गच्छ स्वाहा ॥मित्रावरुणौ गच्छ स्वाहा ॥सोम ङ्गच्छ स्वाहा ॥यज्ञ ङ्गच्छ स्वाहा छन्दा९सि गच्छ स्वाहा ॥द्यावापृथिवी गच्छ स्वाहा ॥नभो दिव्य ङ्गच्छ स्वाहा ॥ऽग्निँ वैश्वानर ङ्गच्छ स्वाहा ॥ऽद्भ्य स्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनू न्त्वचं पुत्र न्नप्तार मशीय ॥शुगसि तमभि शोच योऽस्मा न्द्वेष्टि यञ्च वय न्द्विष्मो ॥धाम्नो धाम्नो राज न्नितो वरुण नो मुञ्च ॥यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च।। 20।। (असि षड्वि९शतिश्च। 11।)

॥हविष्मती रिमा आपो हविष्मा न्देवो अध्वरो हविष्मा९ आ विवासति हविष्मा९ अस्तु सूर्यः। ॥अग्ने वोंऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी स्सुम्ने मा ध ॥त्तेन्द्राग्नियो भागधेयी स्स्थ ॥मित्रावरुणयो भागधेयीस्स्थ ॥विश्वेषा न्देवानां भागधेयीस्स्थ ॥यज्ञे जागृत।। 21।। (हविष्मती श्चतुस्त्रि९शत्। 12।)

॥हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्व मिम मध्वर ङ्कृधि दिवि देवेषु होत्रा यच्छ ॥सोम राज.न्नेह्यव रोह मा भे र्मा मा सँ विक्था मा त्वा हि९सिषं प्रजा स्त्वमुपावरोह प्रजास्त्वा मुपावरोहन्तु ॥श्रृणो त्वग्नि स्समिधा हवं मे श्रृण्वन्त्वापो धिषणाश्च देवीः। श्रृणोत ग्रावाणो विदुषो नु।। 22।। यज्ञ९ श्रृणोतु देव स्सविता हवं मे। ॥देवी रापो अपा न्नपाद्य ऊर्मिर् हविष्य इन्द्रियावा न्मदिन्तम स्तन्देवेभ्यो देवत्रा धत्त शुक्र९ शुक्रपेभ्यो येषां भागस्स्थ स्वाहा ॥कार्षि.रस्यपापां मृध्र९ ॥समुद्रस्य वोऽक्षित्या उन्नये। ॥यमग्ने पृत्सु मर्त्य मा वो वाजेषु यञ्जुनाः। स यन्ता शश्वती रिषः।। 23।। (नु सप्तचत्वारि९शच्च। 13।)

**वै।का।12 याज्या: 3 (एकोऽनुवाक: 1)**

卐 त्वमग्ने रुद्रो असुरो महो दिव स्त्वᳪ शर्धो मारुतं पृक्ष ईशिषे। त्वँ वातै ररुणै र्यासि शङ्गय स्त्वं पूषा विधतᳵ पासि नु त्मना।।

卐 आ वो राजान मध्वरस्य रुद्रᳪ होतारᳪ सत्ययजᳪ रोदस्योः। अग्निं पुरा तनयित्नो रचित्ता द्धिरण्यरूप मवसे कृणुध्वम्।।

卐 अग्निर् होता निषसादा यजीया नुपस्थे मातु स्सुरभावु लोके। युवा कविᳵ पुरुनिष्ठः।। 24।।❀ ऋतावा धर्ता कृष्टीना मुत मध्य इद्धः।।

卐 साध्वी मक र्देववीति न्नो अद्य यज्ञस्य जिह्वा मविदाम गुह्याम्। स आयु राऽगा थ्सुरभि र्वसानो भद्रा मक र्देवहूति न्नो अद्य।।

卐 अक्रन्द दग्नि स्स्तनय न्निव द्यौᳵ क्षामा रेरिह द्वीरुध स्समञ्जन्न्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः।।

卐 त्वे वसूनि पुर्वणीक।। 25।।❀ होत र्दोषा वस्तो रेरिरे यज्ञियासः। क्षामेव विश्वा भुवनानि यस्मि'2'न्थ्सᳪ सौभगानि दधिरे पावके।।

卐 तुभ्य न्ता अङ्गिरस्तम विश्वा स्सुक्षितयᳵ पृथक्। अग्ने कामाय येमिरे।।

卐 अश्याम तङ्कामं मग्ने तवोत्यश्याम रयिᳪ रयिव स्सुवीरम्। अश्याम वाज मभि वाजयन्तोऽश्याम द्युम्न मजराजरन्ते।।

卐 श्रेष्ठँ यविष्ठ भारताग्ने द्युमन्त मा भर। ॰ 26।।❀ वसो पुरुस्पृहᳪ रयिम्।।

卐 स श्वितान स्तन्यतू रोचनस्था अजरेभि र्नानदद्भि र्यविष्ठः। यᳵ पावकᳵ पुरुतमᳵ पुरूणि पृथू.न्यग्नि रनुयाति भर्वन्न्।।

卐 आयुष्टे विश्वतो दध दय मग्नि र्वरेण्यः। पुनस्ते प्राण आऽयति परा यक्ष्मᳪ सुवामि ते।।

卐 आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनि रेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्र मभि।। 27।।❀ रक्षता दिमम्।।

卐 तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे। अग्ने जनामि सुष्टुतिम्।।

卐 दिवस्परि प्रथम ञ्जज्ञे अग्नि रस्म द्वितीयं परि जातवेदाः। तृतीय मफ्सु नृमणा अजस्र मिन्धान एन ञ्जरते स्वाधीः।।

卐 शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे। त्व.ङ्घृतेभि राहुतः।।

卐 दृशानो रुक्म उर्व्या व्यद्यौ दुर्मर्ष मायु श्श्रिये रुचानः। अग्नि रमृतो अभव द्वयोभिः।। 28।।❀ यदेन न्द्यौरजनय थ्सुरेताः।।

卐 आ यदिषे नृपति न्तेज आन ड्छुचि रेतो निषिक्त न्द्यौरभीके। अग्नि.श्शर्ध मनवद्यँ युवानꣳ स्वाधिय ञ्जनय.थ्सूदयच्च।।

卐 स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः। अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः।।

卐 अग्ने सहन्त मा भर द्युम्नस्य प्रासहा रयिम्। विश्वा यः।। 29।।❀ चर्षणी रभ्यासा वाजेषु सासहत्।।

卐 तमग्ने पृतनासहꣳ रयिꣳ सहस्व आ भर। त्वꣳ हि सत्यो अद्भुतो दाता वाजस्य गोमतः।।

卐 उक्षान्नाय वशाऽन्नाय सोमपृष्ठाय वेधसे। स्तोमै र्विधेमाग्नये।।

卐 वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्नि र्जनुषाऽज्मान्नम्। स त्वन्न ऊर्जसन ऊर्ज न्धा राजेव जे रवृके क्षेष्यन्तः।।

卐 अग्न आयूꣳषि।। 30।।❀ पवस आ सुवोर्ज मिषञ्च नः। आरे बाधस्व दुच्छुनाम्।।

卐 अग्ने पवस्व स्वपा अस्मे वर्च स्सुवीर्यम्। दध त्पोषꣳ रयिं मयि।।

卐 अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान् वक्षि यक्षि च।।

卐 स नः पावक दीदिवोऽग्ने देवाꣳ इहावह। उप यज्ञꣳ हविश्च नः।।

卐 अग्नि श्शुचिव्रततम श्शुचि र्विप्र श्शुचिः कविः। शुची रोचत आहुतः।।

卐 उदग्ने शुचय स्तव शुक्रा भ्राजन्त ईरते। तव ज्योतीꣳष्यर्चयः।। 31।। (पुरुनिष्ठः पुर्वणीक भराभि र्वयोभि र्य आयूꣳषि विप्र श्शुचि श्चतुर्दश च। 14।)

(देवस्य रक्षोहणो विभू स्त्वꣳ सोमात्यन्या नगां पृथिव्या इषे त्वाऽऽददे वाक्त्ते सन्ते समुद्रꣳ हविष्मतीर् हृदे त्वमग्ने रुद्र श्चतुर्दश।। 14।। देवस्य गमध्ये हविष्मतीः पवस एकत्रिꣳशत्।। 31।। देवस्यार्चयः।)

**सौ।का।1 ग्रहानुवाक मन्त्राः – 1 (द्विचत्वारिंशदनुवाकाः42)**

卐-- आ ददे 卐ग्रावाऽस्यध्वरकृ द्देवेभ्यो गम्भीर मिम मध्वर ङ्कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनि 卐मिन्द्राय त्वा वृत्रघ्न 卐इन्द्राय त्वा वृत्रतुर 卐इन्द्राय त्वाऽभिमातिघ्न 卐इन्द्राय त्वाऽऽदित्यवत 卐इन्द्राय त्वा विश्वदेव्यावते 卐श्वात्रास्स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवी र्देवत्रेमँ यज्ञ न्धत्तोपहूता स्सोमस्य पिबतोपहूतो युष्माकम्।। 1।। सोमः पिबतु 卐यत्ते सोम दिवि ज्योति र्यत्पृथिव्याँ यदुरा वन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोचो 卐धिषणे वीडू सती वीडयेथा मूर्ज न्दधाथा मूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टं 卐प्रागपा गुद गधरा क्तास्त्वा दिश आ धाव.न्त्वम्ब निष्वर। 卐यत्ते सोमादाभ्य न्नाम जागृवि तस्मै ते सोम सोमाय स्वाहा।। 2।। (युष्माकꣳ स्वर यत्ते नव च। 1।)

卐वाचस्पतये पवस्व वाजि 卐न्वृषा वृष्णो अꣳशुभ्या ङ्गभस्तिपूतो 卐देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा 卐स्वाङ्कृतोऽसि 卐मधुमती र्न इषस्कृधि 卐विश्वेभ्य स्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो 卐मनस्त्वा 卐ऽष्टूर्वन्तरिक्ष मन्विहि 卐स्वाहा त्वा सुभव स्सूर्याय 卐देवेभ्यस्त्वा मरीचिपेभ्य 卐एष ते योनिः 卐प्राणाय त्वा।। 3।। (वाच स्सप्तचत्वारिꣳशत्। 2।)

卐उपयामगृहीतोऽस्यन्त र्यच्छ मघव न्पाहि सोम मुरुष्य राय स्समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्त रुर्वन्तरिक्षꣳ सजोषा देवै रवरैः परै श्चान्तर्यामे मघव न्मादयस्व 卐स्वाङ्कृतोऽसि 卐मधुमतीर्न इष स्कृधि 卐विश्वेभ्य स्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो 卐मनस्त्वा 卐ऽष्टूर्वन्तरिक्ष मन्विहि स्वाहा त्वा सुभव स्सूर्याय 卐देवेभ्यस्त्वा मरीचिपेभ्य 卐एष ते योनि 卐रपानाय त्वा।। 4।। (देवेभ्य स्सप्त च। 3।)

卐आ वायो भूष शुचिपा उप न स्सहस्रन्ते नियुतो विश्ववार। उपो ते अन्धो मद्य मयामि यस्य देव दधिषे पूर्वपेयम्।।

卐उपयामगृहीतोऽसि वायवे 卐त्वेन्द्रवायू इमे सुताः। उप प्रयोभि रागत मिन्दवो वा मुशन्ति हि।

卐उपयामगृहीतोऽसीन्द्रवायुभ्या 卐न्त्वैष ते योनि.स्सजोषाभ्यान्त्वा ।। 5।। (आ वायो त्रिचत्वारिꣳशत्। 4।)

卐अयँ वां मित्रावरुणा सुत स्सोम ऋतवृधा। ममेदिह श्रुतꣳ हवम्।।

卐उपयामगृहीतोऽसि मित्रावरुणाभ्या卐न्त्वैष ते योनिर् ऋतायुभ्यान्त्वा।। 6।। (अयँ वाँ वि२शतिः। 5।)

☸❀卐या वा.ङ्कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्।।

卐उपयामगृहीतोऽस्यश्विभ्या卐न्त्वैष ते योनि र्माध्वीभ्यान्त्वा।। 7।। (या वा मष्टादश। 6।)

☸❀卐प्रातर्युजौ वि मुच्येथा मश्विना वेह गच्छतम्। अस्य सोमस्य पीतये।।

卐उपयामगृहीतोऽस्यश्विभ्या卐न्त्वैष ते योनि रश्विभ्यान्त्वा।। 8।। (प्रातर्युजा वेकान्नवि२शतिः। 7।)

☸❀卐अयँ वेन श्चोदय त्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इम मपा२ सङ्गमे सूर्यस्य शिशु न्न विप्रा मतिभी रिहन्ति।।

卐उपयामगृहीतोऽसि शण्डाय卐त्वैष ते योनि र्वीरतां पाहि।। 9।। (अयँ वेनः पञ्चवि२शतिः। 8।)

☸❀卐तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषद२ सुवर्विदं प्रतीचीनँ वृजन न्दोहसे गिराऽऽशुं जयन्त मनु यासु वर्धसे। उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि।। 10।। (त२ षड्वि२शतिः। 9।)

☸❀卐ये देवा दिव्येकादश स्थ पृथिव्या मध्येकादश स्थाप्सुषदो महिनैकादश स्थ ते देवा यज्ञ मिम ञ्जुषध्व卐मुपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञ ञ्जिन्व यज्ञपति मभि सवना पाहि विष्णुस्त्वां पातु विशन्त्वं पाहीन्द्रिये卐णैष ते योनि र्विश्वेभ्यस्त्वा देवेभ्यः।। 11। (ये देवा स्त्रिचत्वारि२शत्। 10।)

☸❀卐त्रि२श.त्त्रयश्च गणिनो रुजन्तो दिव२ रुद्राः पृथिवीञ्च सचन्ते। एकादशासो अप्सुषद स्सुत२ सोम ञ्जुषन्ता२ सवनाय विश्वे।।

卐उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञ ञ्जिन्व यज्ञपति मभि सवना पाहि विष्णुस्त्वां पातु विशन्त्वं पाहीन्द्रिये卐णैष ते योनि र्विश्वेभ्य स्त्वा देवेभ्यः।। 12।। (त्रि२श द्विचत्वारि२शत्। 11।)

☸❀卐उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृह.द्वय स्तस्मै त्वा विष्णवे卐त्वैष ते योनि रिन्द्राय त्वोक्थायुवे।।। 13।। (उपयामगृहीतो द्वावि२शतिः। 12।)

☸❀卐मूर्धान न्दिवो अरतिं पृथिव्या वैश्वानर मृताय जात मग्निम्। कवि२ सम्राज मतिथि ञ्जनाना मासन्ना पात्र ञ्जनयन्त देवाः।।

卐उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय卐ध्रुवोऽसि ध्रुवक्षिति ध्रुवाणा न्ध्रुवतमोऽच्युताना मच्युतक्षित्तम卐एष ते योनि रग्नये त्वा वैश्वानराय।। 14।। (मूर्धानं पञ्चत्रिꣳशत्। 13।)

卐--मधुश्च卐--माधवश्च卐--शुक्रश्च卐--शुचिश्च卐--नभश्च卐--नभस्य卐--श्चेष卐--श्चोर्जश्च卐--सहश्च卐--सहस्यश्च卐तपश्च卐--तपस्य卐श्चोपयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वा।। 15।। (मधु स्त्रिꣳशत्। 14।)

卐इन्द्राग्नी आ गतꣳ सुत ङ्गीर्भि र्नभो वरेण्यम्। अस्य पातं धियेषिता।।
卐उपयामगृहीतोऽसीन्द्राग्निभ्या卐न्त्वैष ते योनि रिन्द्राग्निभ्यान्त्वा।। 16।।

卐ओमास श्चर्षणीधृतो विश्वे देवास आ गत। दाश्वाꣳसो दाशुष स्सुतम्।। 卐उपयामगृहीतोऽसि विश्वेभ्य स्त्वा देवेभ्य卐एष ते योनि र्विश्वेभ्यस्त्वा देवेभ्यः।। 17।। (इन्द्राग्नी ओमासो विꣳशति र्विꣳशतिः। 16।)

卐मरुत्वन्तँ वृषभँ वावृधान मकवाऽरि न्दिव्यꣳ शास मिन्द्रम्। विश्वासाह मवसे नूतनायोग्रꣳ सहोदा मिह तꣳ हुवेम।।
卐उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत卐एष ते योनि रिन्द्राय त्वा मरुत्वते।। 18।। (मरुत्वन्तꣳ षड्विꣳशतिः। 17।)

卐इन्द्र मरुत्व इह पाहि सोमँ यथा शार्याते अपिब स्सुतस्य। तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवय स्सुयज्ञाः।।
卐उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत卐एष ते योनिरिन्द्राय त्वा मरुत्वते।। 19।।

卐मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोम मनुष्वधं मदाय। आ सिञ्चस्व जठरे मध्व ऊर्मि न्त्वꣳ राजाऽसि प्रदिव स्सुतानाम्।।
卐उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत卐एष ते योनि रिन्द्राय त्वा मरुत्वते।। 20।। (इन्द्र मरुत्वो मरुत्वा नेकान्न त्रिꣳश देकान्न त्रिꣳशत्।19 - 20।)

卐महाꣳ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाꣳ इव। स्तोमै र्वथ्सस्य वावृधे।।
卐उपयामगृहीतोऽसि महेन्द्राय卐त्वैष ते योनि र्महेन्द्राय त्वा।। 21।। (महा नेकान्न विꣳशतिः। 20।)

☬❀卐महा॰ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिन स्सहोभिः। अस्मद्रिय.ग्वावृधे वीर्यायोरु॰ पृथु स्सुकृत॰ कर्तृभि र्भूत्।।

卐उपयामगृहीतोऽसि महेन्द्राय 卐त्वैष ते योनि र्महेन्द्राय त्वा।। 22।। (महा.न्नृवथषड्वि॰शतिः। 21।)

☬❀卐कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपे न्नु.मघव न्भूय इन्नु ते दान न्देवस्य पृच्यते।।

卐उपयामगृहीतोऽस्यादित्येभ्य.स्त्वा।

卐कदा चन प्र युच्छस्युभे नि पासि जन्मनी। तुरीयाऽऽदित्य सवन न्त इन्द्रिय मा तस्था वमृत न्दिवि।।

卐यज्ञो देवानां प्रत्येति सुम्न मादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमति र्ववृत्या द॰हो श्चिद्या वरिवोवित्तराऽसत्।।

卐विवस्व आदित्यैष ते सोमपीथ स्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वय न्तर्पयितारो 卐या दिव्या वृष्टि स्तया त्वा श्रीणामि।। 23।। (व स्सप्तवि॰शतिश्च। 22।)

☬❀卐वाम मद्य सवित र्वाममु श्वो दिवेदिवे वाम मस्मभ्य॰ सावीः। वामस्य हि क्षयस्य देव भूरे रया धिया वामभाज स्स्याम।।

卐उपयामगृहीतोऽसि देवाय त्वा सवित्रे।। 24।। (वाम ञ्चतुर्वि॰शतिः। 23।)

☬❀卐अदब्धेभि स्सवित॰ पायुभिष्ट्व॰ शिवेभि रद्य परि पाहि नो गयम्। हिरण्यजिह्व स्सुविताय नव्यसे रक्षा माकिर्नो अघश॰स ईशत।।

卐उपयामगृहीतोऽसि देवाय त्वा सवित्रे।। 25।। (अदब्धेभि स्त्रयोवि॰शतिः। 24।)

☬❀卐हिरण्यपाणि मूतये सवितार मुप ह्वये। स चेत्ता देवता पदम्।।

卐उपयामगृहीतोऽसि देवाय त्वा सवित्रे। 26।। (हिरण्यपाणि ञ्चतुर्दश।25।)

☬❀卐--सुशर्माऽसि सुप्रतिष्ठानो बृह.दुक्षे नम 卐एष ते योनि र्विश्वेभ्यस्त्वा देवेभ्यः।। 27।। (सुशर्मा द्वादश। 26।)

☬❀卐--बृहस्पतिसुतस्य त इन्दो इन्द्रियावत॰ पत्नीवन्त ङ्ग्रह ङ्गृह्णा म्यग्ना '3' इ पत्नीवा '3' 卐स्सजू र्देवेन त्वष्ट्रा सोमं पिब स्वाहा।।। 28।। (बृहस्पतिसुतस्य पञ्चदश। 27।)

☬❀卐--हरि रसि हारियोजनो हर्यो स्स्थाता वज्रस्य भर्ता पृश्ने॰ प्रेता तस्य ते देव सोमेष्टयजुष स्स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्त ङ्ग्रह ङ्गृह्णामि 卐हरी स्थ हर्यो र्धाना 卐स्सहसोमा इन्द्राय स्वाहा।। 29।। (हरिरसि षड्वि॰शतिः।। 28।।)

☬❀卐अग्न आयू॑ꣳषि पवस आ सुवोर्ज मिषञ्च नः। आरे बाधस्व दुच्छुनाम्।।
卐उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत 卐एष ते योनि रग्नये त्वा तेजस्वते।। 30।। (अग्न आयू॑ꣳषि त्रयोविꣳशतिः। 29।)

☬❀卐उत्तिष्ठ न्नोजसा सह पीत्वा शिप्रे अवेपयः। सोम मिन्द्र चमू सुतम्।।
卐उपयामगृहीतोऽसीन्द्राय त्वौजस्वत 卐एष ते योनि रिन्द्राय त्वौजस्वते।। 31।। (उत्तिष्ठ न्नेकविꣳशतिः। 31।)

☬❀卐तरणि र्विश्वदर्शतो ज्योतिष्कृ.दसि सूर्य। विश्वमा भासि रोचनम्।।
卐उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत 卐एष ते योनि स्सूर्याय त्वा भ्राजस्वते।। 33।। (तरणि र्विꣳशतिः।32।)

☬❀卐आ प्यायस्व मदिन्तम सोम विश्वाभि रूतिभिः। भवा न.स्सप्रथस्तमः।। 34।। (आप्यायस्व नव। 33।)

☬❀卐ईयुष्टे ये पूर्वतरा मपश्य न्व्युच्छन्ती मुषसं मर्त्यासः। अस्माभि रू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान्।। 34।। (ईयु रेकान्न विꣳशतिः। 33।)

☬❀卐ज्योतिष्मतीन्त्वा सादयामि 卐ज्योतिष्कृतन्त्वा सादयामि 卐ज्योतिर्विदन्त्वा सादयामि 卐भास्वतीन्त्वा सादयामि 卐ज्वलन्तीन्त्वा सादयामि 卐मल्मलाभवन्तीन्त्वा सादयामि 卐दीप्यमानान्त्वा सादयामि 卐रोचमानान्त्वा सादया 卐म्यजस्रान्त्वा सादयामि 卐बृहज्ज्योतिषन्त्वा सादयामि 卐बोधयन्तीन्त्वा सादयामि 卐जाग्रतीन्त्वा सादयामि।। 35।। (ज्योतिष्मतीꣳ षड्विꣳशत्। 34।)

☬❀卐प्रयासाय स्वाहा 卐ऽऽयासाय स्वाहा 卐वियासाय स्वाहा 卐सँयासाय स्वा 卐होद्यासाय स्वाहा 卐ऽवयासाय स्वाहा 卐शुचे स्वाहा 卐शोकाय स्वाहा 卐तप्यत्वै स्वाहा 卐तपते स्वाहा 卐ब्रह्महत्यायै स्वाहा 卐सर्वस्मै स्वाहा।। 36।। (प्रयासाय चतुर्विꣳशतिः। 35।)

☬❀卐चित्तꣳ सन्तानेन 卐भवँ यक्ना 卐रुद्र न्तनिम्ना 卐पशुपतिꣳ स्थूलहृदये 卐नाग्निꣳ हृदयेन 卐रुद्रँ लोहितेन 卐शर्वं मतस्नाभ्यां 卐महादेव मन्तः पार्श्वे 卐नौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम्।। 37।। (चित्त मष्टादश। 36।)

☬❀卐आ तिष्ठ वृत्रह.न्रथँ युक्ता ते ब्रह्मणा हरी। अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना।।

卐उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनं卐एष ते योनि रिन्द्राय त्वा षोडशिने।। 38।। (आ तिष्ठ षड्विꣳशतिः। 37।)

🏺❀卐इन्द्र मिद्धरी वहतोऽप्रतिधृष्टशवस मृषीणाञ्च स्तुती रुप यज्ञञ्च मानुषाणाम्।।

卐उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनं卐एष ते योनि रिन्द्राय त्वा षोडशिने।। 39।। (इन्द्र मित्त्रयोविꣳशतिः। 38।)

🏺❀卐असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि। आ त्वा पृण.क्त्विन्द्रियꣳ रज.स्सूर्यन्न रश्मिभिः।।

卐उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनं卐एष ते योनि रिन्द्राय त्वा षोडशिने।। 40।। (असावि सप्तविꣳशतिः। 39।)

🏺❀卐सर्वस्य प्रतिशीवरी भूमि.स्त्वोपस्थ आऽधित। स्योनाऽस्मै सुषदा भव यच्छास्मै शर्म सप्रथाः।।

卐उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनं卐एष ते योनि रिन्द्राय त्वा षोडशिने।। 41।।

🏺❀卐महाꣳ इन्द्रो वज्रबाहु ष्षोडशी शर्म यच्छतु। स्वस्ति नो मघवा करोतु हन्तु पाप्मानँ योस्माꣳद्वेष्टि।।

卐उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनं卐एष ते योनि रिन्द्राय त्वा षोडशिने।। 42।। (सर्वस्य महा.न्थषड्विꣳशति ष्षड्विꣳशतिः।41 - 42।)

🏺❀卐सजोषा इन्द्र सगणो मरुद्भि स्सोमं पिब वृत्रह.न्छूर विद्वान्। जहि शत्रूꣳ रप मृधो नुदस्वाथाभय ङ्कृणुहि विश्वतो नः।।

卐उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनं卐एष ते योनि रिन्द्राय त्वा षोडशिने।। 43।। (सजोषा स्त्रिꣳशत्। 42।)

**सौ।का।3 दाक्षिण मन्त्राः – 1 (एकोऽनुवाक:1)**

🏺❀卐उदु त्य.ञ्जातवेदस न्देवँ वहन्ति केतवः। दृशे विश्वाय सूर्यम्।।

卐चित्र न्देवाना मुदगा दनीक-ञ्चक्षु र्मित्रस्य वरुणस्याग्नेः। आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगत स्तस्थुषश्च।।

卐अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्म ज्जुहुराण मेनो भूयिष्ठान्ते नमउक्तिँ विधेम।।

卐दिव ङ्गच्छ सुवः पत 卐रूपेण।। 44।। ❀ वो रूप मभ्यैमि वयसा वयः।

卐तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके।।
卐 एतत्ते अग्ने राध ऐति सोमच्युत न्तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्ती 卐ब्राह्मण मद्य राध्यास मृषि मार्षेयं पितृमन्तं पैतृमत्य॰ सुधातुदक्षिणँ 卐वि सुवः पश्य व्यन्तरिक्षँ 卐यतस्व सदस्यै 卐रस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातार मा विश.तानवहायास्मा न्देवयानेन पथेत सुकृताँ लोके सीदत तन्न स्सꣳस्कृतम्।। 45।। (रूपेण सदस्यै रष्टादश च।43।)

**सौ।का। 4 समिष्टयजुर्मन्त्राः – 1 (एकोऽनुवाकः1)**

❀卐धाता राति स्सवितेद.ञ्जुषन्तां प्रजापति र्निधिपति र्नो अग्निः। त्वष्टा विष्णुः प्रजया स॰रराणो यजमानाय द्रविण न्दधातु।।
卐 समिन्द्र णो मनसा नेषि गोभि स्स॰ सूरिभि र्मघव'2' न्थ्सꣳ स्वस्त्या। सं ब्रह्मणा देवकृतँ यदस्ति सन्देवाना॰ सुमत्या यज्ञियानाम्।।
卐 सँ वर्चसा पयसा सन्तनूभि रगन्महि मनसा स॰ शिवेन। त्वष्टा नो अत्र वरिवः कृणोतु।। 46।।❀ अनु मार्ष्टु तनुवो यद्विलिष्टम्।।
卐 यदद्य त्वा प्रयति यज्ञे अस्मि न्नग्ने होतार मवृणीमहीह। ऋधगया ड्ऋध.गुताशमिष्ठाः प्रजानन् यज्ञ मुप याहि विद्वान्।।
卐 स्वगा वो देवा स्सदन मकर्म य आजग्म सवनेद ञ्जुषाणाः। जक्षिवा॰सः पपिवा॰सश्च विश्वेऽस्मे धत्त वसवो वसूनि।।
卐 यानाऽवह उशतो देव देवा.न्तान्।। 47।।❀ प्रेरय स्वे अग्ने सधस्थे। वहमाना भरमाणा हवी॰षि वसु ङ्घर्म न्दिव मा तिष्ठतानु।
卐 यज्ञ यज्ञ ङ्गच्छ यज्ञपति ङ्गच्छ स्वाँ योनि ङ्गच्छ स्वा 卐हैष ते यज्ञो यज्ञपते सहसूक्तवाक स्सुवीर स्स्वाहा 卐देवा गातुविदो गातुँ वित्त्वा गातु मित मनसस्पत इमन्नो देव देवेषु यज्ञꣳ स्वाहा 卐वाचि स्वाहा 卐वाते धाः।। 48।। (कृणोतु तानष्टाचत्वारि॰शच्च। 44।)

**सौ।का।5 अवभृथ यजुर्मन्त्राः – 1 (एकोऽनुवाकः 1)**

❀卐उरु॰ हि राजा वरुण श्चकार सूर्याय पन्था मन्वेतवा उ। अपदे पादा प्रतिधातवेऽक रुतापवक्ता हृदयाविधश्चित्।।

卐 शतन्ते राज न्भिषज स्सहस्र मुर्वी गम्भीरा सुमतिष्टे अस्तु। बाधस्व द्वेषो निरृतिं पराचैः कृतं चिदेनः प्र मुमु.ग्ध्यस्मत्।
卐 अभिष्ठितो वरुणस्य पाशो 卐ऽग्ने रनीक मप आ विवेश। अपान्नपा त्प्रतिरक्ष न्नसुर्य न्दमेदमे।। 49।। ❀ समिधँ यक्ष्यग्ने।
प्रति ते जिह्वा घृत मुच्चरण्ये 卐थ्समुद्रे ते हृदय मप्स्वन्तः। सन्त्वा विशन्त्वोषधी रुताऽऽपो यज्ञस्य त्वा यज्ञपते हविर्भिः।
सूक्तवाके नमोवाके विधे 卐मावभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवै र्देवकृत मेनो या.डव मर्त्यै र्मर्त्यकृत मुरोरा नो देव रिषस्पाहि 卐सुमित्रा न आप ओषधयः।। 50।। ❀ सन्तु दुर्मित्रा स्तस्मै भूयासु र्योऽस्मा न्द्वेष्टि यञ्च वय न्द्विष्मो 卐देवी राप एष वो गर्भ स्तँ व स्सुप्रीतँ सुभृत मकर्म देवेषु न स्सुकृतो ब्रूता 卐त्प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश 卐एधोऽस्येधिषीमहि 卐समिदसि 卐तेजोऽसि तेजो मयि धे 卐ह्यपो अन्वचारिषँ रसेन समसृक्ष्महि। पयस्वाँ अग्न आऽगम न्तं मा सँ सृज वर्चसा।। 51।। (दमे दम ओषधय आ षड्व। 45।)

**वै।का। 12 याज्या: 4 (एकोऽनुवाक: 1)**

❀卐यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि। जातवेदो यशो अस्मासु धेहि प्रजाभि रग्ने अमृतत्व मश्याम्।।
卐 यस्मै त्वँ सुकृते जातवेद उ लोक मग्ने कृणव स्स्योनम्। अश्विनँ स पुत्रिणँ वीरवन्त ङ्गोमन्तँ रयि न्नशते स्वस्ति।।
卐 त्वे सु पुत्र शवसोऽवृत्र न्कामकातयः। न त्वा.मिन्द्राति रिच्यते।
卐 उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानम्।। 52।। ❀ सुतासः। यदीँ सबाधः पितरन्न पुत्रा स्समानदक्षा अवसे हवन्ते।।
卐 अग्ने रसेन तेजसा जातवेदो वि रोचसे। रक्षोहाऽमीवचातनः।।
卐 अपो अन्वचारिषँ रसेन समसृक्ष्महि। पयस्वाँ अग्न आऽगम न्तं मा सँसृज वर्चसा।।
卐 वसु र्वसुपतिर् हिक मस्यग्ने विभावसुः। स्याम ते सुमतावपि।।
卐 त्वा मग्ने वसुपतिँ वसूना मभि प्र मन्दे।। 53।। ❀ अध्वरेषु राजन्न्। त्वया वाजँ वाजयन्तो जयेमाभि ष्याम पृत्सुती मर्त्यानाम्।।

卐 त्वामग्ने वाजसातमँ विप्रा वर्धन्ति सुष्टुतम्। स नो रास्व सुवीर्यम्।।

卐 अयन्नो अग्नि र्वरिवः कृणो त्वयं मृधः पुर एतु प्रभिन्दन्न्। अयं शत्रू.न्जयतु जर्.हृषाणोऽयं वाज ञ्जयतु वाजसातौ।।

卐 अग्निनाऽग्नि स्समिध्यते कवि र्गृहपति र्युवा।। हव्यवा.ड्जुह्वास्यः।।

卐 त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण स '2' न्थ्सता। सखा सख्या समिध्यसे।।

卐 उदग्ने शुचय स्तव[1] ❃ वि ज्योतिषा[2] ❃।। 54।। (मघवानं मन्दे ह्यग्ने चतुर्दश च। 46।)

(वाचः प्राणाय त्वा। उपयामगृहीतोऽस्यपानाय त्वा। आ वायो वायवे सजोषाभ्यान्त्वा। अय मृतायुभ्यान्त्वा। या वा मश्विभ्यां माध्वीभ्यान्त्वा। प्रातर्युजा वश्विभ्यान्त्वा। अयँ वेन श्शण्डाय त्वैष ते योनि र्वीरतां पाहि। तं मर्काय त्वैष ते योनिः प्रजाः पाहि। ये देवा स्त्रिꣳश.दाग्रयणोऽसि विश्वेभ्यस्त्वा देवेभ्यः। उपयामगृहीतोऽसीन्द्राय त्वोक्थायुवे। मूर्धान मग्नये त्वा वैश्वानराय। मधुश्च सꣳसर्पोऽसि। इन्द्राग्नी इन्द्राग्निभ्यान्त्वा। ओमासो विश्वेभ्यस्त्वा देवेभ्यः। मरुत्वन्त न्त्रीणीन्द्राय त्वा मरुत्वते। महान्द्वे महेन्द्राय त्वा। कदाचना ऽऽदित्येभ्यस्त्वा। कदा चन स्तरी र्विवस्व आदित्य। इन्द्रꣳ शुचिरपः। वाम न्त्रीणि देवाय त्वा सवित्रे। सुशर्मा विश्वेभ्यस्त्वा देवेभ्यः। बृहस्पतिसुतस्य त्वष्ट्रा सोमं पिब स्वाहा। हरि.रसि सहसोमा इन्द्राय स्वाहा। अग्न आयूꣳष्यग्नये त्वा तेजस्वते। उत्तिष्ठ न्निन्द्राय त्वौजस्वते। तरणि स्सूर्याय त्वा भ्राजस्वते। आ तिष्ठाद्या ष्षडिन्द्राय त्वा षोडशिने।

उदु त्य ञ्चित्रम्। अग्ने नय दिव ङ्गच्छ। उरु मायुष्टे यद्देवा मुमुग्धि। अग्नाविष्णू मुमुक्तम्। परा वै पङ्क्त्यः। देवा वै ये देवाः पङ्क्त्यौ। परा वै स वाचम्। देवासुराः कार्यम्। भूमि र्व्यतृष्यन्न्। प्रजापति र्व्यक्षुध्यन्न्। भूमि रादित्या वै। अग्निहोत्र मादित्यो वै। भूमि र्लेक स्सलेक स्सुलेकः। विष्णो रुदुत्तमम्। अन्नपते पुनस्त्वाऽऽदित्याः। यस्त्वा सुष्टुतम्। त्वमग्ने सुष्टुतिम्। यस्त्वा वि रोचसे। त्वमग्ने विचर्.षणे।)

(आददे वाचस्पतय उपयामगृहीतोऽस्या वायो अयँ वाँ या वां प्रातर्युजा वयँ वेन स्तं प्रत्नथा ये देवा स्त्रिꣳश दुपयामगृहीतोऽसि मूर्धानं मधु श्चेन्द्राग्नी ओमासो मरुत्वन्त मिन्द्र मरुत्वो मरुत्वा न्महा न्महा न्नृव.त्कदा वाम मदब्धेभिर् हिरण्यपाणिꣳ सुशर्मा बृहस्पतिसुतस्य हरिरस्यग्न उत्तिष्ठ न्तरणि राप्यायस्वेयुष्टे ये ज्योतिष्मतीं प्रयासाय चित्तमा तिष्ठेन्द्र मसावि सर्वस्य महा न्थ्सजोषा उदु त्य न्धातोरुꣳ हि यस्त्वा षट्चत्वारिꣳशत्। 46।)

---

1

2

(आ द॒दे॒ ये दे॒वा म॒हा नु॒त्तिष्ठ ‘2’न्थ्सर्व॑स्य सन्तु दु॒र्मि॒त्रा श्चतुः॑पञ्चा॒शत्। 54।) (आ द॒दे॒ तव॒ वि ज्योतिषा।)

## ≤◊≤ ≤◊≤प्रथमकाण्डे पञ्चमः॑ प्रपाठकः

### आ।का।2 पुनराधेय ब्राह्मणम् 1 (द्वावनुवाकौ 2)

❀ दे॒वा॒सु॒रा स्सँय॑त्ता आस॒,न्ते दे॒वा वि॒जय॑ मु॒पय॒न्तो॒ऽग्नौ वा॒मँ वसु॒ स न्न्य॑दध,ते॒द मु नो भविष्यति॒-यदि॒ नो जे॒ष्यन्तीति॒, तद॒ग्नि न्न्य॑कामयत, तेनापा॒क्राम॒, त्तद्दे॒वा वि॒जित्या॒वरु॒रुथ्स॑माना॒ अन्वा॑य॒,न्तद॑स्य॒ सह॒सा॒ऽऽदि॒थ्सन्त॒, सो॒ऽरोदी॒,द्य.दरो॑दी॒- त्तद्रु॒द्रस्य॑ रुद्र॒त्वँ, यद॒श्रव॒शीय॑त॒- तत्।। 1।। ❀ र॒ज॒त॒ꣳ हिर॑ण्य मभव॒,त्तस्मा॑ द्रज॒तꣳ हिर॑ण्य मदक्षि॒ण्य म॑श्रु॒जꣳ हि, यो ब॒र्हि॒षि॒ द॒दा॑ति- पु॒रा॒ऽस्य॒ सँव॑थ्स॒रा द्गृ॒हे रु॑द॒न्ति॒, तस्मा॑द्ब॒र्हि॒षि॒ न दे॒यꣳ॒, सो॒ऽग्नि र॑ब्रवी- द्भाग्य॒सा॒,न्यथ॒ व इ॒दमि॑ति, पु॒न॒रा॒धे॒यन्ते॒ केव॒लमित्य॑ब्रुव॒, न्नृ॒ध्नव॒त्खलु॒ स इत्य॑ब्रवी॒,द्यो म॑द्देव॒त्य म॒ग्नि मा॒दधा॑ता इति॒, तं पू॒षाऽऽध॑त्त॒ तेन॑।। 2।। ❀ पू॒षाऽऽर्ध्नो॒- त्तस्मा॑त्पौ॒ष्णाः प॒शव॒ उच्य॒न्ते॒, तन्त्वष्टाऽऽध॑त्त॒- तेन॒ त्वष्टाऽऽर्ध्नो॒- त्तस्मा॑ त्त्वा॒ष्ट्राः प॒शव॒ उच्य॒न्ते॒, तं मनु॒ राऽध॑त्त॒- तेन॒ मनु॒ रार्ध्नो॒- त्तस्मा॑.न्मान॒व्यः॑ प्र॒जा उ॒च्यन्ते॒, तन्धा॒ताऽऽध॑त्त॒- तेन॑ धा॒ताऽऽर्ध्नो॒- थ्सँव॑थ्स॒रो वै धा॒ता- तस्मा॑.थ्सँवथ्स॒रं प्र॒जाः प॒शवो॒ऽनु प्र जा॑यन्ते॒, य ए॒वं पु॑नराधे॒यस्य॒र्द्धिँ वेद॑।। 3।। ❀ ऋ॒ध्नोत्ये॒व, यो॒ऽस्यै॒वं ब॒न्धु॒ताँ वेद॒- बन्धु॑मा न्भवति॒, भा॒ग॒धे॒यँ वा अ॒ग्नि रा॒हि॑त इ॒च्छमा॑नः प्र॒जां प॒शून् यज॑मान॒स्योप॑ दोद्रा॒,वोद्वा॑स्य॒ पुन॒ राद॑धीत, भा॒ग॒धे॒येनै॒वैनꣳ॒ सम॑र्धय॒,त्यथो॒ शान्ति॒ रे॒वास्यै॒षा, पुन॑र्वस्वो॒.राद॑धी॒,तै॒तद्वै पुनराधे॒यस्य॒ नक्ष॑त्रं॒- यत्पुन॑र्वसू॒, स्वाया॑मे॒वैन॒ न्दे॒वता॑या मा॒धाय॑ ब्रह्मवर्च॒सी भ॑वति, द॒र्भै रा॒दधा॒ त्ययातयामत्वाय, द॒र्भै रा॒दधा॒- त्यद्भ्य ए॒वैन॒ मोष॑धीभ्यो॒ऽव॒रुध्या॒ऽऽधत्ते॒, पञ्च॑कपालः पुरो॒डाशो॑ भवति॒, पञ्च॒ वा ऋ॒तव॒- ऋ॒तुभ्य॑ ए॒वैन॑ मवरु॒ध्याऽऽधत्ते।। 4।। (अ॒शी॒य॒त॒ त॒त्ते॒न॒ वेद॑ द॒र्भैः पञ्च॑विꣳशतिश्च। 1।)

❀ परा॒ वा ए॒ष य॒ज्ञं प॒शून् व॑पति॒- यो॒ऽग्नि मु॑द्वा॒सय॑ते॒, पञ्च॑कपालः पुरो॒डाशो॑ भवति॒, पाङ्क्तो॑ य॒ज्ञः- पाङ्क्ताः॑ प॒शवो॑- य॒ज्ञमे॒व प॒शूनव॑ रुन्धे, वी॒र॒हा वा ए॒ष दे॒वानाँ॑ - यो॒ऽग्नि मु॑द्वा॒सय॑ते॒, न वा ए॒तस्य॑ ब्राह्म॒णा ऋ॑ताय॒वः पु॒राऽन्न॑ मक्ष॒,न्पङ्क्त्यो॑ याज्या॒ऽनुवा॒क्या॑ भव॒न्ति॒, पाङ्क्तो॑ य॒ज्ञः- पाङ्क्तः॒ पुरु॑षो॒- दे॒वाने॒व वी॒र न्नि॑रव॒दाया॒ग्निं पुन॒ रा।। 5।। ❀ ध॒त्ते, श॒ताक्ष॑रा भवन्ति, श॒ता॒ऽऽयुः॒ पुरु॑ष श्श॒तेन्द्रि॑य॒ आयु॑ष्ये॒वेन्द्रि॒ये प्रति॑ तिष्ठति॒, यद्वा अ॒ग्नि रा॒हि॑तो॒ नर्ध्य॑ते॒- ज्यायो॑ भाग॒धेय॒ न्नि॒काम॑यमानो॒, यदा॑ग्ने॒यꣳ सर्वं॒ भव॑ति॒- सै॒वास्य॒र्द्धि, स्सँ वा ए॒तस्य॑ गृ॒हे वाख्सृ॑ज्यते॒ -यो॒ऽग्नि मु॑द्वा॒सय॑ते॒, स वा॒चꣳ॒ सꣳसृ॑ष्टाँ॒ यज॑मान॒ ईश्व॒रो॒ऽनु

पराभवितो, विभक्तयो भवन्ति- वाचो विधृत्यै- यजमानस्यापराभावाय।। 6।। ❀ विभक्ति ङ्करोति, ब्रह्मैव तदक,रुपा९शु यजति, यथा वामँ वसु विविदानो गूहति- तादृगेव त,दग्निं प्रति स्विष्टकृत न्निराह, यथा वामँ वसु विविदानः प्रकाश ञ्जिगमिषति- तादृगेव त,द्विभक्ति मुक्त्वा- प्रयाजेन वषड्करो- त्यायतना देव नैति, यजमानो वै पुरोडाशः- पशव एते आहुती- यदभितः पुरोडाश मेते आहुती।। 7।। ❀ जुहोति, यजमान मेवोभयतः पशुभिः परि गृह्णाति, कृतयजु स्सम्भृतसम्भार इत्याहु, र्न सम्भृत्या स्सम्भारा- न यजुः कर्तव्य मि,त्यथो~ खलु सम्भृत्या एव सम्भाराः- कर्तव्यँ यजु- र्यज्ञस्य समृद्ध्यै, पुनर्निष्कृतो रथो दक्षिणा- पुनरुत्स्यूतँ वासः- पुनरुत्सृष्टोऽनड्वा- न्पुनराधेयस्य समृद्ध्यै, सप्त ते अग्ने समिध स्सप्त जिह्वा इत्यग्निहोत्र ञ्जुहोति, यत्रयत्रैवास्य न्यक्त- न्ततः।। 8।। ❀ एवैन मव रुन्धे, वीरहा वा एष देवानाँ- योऽग्नि मुद्वासयते, तस्य वरुण एवर्णया- दाग्निवारुण मेकादशकपाल मनु निर्वपे,द्यञ्चैव हन्ति यश्चास्यर्णया- त्तौ भागधेयेन प्रीणाति- नाऽर्ति मार्च्छति यजमानः।। 9।। (आ पराभावाय पुरोडाश.मेते आहुती तत ष्षड्वि९शच्च। 2।)

**आ।का।2 पुनराधेय मन्त्राः (एकोऽनुवाकः 1)**

卐भूमि र्भूम्ना द्यौ र्वरिणाऽन्तरिक्षं महित्वा। उपस्थे ते देव्यदितेऽग्नि मन्नाद मन्नाद्यायाऽऽदधे।।

卐 आऽयङ्गौः पृश्नि रक्रमी दसन न्मातरं पुनः। पितरञ्च प्रय'2'न्त्सुवः।।

卐 त्रि९शद्धाम वि राजति वाक्पतङ्गाय शिश्रिये। प्रत्यस्य वह द्युभिः।।

卐 अस्य प्राणा.दपान.त्यन्त श्चरति रोचना। व्यख्य न्महिष स्सुवः।।

卐 यत्त्वा।। 10।। ❀ क्रुद्धः परोवप मन्युना यदवर्त्या। सुकल्प मग्ने तत्तव पुन.स्त्वोद्दीपयामसि।।

卐 यत्ते मन्युपरोप्तस्य पृथिवी मनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन्न्।।

卐 मनो ज्योति र्जुषता माज्यँ विच्छिन्नँ यज्ञ९ समिम न्दधातु। बृहस्पति स्तनुता मिम न्नो विश्वे देवा इह मादयन्ताम्।।

卐 सप्त ते अग्ने समिध स्सप्त जिह्वा स्सप्त।। 11।। ❀ ऋषय स्सप्त धाम प्रियाणि। सप्त होत्रा स्सप्तधा त्वा यजन्ति सप्त योनी रा पृणस्वाऽऽ घृतेन।।

卐 पुनरूर्जा नि वर्तस्व पुन रग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः।।

卐 सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वत.स्परि।।

卐 लेक स्सलेक स्सुलेक स्ते न आदित्या आज्य ञ्जुषाणा वियन्तु 卐केत स्सकेत स्सुकेत स्ते न आदित्या आज्य ञ्जुषाणा वियन्तु 卐विवस्वाँ अदिति र्देवजूति स्ते न आदित्या आज्य ञ्जुषाणा वियन्तु।। 12।। (त्वा जिह्वा स्सप्त सुकेत स्तेन स्त्रयोदश च। 3।)

**आ।का।2 पुनराधेय ब्राह्मणम् 2 (एकोऽनुवाकः 1)**

भूमि र्भूम्ना द्यौ र्वरिणेत्याहाऽऽशिषैवैन मा धत्ते, सर्पा वै जीर्यन्तोऽमन्यन्त, स एतङ्कसर्णीरः काद्रवेयो मन्त्र मपश्य,त्ततो वै ते जीर्णा स्तनू रपाघ्नत, सर्पराज्ञिया ऋग्भि र्गार्हपत्य मा दधाति, पुनर्नव मेवैन मजर ङ्कृत्वाऽऽधत्ते,ऽथो पूतमेव पृथिवी मन्नाद्य न्नोपानम,थ्सैतम्।। 13।। मन्त्र मपश्य, त्ततो वै तामन्नाद्य मुपानम,द्यथ्सर्पराज्ञिया ऋग्भि र्गार्हपत्य मादधा-त्यन्नाद्य स्यावरुध्या, अथो अस्या मेवैनं प्रतिष्ठित माधत्ते, यत्त्वा क्रुद्धः परोवपेत्याहाप ह्नुत एवास्मै त,त्पुनस्त्वोद्दीपयामसीत्याह- समिन्ध एवैनँ, यत्ते मन्युपरोप्तस्येत्याह- देवताभिरेव।। 14।। एनँ सम्भरति, वि वा एतस्य यज्ञ श्छिद्यते- योऽग्नि मुद्वासयते, बृहस्पतिवत्यर्चोप तिष्ठते, ब्रह्म वै देवानां बृहस्पति- र्ब्रह्मणैव यज्ञँ सन्दधाति, विच्छिन्नँ यज्ञँ समिम न्दधात्वित्याह सन्तत्यै, विश्वे देवा इह मादयन्ता मित्याह सन्तत्यैव यज्ञ न्देवेभ्योऽनु दिशति, सप्त ते अग्ने समिध स्सप्त जिह्वाः।। 15।। इत्याह- सप्तसप्त वै सप्तधाऽग्नेः प्रिया स्तनुव- स्ता एवाव रुन्धे, पुनरूर्जा सह रय्ये.त्यभितः पुरोडाश माहुती जुहोति, यजमान मेवोर्जा च रय्या चोभयतः परि गृह्णा,त्यादित्या वा अस्मा ल्लोका दमुँ लोक माय,न्तेऽमुष्मि न्लोके व्यतृष्य,न्त इमँ लोकं पुनरभ्यवेत्याग्नि माधायैतान् होमा नजुहवु,स्त आर्ध्नुव, न्ते सुवर्गँ लोक मायन्, यः पराचीनं पुनराधेया दग्नि मादधीत- स एतान् होमा न्जुहुया,द्यामेवाऽऽदित्या ऋद्धि मार्ध्नुव- न्तामेवर्ध्नोति।। 16।। (सैत न्देवताभि.रेव जिह्वा एता न्पञ्चविँशतिश्च। 4।)

**आ।का।4 अग्न्युपस्थान मन्त्राः - 1 (द्वावनुवाकौ 2)**

卐उपप्रयन्तो अध्वरं मन्त्रँ वोचेमाग्नये। आरे अस्मे च शृण्वते।।

卐 अस्य प्रत्ना मनु द्युतँ शुक्र न्दुदुहे अह्रयः। पय स्सहस्रसा मृषिम्।।

卐 अग्नि र्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाँ रेताँसि जिन्वति।।

卐 अय.मिह प्रथमो धायि धातृभिर् होता यजिष्ठो अध्वरे.ष्वीड्यः। यमप्नवानो भृगवो विरुरुचु र्वनेषु चित्रँ विभुवँ विशेविशे।।

卐 उभा वा मिन्द्राग्नी आहुवध्यै।। 17।। ❀ उभा राधस स्सह मादयध्यै। उभा दातारा विषाᳲ रयीणा मुभा वाजस्य सातये हुवे वाम्।।
卐 अयन्ते योनिर् ऋत्वियो यतो जातो अरोचथाः। तञ्जान न्नग्न आ रोहाथा नो वर्धया रयिम्।।
卐 अग्न आयूᳲषि पवस आ सुवोर्ज मिषञ्च नः। आरे बाधस्व दुच्छुनाम्।।
卐 अग्ने पवस्व स्वपा अस्मे वर्च स्सुवीर्यम्। दध.त्पोषᳲ रयिम्।। 18।। ❀ मयि।।
卐 अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान् वक्षि यक्षि च।।
卐 स नᳶ पावक दीदिवो-ऽग्ने देवाᳲ इहा ऽऽवह। उप यज्ञᳲ हविश्च नः।।
卐 अग्नि श्शुचिव्रततम श्शुचि र्विप्र श्शुचिᳶ कविः। शुची रोचत आहुतः।।
卐 उदग्ने शुचय स्तव शुक्रा भ्राजन्त ईरते। तव ज्योतीᳲष्यर्चयः।।
卐 आयुर्दा अग्नेऽस्यायु र्मे।। 19।। ❀ देहि 卐वर्चोदा अग्नेऽसि वर्चो मे देहि 卐तनूपा अग्नेऽसि तनुवं मे पा 卐ह्यग्ने यन्मे तनुवा ऊन न्तन्म आ पृण 卐चित्रावसो स्वस्ति ते पारमशी 卐येन्धानास्त्वा शतᳲ हिमा द्युमन्त स्समिधीमहि वयस्वन्तो वयस्कृतँ यशस्वन्तो यशस्कृतᳲ सुवीरासो अदाभ्यम्। अग्ने सपत्नदम्भनँ वर्षिष्ठे अधि नाके।।
卐 सन्त्वमग्ने सूर्यस्य वर्चसाऽगथा स्समृषीणाᳲ स्तुतेन सं प्रियेण धाम्ना। त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज।। 20।। (आहुवध्यै पोषᳲ रयिं मे वर्चसा सप्तदश च। 5।)
❀卐सं पश्यामि प्रजा अह मिडप्रजसो मानवीः। सर्वा भवन्तु नो गृहे।।
卐अम्भ स्स्थाम्भो वो भक्षीय- महस्स्थ महो वो भक्षीय- सहस्स्थ सहो वो भक्षीयोर्ज.स्स्थोर्जँ वो भक्षीय 卐रेवती रमध्व मस्मिन्लोकेऽस्मि न्गोष्ठेऽस्मि न्क्षयेऽस्मिन् योना विहैव स्तेतो माप गात बह्वीर्मे भूयास्त।। 21।।
❀卐 सᳲहिताऽसि विश्वरूपीरा मोर्जा विशाऽऽगौपत्येनाऽऽ रायस्पोषेण सहस्रपोषँ वᳶ पुष्यासं मयि वो राय श्श्रयन्ताम्।।
卐 उप त्वाऽग्ने दिवेदिवे दोषावस्त र्धिया वयम्। नमो भरन्त एमसि।।
卐 राजन्त मध्वराणा ङ्गोपा मृतस्य दीदिविम्। वर्धमानᳩ स्वे दमे।।
卐 स नᳶ पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा न स्स्वस्तये।।
卐 अग्ने।। 22।। ❀ त्वन्नो अन्तमः। उत त्राता शिवो भव वरूथ्यः।।

卐 तन्त्वा शोचिष्ठ दीदिवः। सुम्नाय नून मीमहे सखिभ्यः।।
卐 वसु रग्नि र्वसुश्रवाः। अच्छा नक्षि द्युमत्तमो रयिन्दाः।।
卐 ऊर्जा व॒ पश्या.म्यूर्जा मा पश्यत रायस्पोषेण व॒ पश्यामि रायस्पोषेण मा पश्यतेडास्स्थ मधुकृत स्स्योना माऽऽविशतेरा मदः। सहस्रपोषँ व॒ पुष्यासम्।। 23।। ❀ मयि वो राय श्श्रयन्ताम्।।
卐 तथ्सवितु र्वरेण्यं भर्गो देवस्य धीमहि। धियो यो न॒ प्रचोदयात्।।
卐 सोमान॒ँ स्वरण ङ्कृणुहि ब्रह्मणस्पते। कक्षीवन्तँ य औशिजम्।।
卐 कदा चन स्तरी.रसि नेन्द्र सश्चसि दाशुषे। उपोपे.न्नु मघव न्भूय इ.न्नु ते दान न्देवस्य पृच्यते।।
卐परि त्वाऽग्ने पुरँ वयँ विप्र॒ँ सहस्य धीमहि। धृषद्वर्ण न्दिवेदिवे भेत्तारं भङ्गुरावतः।।
卐अग्ने गृहपते सुगृहपति रह न्त्वया गृहपतिना भूयास॒ँ सुगृहपति र्मया त्वं गृहपतिना भूया श्शत॒ँ हिमा 卐स्ता माशिषमा शासे तन्तवे ज्योतिष्मती 卐न्ता माशिषमा शासेऽमुष्मै ज्योतिष्मतीम्।। 24।।
(भूयास्त स्वस्तयेऽग्ने पुष्यास न्धृषद्वर्ण मेकान्न त्रि॒ँशच्च। 6।)

**आ।का।1 अग्न्युपस्थान ब्राह्मणम् (त्रयोऽनुवाकाः 3)**

❀ अयज्ञो वा एष- योऽसा,मोपप्रयन्तो अध्वर मित्याह स्तोम मेवास्मै युन,क्त्युपेत्याह प्रजा वै पशव उपेमँ लोकं प्रजामेव पशूनिमँ लोक मुपै,त्यस्य प्रत्ना मनु द्युत मित्याह सुवर्गो वै लोक॒ प्रत्न- स्सुवर्गमेव लोक॒ँ समारोह,त्यग्नि र्मूर्धा दिव॒ ककुदित्याह मूर्धानम्।। 25।। ❀ एवैन॒ँ समानाना ङ्करो,त्यथो देवलोकादेव मनुष्यलोके प्रति तिष्ठ, त्ययमिह प्रथमो धायि धातृभि रित्याह मुख्य मेवैन ङ्करो,त्युभा वा मिन्द्राग्नी आहुवध्या इत्याहौजो बल मेवाव रुन्धे,ऽयन्ते योनिर् ऋत्विय इत्याह पशवो वै रयि॒- पशूनेवाव रुन्धे, षड्भि रुप तिष्ठते, षड्वै।। 26।। ❀ ऋतव- ऋतुष्वेव प्रति तिष्ठति, षड्भि रुत्तराभि रुप तिष्ठते, द्वादश सं पद्यन्ते- द्वादश मासा स्सँवथ्सर - स्सँवथ्सर एव प्रति तिष्ठति, यथा वै पुरुषोऽश्वो गौर्जीर्य- त्येव मग्नि राहितो जीर्यति सँवथ्सरस्य परस्ता,दाग्निपावमानीभि रुप तिष्ठते, पुनर्नव मेवैन मजर ङ्करो,त्यथो पुनात्ये,वोप तिष्ठते- योग एवास्यैष उप तिष्ठते।। 27।। ❀ दम एवास्यैष उप तिष्ठते- याञ्ञैवास्यैषोप तिष्ठते, यथा पापीया.न्छ्रेयस आहृत्य नमस्यति तादृगेव त,दायुर्दा अग्नेऽस्यायुर्मे देहीत्याहाऽऽयुर्दा ह्येष, वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष, तनूपा अग्नेऽसि तनुवं मे पाहीत्याह।। 28।। ❀ तनूपा ह्येषो,ऽग्ने यन्मे तनुवा ऊन न्तन्म आ पृणेत्याह- यन्मे प्रजायै पशूना मून- न्तन्म आ पूरयेति वावैतदाह, चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसु- रव्युष्ट्यै वा

एतस्यै पुरा ब्राह्मणा अभैषु- र्व्युष्टि मेवाव रुन्ध, इन्धाना स्त्वा शतम्।। 29।।❀ हिमा इत्याह- शता॒ऽयुः पुरुष श्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठ,त्येषा वै सूर्मी कर्णकाव त्येतया ह स्म वै देवा असुराणा॑ शततर्हा॑ स्तृ॑हन्ति, यदेतया समिध मादधाति- वज्र मेवैत च्छतघ्नीँ यजमानो भ्रातृव्याय प्र हरति स्तृत्या, अछम्बट्कार॑ सन्त्वमग्ने सूर्यस्य वर्चसा॒गथा इत्याहैतत्त्व मसीदमहं भूयास मिति वावैतदाह, त्वमग्ने सूर्यवर्चा असीत्याहा॒ऽशिष मेवैता मा शास्ते।। 30।। (मूर्धान॑ षड्वा एष उप तिष्ठते पाहीत्याह शतमह॑ षोडश च। 7।)

❀ सं पश्यामि प्रजा अह.मित्याह यावन्त एव ग्राम्याः पशव स्तानेवाव रुन्धे,ऽम्भ स्स्थाम्भो वो भक्षीयेत्या.हाम्भो ह्येता, महस्स्थ महो वो भक्षीयेत्याह महो ह्येता,स्सहस्स्थ सहो वो भक्षीयेत्याह सहो ह्येता, ऊर्ज स्स्थोर्जँ वो भक्षीयेति।। 31।।❀ आहोर्जो ह्येता, रेवती रमध्व मित्याह पशवो वै रेवतीः- पशूनेवा॒ऽत्म न्रमयत, -इहैव स्तेतो माऽप गातेत्याह ध्रुवा एवैना अनपगाः कुरुत, -इष्टकचिद्वा अन्यो- ऽग्निः पशुचिदन्य, स्स॑हिताऽसि विश्वरूपीरिति- वथ्स मभि मृश,त्युपैवैन न्धत्ते पशुचित मेनं कुरुते, प्र।। 32।।❀ वा एषोऽस्मा ल्लोका च्च्यवते- य आहवनीय मुपतिष्ठते, गार्हपत्य मुप तिष्ठते,ऽस्मिन्नेव लोके प्रति तिष्ठ,त्यथो गार्हपत्यायैव नि ह्नुते, गायत्रीभि रुप तिष्ठते, तेजो वै गायत्री- तेज एवा॒ऽत्मन्धत्ते,ऽथो यदेत न्तृचमन्वाह सन्तत्यै, गार्हपत्यँ वा अनु द्विपादो वीराः प्र जायन्ते, य एवँ विद्वा न्द्विपदाभि र्गार्हपत्य मुपतिष्ठते।। 33।।❀ आऽस्य वीरो जायत, ऊर्जा वः पश्या.म्यूर्जा मा पश्यतेत्याहा॒ऽशिष मेवैतामा शास्ते, तथ्सवितु र्वरेण्य मित्याह प्रसूत्यै, सोमान॑ स्वरण मित्याह सोमपीथ मेवाव रुन्धे, कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चस मेवाव रुन्धे, कदा चन स्तरी रसीत्याह न स्तरी॑ रात्रिँ वसति।। 34।।❀ य एवँ विद्वा नग्नि मुपतिष्ठते, परि त्वाऽग्ने पुरँ वयमित्याह परिधिमेवैतं परि दधा.त्यस्कन्दा,याग्ने गृहपत इत्याह यथायजु रेवैत,च्छत॑ हिमा इत्याह शतन्त्वा हेमन्ता न्निन्धिषीयेति वावैतदाह, पुत्त्रस्य नाम गृह्णा.त्यन्नाद मेवैन ङ्करोति, तामाशिषमा शासे तन्तवे ज्योतिष्मती मिति ब्रूया-द्यस्य पुत्त्रो ऽजातस्स्या त्तेज.स्व्येवास्य ब्रह्मवर्चसी पुत्त्रो जायते, तामाशिष माशासेऽमुष्मै ज्योतिष्मती मिति ब्रूया-द्यस्य पुत्त्रो जात.स्स्या-त्तेज एवास्मि न्ब्रह्मवर्चस न्दधाति।। 35।। (ऊर्जँ वो भक्षीयेति प्र गार्हपत्य मुपतिष्ठते वसति ज्योतिष्मती मेकान्न त्रि॑शच्च। 8।)

❀ अग्निहोत्र ञ्जुहोति, यदेव किञ्च यजमानस्य स्व-न्तस्यैव तद्रेत स्सिञ्चति, प्रजनने प्रजनन॑ हि वा अग्नि,रथौषधी रन्तगता दहति, तास्ततो भूयसीः प्र जायन्ते, यथ्साय ञ्जुहोति रेत एव तथ्सिञ्चति, प्रैव

प्रातस्तनेन जनयति, तद्रेत स्सिक्त,न्न त्वष्टाऽविकृतं प्र जायते, यावच्छो वै रेतस स्सिक्तस्य।। 36।। ❀ त्वष्टा रूपाणि विकरोति- तावच्छो वै तत्र जायत, -एष वै दैव्य स्त्वष्टा- यो यजते, बह्वीभि रुप तिष्ठते, रेतस एव सिक्तस्य बहुशो रूपाणि वि करोति, स प्रैव जायते, श्वश्श्वो भूया न्भवति- य एवँ विद्वा नग्नि मुपतिष्ठते,ऽह दैवाना मासी- द्रात्रि रसुराणा,न्तेऽसुरा यद्देवानाँ वित्तँ वेद्य मासी- त्तेन सह।। 37।। ❀ रात्रिं प्राविश,न्ते देवा हीना अमन्यन्त, तेऽपश्य.न्नाग्नेयी रात्रि राग्नेया॰ पशव- इम मेवाग्निँ स्तवाम, स न स्स्तुत॰ पशू.न्पुन र्दास्यतीति, तेऽग्नि मस्तुव,'2'न्थ्स एभ्य स्स्तुतो रात्रिया अध्यह रभि पशू.न्निरार्ज,त्ते देवा॰ पशून् वित्त्वा कामा॰ अकुर्वत, य एवँ विद्वानग्नि मुपतिष्ठते- पशुमा न्भवति,।। 38।। ❀ आदित्यो वा अस्माल्लोका दमुं लोकमै,थ्सोऽमुं लोक ङ्गत्वा पुन रिमँ लोक मभ्यध्याय,थ्स इमँ लोक मागत्य मृत्यो रबिभे,न्मृत्युसँयुत इव ह्ययँ लोक,स्सोऽमन्यतेम मेवाग्निँ स्तवानि, स मा स्तुत स्सुवर्गँ लोक ङ्गमयिष्यतीति, सोऽग्नि मस्तौ,थ्स एनँ स्तुत स्सुवर्गँ लोक मगमय,द्यः।। 39।। ❀ एवं विद्वा नग्नि मुपतिष्ठते- सुवर्गमेव लोक मेति, सर्वमायु रे,त्यभि वा एषोऽग्नी~ आ रोहति- य एना.वुपतिष्ठते, यथा खलु वा श्रेया नभ्यारूढ॰ कामयते तथा करोति, नक्त मुप तिष्ठते, न प्रात स्स॰ हि नक्तँ व्रतानि सृज्यन्ते, सह श्रेया॰श्च पापीया॰ श्चाऽऽसाते, ज्योतिर्वा अग्नि स्तमो रात्रि, र्यत्।। 40।। ❀ नक्त मुपतिष्ठते- ज्योतिषैव तम स्तर,त्युपस्थेयोऽग्नी 3 र्नोपस्थेया 3 इत्याहु, र्मनुष्यायेन्वै योऽहरह राहृत्याथैनँ याचति- स इन्वै तमुपार्च्छे,त्यथ को देवा नहरह र्याचिष्यतीति- तस्मान्नोपस्थेयो,ऽथो~ खल्वाहु- राशिषे वै कँ यजमानो यजत इ,त्येषा खलु वै।। 41।। ❀ आहिताग्ने राशी- र्यदग्नि मुपतिष्ठते, तस्मादुपस्थेय॰, प्रजापति॰ पशू नसृजत, ते सृष्टा अहोरात्रे प्राविश,न्ता न्छन्दोभि रन्वविन्द,द्यच्छन्दोभि रुपतिष्ठते- स्वमेव तदन्विच्छति, न तत्र जाम्यस्तीत्याहु- र्योऽहरह रुपतिष्ठत इति, यो वा अग्निं प्रत्यङ्ङुपतिष्ठते- प्रत्येन मोषति, य॰ पराङ् विष्व- ङ्ङजया पशुभिरेति, कवातिर्यङ्ङिवोप तिष्ठेत, नैनं प्रत्योषति- न विष्व ङ्ङजया पशुभि रेति।। 42।। (सिक्तस्य सह भवति यो यत्खलु वै पशुभि स्त्रयोदश च। 9।)

**आ।का।4 अग्न्युपस्थान मन्त्राः षण्मन्त्राः 6 (हविषा घृतेन पर्यन्तम्)**

❀ मम नाम प्रथम ञ्जातवेद॰ पिता माता च दधतु र्यदग्रे। तत्त्वं बिभृहि पुनरा मदैतो स्तवाह न्नाम बिभराण्यग्ने।।

卐 मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः। आयुषे त्वञ्जीवसे वयँ यथायथँ वि परि दधावहै पुनस्ते।।

卐 नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नम स्सम्राजे। अषाढः।। 43।। ❀ अग्नि र्बृहद्वया विश्वजि थ्सहन्त्य श्श्रेष्ठो गन्धर्वः।।

卐 त्वत्पितारो अग्ने देवा स्त्वा.माहुतय स्त्व.द्विवाचनाः। सं मामायुषा सङ्गौपत्येन सुहिते मा धाः।।

卐 अय मग्नि श्श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः। अस्मा अस्तु सुवीर्यम्।।

卐 मनो ज्योति र्जुषता माज्यँ विच्छिन्नँ यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ता स्सन्दधामि हविषा घृतेन।।

**प्रा।का।2 याजमानमन्त्राः – 1 (अनुवाकान्तम् - सप्त मन्त्राः 7)**

卐 पयस्वती रोषधयः।। 44।। ❀ पयस्व द्वीरुधां पयः। अपां पयसो यत्पय स्तेन मामिन्द्र सꣳ सृज।।

卐 अग्ने व्रतपते व्रत ञ्चरिष्यामि तच्छकेय न्तन्मे राध्यताम्।।

卐 अग्निꣳ होतार मिह तꣳ हुवे देवान् यज्ञिया निह यान् हवामहे। आ यन्तु देवा स्सुमनस्यमाना वियन्तु देवा हविषो मे अस्य।।

卐 कस्त्वा युनक्ति स त्वा युनक्तु यानि घर्मे कपाला न्युपचिन्वन्ति।। 45।। ❀ वेधसः। पूष्ण स्ता.न्यपि व्रत इन्द्रवायू वि मुञ्चताम्।।

卐 अभिन्नो घर्मो जीरदानु र्यत आत्त स्तदग न्पुनः। इध्मो वेदिः परिधयश्च सर्वे यज्ञस्याऽऽयु रनु सञ्चरन्ति।।

卐 त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमँ यज्ञꣴ स्वधया ददन्ते तेषा ञ्छिन्नं प्रत्येत द्दधामि स्वाहा घर्मो देवाꣳ अप्येतु।। 46।। (अषाढ ओषधय उपचिन्वन्ति पञ्चचत्वारिꣳशच्च। 10।)

**वै।का।12 याज्याः 5 (एकोनुवाकः 1)**

❀卐 वैश्वानरो न ऊत्याऽऽप्र यातु परावतः। अग्नि रुक्थेन वाहसा।।

卐 ऋतावानँ वैश्वानर मृतस्य ज्योतिष.स्पतिम्। अजस्र.ङ्घर्म मीमहे।।

卐 वैश्वानरस्य दꣳसनाभ्यो बृहदरिणा देक स्स्वपस्यया कविः। उभा पितरा महय न्नजायताग्नि र्द्यावापृथिवी भूरिरेतसा।।

卐 पृष्टो दिवि पृष्टो~ अग्निः पृथिव्यां पृष्टो विश्वा ओषधी रा विवेश। वैश्वानर स्सहसा पृष्टो अग्नि स्स नो दिवा सः।। 47।। ❀ रिषः पातु नक्तम्।।

卐 जातो यदग्ने भुवना व्यख्यः पशुन्न गोपा इर्यः परिज्मा। वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभि स्सदा नः।।

卐 त्वमग्ने शोचिषा शोशुचान आ रोदसी~ अपृणा जायमानः। त्वन्देवा॒ अभिशस्ते रमुञ्चो वैश्वानर जातवेदो महित्वा।।

卐 अस्माक मग्ने मघवथ्सु धारयानामि क्षत्र मजर॒ सुवीर्यम्। वय.ञ्जयेम शतिन॒ सहस्रिणँ वैश्वानर।। 48।। ❀ वाज मग्ने तवोतिभिः।।

卐 वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनाना मभिश्रीः। इतो जातो विश्व मिदँ वि चष्टे वैश्वानरो यतते सूर्येण।।

卐 अव ते हेडो वरुण नमोभि रव यज्ञेभि रीमहे हविर्भिः। क्षयन्नस्मभ्य मसुर प्रचेतो राज न्नेना॒सि शिश्रथः कृतानि।।

卐 उदुत्तमं वरुण पाश मस्म.दवाधमँ वि मध्यमँ श्रथाय। अथा वय मादित्य।। 49।। ❀ व्रते तवानागसो~ अदितये स्याम।।

卐 दधिक्राव्ण्णो अकारिष ञ्जिष्णो रश्वस्य वाजिनः। सुरभि नो मुखा कर-त्प्रण आयू॒षि तारिषत्।।

卐 आ दधिक्रा श्शवसा पञ्च कृष्टी स्सूर्य इव ज्योतिषाऽप स्ततान। सहस्रसा श्शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचा॒सि।।

卐 अग्नि र्मूर्धा[3] ❀ 卐भुवः।[4] ❀

卐 मरुतो यद्ध वो दिव स्सुम्नायन्तो हवामहे। आ तू नः।। 50।। ❀ उप गन्तन।।

卐 या व श्शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्य.न्तानि मरुतो वि यन्त रयिन्नो धत्त वृषण स्सुवीरम्।।

卐 अदितिर्न उरुष्य-त्वदिति श्शर्म यच्छतु। अदितिः पात्व॒हसः।।

卐 महीमूषु मातर॒ सुव्रताना मृतस्य पत्नी मवसे हुवेम। तुविक्षत्रा मजरन्ती मुरूची॒ सुशर्माण मदिति॒ सुप्रणीतिम्।।

---

3

4

卐 सुत्रामाणं पृथिवी न्द्या.मनेहस९ सुशर्माण मदितिं९ सुप्रणीतिम्। दैवी न्नावङ्ग् स्वरित्रा मनागस मस्रवन्ती मा रुहेमा स्वस्तये।।

卐 इमा९ सु नाव माऽरुह९ शतरित्रा९ शतस्फ्याम्। अच्छिद्रां पारयिष्णुम्।। 51।। (दिवा स सहस्रिणँ वैश्वानराऽऽदित्य तू नोऽनेहस९ सुशर्माण मेकान्न वि९शतिश्च।11।)

(देवासुराः परा भूमि र्भूमि रुपप्रयन्त स्सं पश्या.म्ययज्ञ स्सं पश्या.म्यग्निहोत्रं मम नाम वैश्वानर एकादश। 11। देवासुराः क्रुद्ध स्सं पश्यामि स्सं पश्यामि नक्त मुपगन्त नैकपञ्चाशत्।। 51।। देवासुराः पारयिष्णुम्।)

## ॐ ॐ प्रथमकाण्डे षष्ठः प्रपाठकः

### प्रा।का।2 याजमानमन्त्राः - 2 (षडनुवाकाः 6)

❀ सन्त्वा सिञ्चामि यजुषा प्रजा मायु र्धनञ्च। बृहस्पतिप्रसूतो यजमान इह मा रिषत्।।

卐 आज्यमसि सत्यमसि सत्यस्याध्यक्ष.मसि हविरसि वैश्वानरँ वैश्वदेव मुत्पूतशुष्म९ सत्यौजा स्सहोऽसि सहमानमसि सहस्वाराती स्सहस्वारातीयत स्सहस्व पृतना स्सहस्व पृतन्यतः। सहस्रवीर्य.मसि तन्मा जिन्वाऽऽज्यस्याऽऽज्यमसि सत्यस्य सत्यमसि सत्याऽऽयुः।। 1।।❀ असि सत्यशुष्ममसि सत्येन त्वाऽभि घारयामि तस्य ते भक्षीय 卐पञ्चाना न्त्वा वातानाँ यन्त्राय धर्त्राय गृह्णामि 卐पञ्चाना न्त्वर्तूनाँ यन्त्राय धर्त्राय गृह्णामि 卐पञ्चाना न्त्वा दिशाँ यन्त्राय धर्त्राय गृह्णामि 卐पञ्चाना न्त्वा पञ्चजनानाँ यन्त्राय धर्त्राय गृह्णामि 卐चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि 卐ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि 卐क्षत्रस्य त्वौजसे यन्त्राय।। 2।।❀ धर्त्राय गृह्णामि 卐विशे त्वा यन्त्राय धर्त्राय गृह्णामि 卐सुवीर्याय त्वा गृह्णामि 卐सुप्रजास्त्वाय त्वा गृह्णामि 卐रायस्पोषाय त्वा गृह्णामि 卐ब्रह्मवर्चसाय त्वा गृह्णामि 卐भूरस्माक९ 卐हवि र्देवाना 卐माशिषो यजमानस्य 卐देवानान्त्वा देवताभ्यो गृह्णामि 卐कामाय त्वा गृह्णामि।। 3।। (सत्याऽऽयु रोजसे यन्त्राय त्रयस्त्रि९शच्च। 1।)

❀卐ध्रुवोऽसि ध्रुवोऽह९ सजातेषु भूयास न्धीर श्चेत्ता वसुवि 卐दुग्रोऽस्युग्रोऽह९ सजातेषु भूयास मुग्र श्चेत्ता वसुवि 卐दभिभूर स्यभिभू रह९ सजातेषु भूयास मभिभू श्चेत्ता वसुवि 卐द्युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः। 卐इन्धानास्त्वा सुप्रजस स्सुवीरा ज्योग्जीवेम बलिहृतो वयन्ते। 卐यन्मे अग्ने अस्य यज्ञस्य रिष्यात्।। 4।।❀ यद्वा स्कन्दा दाज्यस्योत विष्णो। तेन हन्मि सपत्न न्दुर्मरायु मैन न्दधामि निरृत्या उपस्थे।

卐भू卐र्भुव卐स्सुव卐रुच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते। अग्ने देवेद्ध मन्विद्ध मन्द्रजि卐ह्वामर्त्यस्य ते होत मूर्धन्ना जिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय 卐मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश 卐वागस्यैन्द्री सपत्नक्षयणी।। 5।।❀ वाचा मेन्द्रियेणाऽऽविश 卐वसन्त मृतूनां प्रीणामि स मा प्रीतः प्रीणातु 卐ग्रीष्म मृतूनां प्रीणामि स मा प्रीतः प्रीणातु 卐वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु 卐शरद मृतूनां प्रीणामि सा मा प्रीता प्रीणातु 卐हेमन्तशिशिरा वृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीता 卐मग्नीषोमयो रह न्देवयज्यया चक्षुष्मा न्भूयास 卐मग्ने रह न्देवयज्ययाऽन्नादो भूयासम्।। 6।।❀卐दब्धि रस्यदब्धो भूयास ममु न्दभेय 卐मग्नीषोमयो रह न्देवयज्यया वृत्रहा भूयास 卐मिन्द्राग्नियो रह न्देवयज्य.येन्द्रियाव्यन्नादो भूयास 卐मिन्द्रस्याह न्देवयज्ययेन्द्रियावी भूयासं 卐महेन्द्रस्याह न्देवयज्यया जेमानं महिमान ङ्गमेय 卐मग्ने स्स्विष्टकृतोऽह न्देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठा.ङ्गमेयम्।। 7।। (रिष्या.थ्सपत्नक्षय ण्यन्नादो भूयास॰ षड्विं॰शच्च। 2।)

❀卐 अग्निर्मा दुरिष्टा.त्पातु सविताऽघश॰सा 卐द्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेष॰ 卐सुरूपवर्षवर्ण एहीमा न्भद्रा न्दुर्या॰ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृड्ढ्व मिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टि न्तेऽशीयोपहूत उपहवम्।। 8।।❀ तेऽशीय सा मे सत्याऽऽशीरस्य यज्ञस्य भूया दरेडता मनसा तच्छकेयँ यज्ञो दिव॰ रोहतु यज्ञो दिव ङ्गच्छतु यो देवयानः पन्था स्तेन यज्ञो देवा॰ अप्येत्वस्मा.स्विन्द्र इन्द्रिय न्दधा.त्वस्मा.न्राय उत यज्ञा स्सचन्ता मस्मासु सन्त्वाशिष स्सा नः प्रिया सुप्रतूर्ति र्मघोनी 卐जुष्टिरसि जुषस्व नो जुष्टा नः।। 9।।❀ असि जुष्टिन्ते गमेयं 卐मनो ज्योति र्जुषता माज्यँ विच्छिन्नँ यज्ञ॰ समिम न्दधातु। बृहस्पति स्तनुता मिमन्नो विश्वे देवा इह मादयन्ताम्।

卐ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दस 卐त्प्रजापते र्भागोऽस्यूर्जस्वा न्पयस्वा न्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मि न्लोके।। 10।। (उपहव ञ्जुष्टानस्त्वा षट्च। 3।)

❀ बर्हिषोऽह न्देवयज्यया प्रजावा न्भूयास 卐न्नराश॰सस्याह न्देवयज्यया पशुमा न्भूयास 卐मग्ने स्स्विष्टकृतोऽह न्देवयज्यया ऽऽयुष्मान् यज्ञेन प्रतिष्ठा ङ्गमेय 卐मग्ने रह मुज्जिति मनूज्जेष॰ 卐सोमस्याह मुज्जिति मनूज्जेष 卐मग्ने रह मुज्जिति मनूज्जेष 卐मग्नीषोमयो रह मुज्जिति मनूज्जेष 卐मिन्द्राग्नियो रह

मुज्जिति मनूज्जेष ॐमिन्द्रस्याहम्।। 11।।❀ उज्जिति मनूज्जेषं ॐमहेन्द्रस्याह मुज्जिति मनूज्जेष ॐमग्ने स्स्विष्टकृतोऽह मुज्जिति मनूज्जेषँ
ॐवाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत्। अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः।
ॐउद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन्न्। अथा सपत्ना निन्द्राग्नी मे विषूचीना.न्व्यस्यताम्।
ॐएमा अग्म न्नाशिषो दोहकामा इन्द्रवन्तः।। 12।।❀ वनामहे धुक्षीमहि प्रजा मिषम्।
ॐरोहितेन त्वाऽग्नि र्देवता ङ्गमयतु ॐहरिभ्या न्त्वेन्द्रो देवता ङ्गमय ॐत्वेतशेन त्वा सूर्यो देवता ङ्गमयतु ॐवि ते मुञ्चामि रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि धत्ता दस्मासु द्रविणँ यच्च भद्रं प्रणो ब्रूता द्भागधा न्देवतासु। ॐविष्णो श्शँयो रह न्देवयज्यया यज्ञेन प्रतिष्ठा ङ्गमेयꣳ ॐसोमस्याह न्देवयज्यया।। 13।।❀ सुरेता रेतो धिषीय ॐत्वष्टुरह न्देवयज्यया पशूनाꣳ रूपं पुषेय ॐन्देवानां पत्नी रग्नि र्गृहपति र्यज्ञस्य मिथुन न्तयो रह न्देवयज्यया मिथुनेन प्र भूयासँ ॐवेदोऽसि वित्तिरसि विदेय कर्मासि करुणमसि क्रियासꣳ सनिरसि सनिताऽसि सनेय ङ्घृतवन्त ङ्कुलायिनꣳ रायस्पोषꣳ सहस्रिणँ वेदो ददातु वाजिनम्।। 14।। (इन्द्रस्याह मिन्द्रवन्त स्सोमस्याह न्देवयज्यया चतुश्चत्वारिꣳशच्च। 4।)
❀ॐआ प्यायता न्ध्रुवा घृतेन यज्ञँयज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्न्।।
ॐ प्रजापते र्विभा.न्नाम लोक स्तस्मिꣳ स्त्वा दधामि सह यजमानेन ॐसदसि सन्मे भूया स्सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः ॐप्राच्या न्दिशि देवा ऋत्विजो मार्जयन्ता ॐन्दक्षिणायाम्।। 15।।❀ दिशि मासाः पितरो मार्जयन्तां ॐप्रतीच्या न्दिशि गृहाः पशवो मार्जयन्ता ॐमुदीच्या न्दिश्याप ओषधयो वनस्पतयो मार्जयन्ता ॐमूर्ध्वाया न्दिशि यज्ञ स्सँवथ्सरो यज्ञपति र्मार्जयन्ताँ ॐविष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवी मनु वि क्रमे निर्भक्त स्स यन्द्विष्मो ॐविष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्ष मनु वि क्रमे निर्भक्त स्स यन्द्विष्मो ॐविष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिव मनु वि क्रमे निर्भक्त स्स यन्द्विष्मो ॐविष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशोऽनु वि क्रमे निर्भक्त स्स य न्द्विष्मः।। 16।। (दक्षिणाया मन्तरिक्ष मनु वि क्रमे निर्भक्त स्स य न्द्विष्मो विष्णो रेकान्न त्रिꣳशच्च। 5।)
❀ॐअगन्म सुव स्सुव रगन्म सन्दृशस्ते मा छिथ्सि यत्ते तप स्तस्मै ते माऽऽवृक्षि ॐसुभू रसि श्रेष्ठो रश्मीना मायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धे ॐहीद मह ममुं भ्रातृव्य माभ्यो

दिग्भ्योऽस्यै दिवोऽस्मा दन्तरिक्षा दस्यै पृथिव्या अस्मा दन्नाद्या न्निर्भजामि निर्भक्त स्स यन्द्विष्मः ॥ 17॥ ❀卐सञ्ज्योतिषाऽभूव 卐मैन्द्री मावृत मन्वावर्ते 卐समहं प्रजया सं मया प्रजा समह५ रायस्पोषेण सं मया रायस्पोष 卐स्समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासँ 卐वसुमान् यज्ञो वसीया न्भूयास- 卐मग्न आयू५षि पवस आ सुवोर्ज मिषञ्च नः। आरे बाधस्व दुच्छुनाम्।।

卐अग्ने पवस्व स्वपा अस्मे वर्च स्सुवीर्यम्।। 18।। ❀ दधत्पोष५ रयिं मयि।।

卐 अग्ने गृहपते सुगृहपति रह न्त्वया गृहपतिना भूयास५ सुगृहपति.र्मया त्व.ङ्गृहपतिना भूया श्शत५ हिमा 卐स्ता माशिष मा शासे तन्तवे 卐ज्योतिष्मती न्तामाशिष मा शासेऽमुष्मै ज्योतिष्मती 卐ङ्कस्त्वा युनक्ति स त्वा वि मुञ्च.त्वग्ने व्रतपते व्रत मचारिष न्तदशक न्तन्मे राधि-

卐यज्ञो बभूव स आ।। 19।। ❀ बभूव स प्र जज्ञे स वावृधे। स देवाना मधिपति र्बभूव सो अस्मा५ अधिपती न्करोतु वयङ्ग स्याम पतयो रयीणाम्।

卐गोमा५ अग्नेऽविमा५ अश्वी यज्ञो नृव.थ्सखा सद मिदप्रमृष्यः। इडावा५ एषो असुर प्रजावा न्दीर्घो रयिः पृथुबुध्न स्सभावान्।। 20।। (द्विष्म स्सुवीर्य५ स आ पञ्चत्रि५शच्च। 6।)

**प्रा।का।2 याजमान ब्राह्मणम् – 1 (पञ्चानुवाकाः 5)**

❀ यथा वै समृतसोमा- एवँ वा एते समृतयज्ञा- यद्दर्शपूर्णमासौ, कस्य वाऽह देवा यज्ञ मागच्छन्ति- कस्य वा न बहूनाँ यजमानानाँ, यो वै देवताः पूर्वः परिगृह्णाति- स एनाश्श्वो भूते यजत, एतद्वै देवाना मायतनँ यदाहवनीयो,ऽन्तराऽग्नी पशूना- ङ्गार्हपत्यो मनुष्याणा मन्वाहार्यपचनः पितृणा,मग्निङ्गृह्णाति, स्व एवाऽऽयतने देवताः परि।। 21।। ❀ गृह्णाति, ताश्श्वो भूते यजते, व्रतेन वै मेध्योऽग्नि र्व्रतपति- र्ब्राह्मणो व्रतभृ,द्व्रत मुपैष्य न्ब्रूया,दग्ने व्रतपते व्रत ञ्चरिष्यामी,त्यग्निर्वै देवानाँ व्रतपति- स्तस्मा एव प्रतिप्रोच्य व्रत मालभते, बर्हिषा पूर्णमासे व्रत मुपैति, वथ्सै रमावास्याया,मेतद्ध्येतयो रायतन,मुपस्तीर्यः पूर्वश्चाग्नि रपर श्चेत्याहु, र्मनुष्याः।। 22।। ❀ इन्वा उपस्तीर्ण मिच्छन्ति, किमु देवा येषा न्नवावसान,मुपास्मिन्छ्वो यक्ष्यमाणे देवता वसन्ति- य एवँ विद्वा नग्नि मुपस्तृणाति, यजमानेन ग्राम्याश्च पशवोऽवरुध्या- आरण्या श्चेत्याहु,र्यद्ग्राम्या नुपवसति- तेन ग्राम्या नवरुन्धे, यदारण्यस्याश्ञाति- तेनाऽऽरण्यान्, यदनाश्वा नुपवसे- त्पितृदेवत्य स्स्या,दारण्यस्याश्ञा,तीन्द्रियम्।। 23।। ❀ वा आरण्य- मिन्द्रिय मेवाऽऽत्मन्धत्ते, यदनाश्वा नुपवसे-त्क्षोधुक स्स्या, द्यदश्ञीया- द्रुद्रोऽस्य पशू नभिमन्ये,तापोऽश्ञाति, तन्नेवाशित- न्नेवानशित,न्न क्षोधुको भवति- नास्य रुद्रः पशू नभिमन्यते,

वज्रो वै यज्ञः, क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो, यदनाश्वा नुपवसति- वज्रेणैव साक्षात्क्षुधं भ्रातृव्यꣳ हन्ति।। 24।। (परि मनुष्या इन्द्रियꣳ साक्षात्त्रीणि च। 7।)

❀ यो वै श्रद्धा मनारभ्य यज्ञेन यजते- नास्येष्टाय श्रद्दधते,ऽपः प्रणयति, श्रद्धा वा आप- श्श्रद्धा मेवाऽऽरभ्य यज्ञेन यजत, उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते, तदाहु- रति वा एता वर्त्र न्नेद-न्त्यति वाचँ मनो वावैता नाति नेदन्तीति, मनसा प्रणय.तीयँ वै मनः।। 25।।❀ अनयैवैनाः प्रणय,त्यस्कन्नहवि र्भवति- य एवँ वेद, यज्ञाऽऽयुधानि सम्भरति, यज्ञो वै यज्ञाऽऽयुधानि- यज्ञ मेव तथ्सम्भरति, यदेकमेकꣳ सम्भरे - त्पितृदेवत्यानि स्यु, र्यथ्सह- सर्वाणि मानुषाणि, द्वेद्वे सम्भरति, याज्याऽनुवाक्ययो रेव रूपङ्करो,त्यथो मिथुन मेव, यो वै दश यज्ञाऽऽयुधानि वेद- मुखतोऽस्य यज्ञः कल्पते, स्फ्यः।। 26।।❀ च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला, चैतानि वै दश यज्ञाऽऽयुधानि, य एवँ वेद- मुखतोऽस्य यज्ञः कल्पते, यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते- जुषन्तेऽस्य देवा हव्यꣳ, हवि र्निरुप्यमाण मभिमन्त्रये-ताग्निꣳ होतार मिह तꣳ हुव इति,।। 27।।❀ देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते, जुषन्तेऽस्य देवा हव्य, मेष वै यज्ञस्य ग्रहो, गृहीत्वैव यज्ञेन यजते, तदुदित्वा वाचँ यच्छति यज्ञस्य धृत्या, अथो मनसा वै प्रजापति र्यज्ञ मतनुत, मनसैव तद्यज्ञ न्तनुते- रक्षसा मनन्ववचाराय, यो वै यज्ञँ योग आगते- युनक्ति युङ्क्ते युञ्जानेषु, कस्त्वा युनक्ति स त्वा युनक्त्वित्याह, प्रजापतिर्वै कः- प्रजापतिनैवैनँ युनक्ति युङ्क्ते युञ्जानेषु।। 28।। (वै मन स्स्फ्य इति युनक्त्वेकादश च। 8।)

❀ प्रजापति र्यज्ञा नसृज-ताग्निहोत्र ञ्चाग्निष्टोमञ्च- पौर्णमासी ञ्चोक्थ्य- ञ्चामावास्या ञ्चातिरात्रञ्च, तानुदमिमीत, यावदग्निहोत्र मासी- त्तावानग्निष्टोमो, यावती पौर्णमासी- तावानुक्थ्यो, यावत्यमावास्या- तावानतिरात्रो, य एवँ विद्वा नग्निहोत्र ञ्जुहोति- याव दग्निष्टोमेनोपाऽऽप्नोति - ताव दुपाऽऽप्नोति, य एवँ विद्वा न्पौर्णमासीँ यजते- याव दुक्थ्येनो पाऽऽप्नोति-।। 29।।❀ तावदुपाऽऽप्नोति, य एवँ विद्वा नमावास्याँ यजते- याव दतिरात्रेणोपाऽऽप्नोति- ताव दुपाऽऽप्नोति, परमेष्ठिनो वा एष यज्ञोऽग्र आसी, त्तेन स परमाङ्काष्ठा मगच्छ,त्तेन प्रजापति न्निरवासायय, त्तेन प्रजापतिः परमा.ङ्काष्ठा मगच्छ,त्तेनेन्द्र न्निरवासायय, त्तेनेन्द्रः परमा.ङ्काष्ठा मगच्छ, त्तेनाग्नीषोमौ निरवासायय, त्तेनाग्नीषोमौ परमा,ङ्काष्ठा मगच्छताँ, यः।। 30।।❀ एवँ विद्वा न्दर्.शपूर्णमासौ यजते - परमामेव काष्ठाङ्गच्छति, यो वै प्रजातेन यज्ञेन यजते- प्रप्रजया पशुभि र्मिथुनै र्जायते, द्वादश मासा स्सँवथ्सरो- द्वादश द्वन्द्वानि-

दर्॒शपूर्णमासयो स्तानि संपाद्यानीत्याह॒, वे॒थ्सञ्चोपावसृज- त्युखा ञ्चाधिश्रय- त्यव च हन्ति- दृषदौ च समाह॒-न्त्यधि च वपते- कपालानि चोप दधाति- पुरोडाशञ्च।। 31।❀ अधिश्रय-त्याज्यञ्च-स्तम्बयजुश्च हर-त्यभि च गृह्णाति- वेदिञ्च परिगृह्णाति- पत्नीञ्च सन्नह्यति- प्रोक्षणी श्चाऽऽसादय-त्याज्य,ञ्चैतानि वै द्वाद्वश द्वन्द्वानि दर्॒शपूर्णमासयो, स्तानि य एव॑ संपाद्य यजते- प्रजातेनैव यज्ञेन यजते, प्रप्रजया पशुभि र्मिथुनै र्जायते।। 32।। (उक्थ्येनोपाऽऽप्नो त्यगच्छताँ य॒ पुरोडाशञ्च चत्वारि॑शच्च। 9।)

❀ ध्रुवोऽसि ध्रुवोऽह॑ सजातेषु भूयास मित्याह- ध्रुवा नेवैना न्कुरुत, उग्रोऽस्युग्रोऽह॑ सजातेषु भूयास मित्या-हाप्रतिवादिन एवैना न्कुरुते,ऽभिभू रस्यभिभू रह॑ सजातेषु भूयास मित्याह- य एवैनं प्रत्युत्पिपीते- तमुपास्यते, युनज्मि त्वा ब्रह्मणा दैव्येनेत्या-हैष वा अग्ने योग- स्तेन।। 33।।❀ एवैनँ युनक्ति, यज्ञस्य वै समृद्धेन देवा स्सुवर्गँ लोक मायन्- यज्ञस्य व्यृद्धेनासुरा न्पराभावयन्, यन्मे अग्ने अस्य यज्ञस्य रिष्या दित्याह- यज्ञस्यैव तथ्समृद्धेन यजमान स्सुवर्गँ लोकमेति- यज्ञस्य व्यृद्धेन भ्रातृव्या न्पराभावय,त्यग्निहोत्र मेताभि र्व्याहृतीभि रुपसादये,द्यज्ञमुखँ वा अग्निहोत्रं- ब्रह्मैता व्याहृतयो- यज्ञमुख एव ब्रह्म।। 34।।❀ कुरुते, सँवथ्सरे पर्यागत एताभि रेवोप सादये,द्ब्रह्मणैवोभयत स्सँवथ्सरं परिगृह्णाति, दर्॒शपूर्णमासौ चातुर्मास्या न्यालभमान एताभि र्व्याहृतीभिर् हवी॑ष्या सादये, द्यज्ञमुखँ वै दर्॒शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो, यज्ञमुख एव ब्रह्म कुरुते, सँवथ्सरे पर्यागत- एताभि रेवाऽऽसादये,द्ब्रह्मणैवोभयत स्सँवथ्सरं परि गृह्णाति, यद्वै यज्ञस्य साम्ना क्रियते- राष्ट्रम्।। 35।।❀ यज्ञस्याऽऽशी र्गच्छति, यदृचा विशँ यज्ञस्याऽऽशी र्गच्छ,त्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते, सामिधेनी रनुवक्ष्य- न्नेता व्याहृती॒ पुरस्ता द्दध्या,द्ब्रह्मैव प्रतिपदङ्कुरुते, तथा ब्राह्मण स्साऽऽशीर्केण यज्ञेन यजते, यङ्कामयेत यजमानं भ्रातृव्य मस्य यज्ञस्याऽऽशी र्गच्छेदिति- तस्यैता व्याहृती॒ पुरोऽनुवाक्याया न्दध्या,द्भ्रातृव्यदेवत्या वै पुरोऽनुवाक्या- भ्रातृव्य मेवास्य यज्ञस्य।। 36।।❀ आशी र्गच्छति, यान्कामयेत यजमाना न्थ्समावत्येनान् यज्ञस्याऽऽशी र्गच्छेदिति- तेषा मेता व्याहृती॒ पुरोऽनुवाक्याया अर्धर्च एका न्दध्या- द्याज्यायै पुरस्ता देकाँ- याज्याया अर्धर्च एका,न्तथैना न्थ्समावती- यज्ञस्याऽऽशी र्गच्छति, यथा वै पर्जन्य स्सुवृष्टँ वर्॒ष- त्येवँ यज्ञो यजमानाय वर्॒षति, स्थलयोदकं परिगृह्ण-न्त्याशिषा यज्ञँ यजमान॒ परिगृह्णाति, मनोऽसि प्राजापत्यम्।। 37।।❀ मनसा मा भूतेनाऽऽविशेत्याह॒- मनो वै प्राजापत्यँ- प्राजापत्यो यज्ञो- मन एव यज्ञ मात्म न्धत्ते, वागस्यैन्द्री

सपत्नक्षयणी वाचा मेन्द्रियेणाऽविशेत्या-हैन्द्री वै वा-ग्वाच मेवैन्द्री मात्म न्धत्ते।। 38।। (तेनैव ब्रह्म राष्ट्र मेवास्य यज्ञस्य प्राजापत्य॰ षड्वि॰शच्च। 10।)

❀ यो वै सप्तदशं प्रजापतिँ यज्ञ मन्वायत्तँ वेद- प्रति यज्ञेन तिष्ठति- न यज्ञा द्भ्र॰शत, आश्रावयेति चतुरक्षर- मस्तु श्रौषडिति चतुरक्षरँ- यजेति द्व्यक्षरँ- ये यजामह इति पञ्चाक्षर- न्व्यक्षरो वषट्कार, एष वै सप्तदशः प्रजापति र्यज्ञ मन्वायत्तो, य एवँ वेद- प्रति यज्ञेन तिष्ठति- न यज्ञा.द्भ्र॰शते, यो वै यज्ञस्य प्रायणं प्रतिष्ठाम्।। 39।।❀ उदयनँ वेद- प्रतिष्ठितेनारिष्टेन यज्ञेन स॰स्था ङ्गच्छ, फ्रत्या श्राव फ्रयास्तु श्रौष फ्रड्यज फ्रये यजामहे फ्रवषट्कार, एतद्वै यज्ञस्य प्रायण- मेषा प्रतिष्ठैत दुदयनँ- य एवँ वेद- प्रतिष्ठितेनारिष्टेन यज्ञेन स॰स्था ङ्गच्छति, यो वै सूनृतायै दोहँ वेद- दुह एवैनाँ, यज्ञो वै सूनृता- ऽश्रावयेत्यैवैना मह्वदस्तु।। 40।।❀ श्रौषडि त्युपावास्रा-ग्यजे.त्युदनैषी- द्ये यजामह इत्युपासद- द्वषट्कारेण दो,ग्ध्येष वै सूनृतायै दोहो, य एवँ वेद- दुह एवैना, न्देवा वै सत्र मासत, तेषा न्दिशोऽदस्य, न्त एता माद्रीं पङ्क्ति मपश्य, न्नाश्रावयेति पुरोवात मजनय- न्नस्तु श्रौषडित्यभ्र॰ समप्लावयन्- यजेति विद्युतम्।। 41।।❀ अजनयन्- ये यजामह इति प्रावर्षय- न्नभ्यस्तनयन्वषट्कारेण, ततो वै तेभ्यो दिशः प्राप्यायन्त, य एवँ वेद - प्रास्मै दिशः प्यायन्ते, प्रजापति न्त्वोवेद- प्रजापति स्त्वँवेद, यं प्रजापति र्वेद - स पुण्यो भव,त्येष वै छन्दस्यः प्रजापति, राश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो, य एवँ वेद- पुण्यो भवति, वसन्तम्।। 42।।❀ ऋतूनां प्रीणामीत्या-हर्तवो वै प्रयाजा ऋतूनेव प्रीणाति- तेऽस्मै प्रीता यथापूर्व.ङ्कल्पन्ते, कल्पन्तेऽस्मा ऋतवो- य एवँ वे,दाग्नीषोमयो रह न्देवयज्यया चक्षुष्मा न्भूयास मित्या-हाग्नीषोमाभ्याँ वै यज्ञ श्चक्षुष्मा- न्ताभ्या मेव चक्षु रात्म न्धत्ते,ऽग्ने रह न्देवयज्ययाऽन्नादो भूयास मित्या-हाग्नि र्वै देवाना मन्नाद- स्तेनैव।। 43।।❀ अन्नाद्य मात्म न्धत्ते, दब्धि रस्यदब्धो भूयास ममु न्दभेय मित्या-हैतया वै दब्ध्या देवा असुरा नदभ्नुव- न्तयैव भ्रातृव्य न्दभ्नो, त्यग्नीषोमयो रह न्देवयज्यया वृत्रहा भूयास मित्या-हाग्नीषोमाभ्याँ वा इन्द्रो वृत्र मह- न्ताभ्या मेव भ्रातृव्यं स्तृणुत, इन्द्राग्नियो रह न्देवयज्ययेन्द्रिया.व्यन्नादो भूयास मित्या-हेन्द्रियाव्ये.वान्नादो भव,तीन्द्रस्य।। 44।।❀ अह न्देवयज्ययेन्द्रियावी भूयास मित्या-हेन्द्रियाव्येव भवति, महेन्द्रस्याह न्देवयज्यया जेमानं महिमान.ङ्गमेय मित्याह- जेमान मेव महिमान.ङ्गच्छ, त्यग्ने स्स्विष्टकृतोऽह न्देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठा ङ्गमेय मित्या-हाऽऽयुरेवाऽऽत्म न्धत्ते- प्रति यज्ञेन तिष्ठति।। 45।। (प्रतिष्ठा मह्वदस्तु विद्युतँ वसन्त न्तेनैवेन्द्र स्याष्टात्रि॰शच्च। 11।)

卐 इन्द्रँ वो विश्वतस्परि हवामहे जनेभ्यः। अस्माक मस्तु केवलः।।

卐 इन्द्र न्नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः। शूरो नृषाता शवस श्चकान आ गोमति व्रजे भजा त्वन्नः।।

卐 इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु। इन्द्र तानि त आ वृणे।।

卐 अनु ते दायि मह इन्द्रियाय सत्रा ते विश्व मनु वृत्रहत्ये।। अनु।। 46।। ❀ क्षत्र मनु सहो यजत्रेन्द्र देवेभि रनु ते नृषह्ये।।

卐 आ यस्मि न्थ्सप्त वासवा स्तिष्ठन्ति स्वारुहो यथा। ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः।।

卐 आमासु पक्व मैरय आ सूर्य॰ रोहयो दिवि। घर्मन्न साम न्तपता सुवृक्तिभि र्जुष्ट ङ्गिर्वणसे गिरः।।

卐 इन्द्र मि.द्गाथिनो बृह दिन्द्र मर्केभि रर्किणः। इन्द्रँ वाणी रनूषत।।

卐 गायन्ति त्वा गायत्रिणः।। 47।। ❀ अर्चन्त्यर्क मर्किणः। ब्रह्माण.स्त्वा शतक्रत.वुद्व॰श मिव येमिरे।।

卐 अ॰होमुचे प्रभरेमा मनीषा मोषिष्ठदाव्न्ने सुमति.ङ्गृणानाः। इदमिन्द्र प्रति हव्य.ङ्गृभाय सत्या स्सन्तु यजमानस्य कामाः।।

卐 विवेष यन्मा धिषणा जजान स्तवै पुरा पार्या दिन्द्र मह्नः। अ॰हसो यत्र पीपर द्यथा नो नावेव यान्त मुभये हवन्ते।।

卐 प्रसम्राजं प्रथम मध्वराणाम्।। 48।। ❀ अ॰होमुचँ वृषभँ यज्ञियानाम्। अपा न्नपात मश्विना हयन्त मस्मि.न्नर इन्द्रिय न्धत्त मोजः।।

卐 वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधस्पद न्तमी.ङ्कृधि यो अस्मा॰ अभिदासति।।

卐 इन्द्र क्षत्र मभि वाम मोजोऽजायथा वृषभ चर्षणीनाम्। अपानुदो जन ममित्रयन्त मुरु न्देवेभ्यो अकृणोरु लोकम्।।

卐 मृगो न भीमः कुचरो गिरिष्ठाः परावतः।। 49।। ❀ आ जगामा परस्याः। सृक॰ स॰शाय पवि मिन्द्र तिग्मँ विशत्रू न्ताढि विमृधो नुदस्व।।

卐 विशत्रून् विमृधो नुद वि वृत्रस्य हनू रुज। विमन्यु.मिन्द्र भामितोऽमित्रस्याभिदासतः।।

卐 त्रातार मिन्द्र मवितार मिन्द्र॰ हवेहवे सुहव॰ शूर मिन्द्रम्। हुवे नु शक्रं पुरुहूत मिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः।।

卐 मा ते अस्याम्।। 50।। ❀ सहसाव न्परिष्ठा वघाय भूम हरिवः परादै। त्रायस्व नोऽवृकेभि र्वरूथै स्तव प्रियास स्सूरिषु स्याम।।

卐 अनवस्ते रथ मश्वाय तक्ष न्त्वष्टा वज्रं पुरुहूत द्युमन्तम्। ब्रह्माण इन्द्रं महयन्तो अर्कै रवर्धय न्नहये हन्तवा उ।।

卐 वृष्णे यत्ते वृषणो अर्क मर्चा निन्द्र ग्रावाणो अदिति स्सजोषाः। अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून्।। 51।। (वृत्रहत्येऽनु गायत्रिणोऽध्वराणां परावतोऽस्या मष्टाचत्वारि॰शच्च। 12।)

(सन्त्वा सिञ्चामि ध्रुवोऽस्यग्निर्मा बर्हिषोऽह माप्यायता मगन्म यथा वै यो वै श्रद्धां प्रजापति र्यज्ञा न्ध्रुवोऽसीत्याह यो वै सप्तदश मिन्द्रँ वो द्वादश। 12। सन्त्वा बर्हिषोऽहँ यथा वा एवँ विद्वा न्छ्रौषट्थ्सहसाव न्नेकपञ्चाशत्। सन्त्वा सिञ्चामि दस्यून्।)

### ≤◊≥ ≤◊≥प्रथमकाण्डे सप्तमः प्रपाठकः

#### प्रा।का।2 याजमान ब्राह्मणम् – 2 (एकोऽनुवाकः 1)

❀ पाकयज्ञँ वा अन्वाहिताग्नेः पशव उप तिष्ठन्त, इडा खलु वै पाकयज्ञ, स्सैषाऽन्तरा प्रयाजानूयाजान् यजमानस्य लोकेऽवहिता, तामाह्रियमाणा मभि मन्त्रयेत- सुरूपवर्षवर्ण एहीति, पशवो वा इडा- पशू नेवोप ह्वयते, यज्ञँ वै देवा अदुहन्- यज्ञोऽसुरा॰ अदुह, न्तेऽसुरा यज्ञदुग्धाः पराऽभवन्, यो वै यज्ञस्य दोहँ विद्वान्।। 1।। ❀ यजते-ऽप्यन्यँ यजमान न्दुहे, सा मे सत्याऽऽशी रस्य यज्ञस्य भूयादित्या-हैष वै यज्ञस्य दोह- स्तेनैवैन न्दुहे, प्रत्ता वै गौर्दुहे- प्रत्तेडा यजमानाय दुह, एते वा इडायै स्तना, इडोपहूतेति वायु र्वथ्सो यर्हि होतेडा मुपह्वयेत- तर्हि यजमानो होतार मीक्षमाणो वायुं मनसा ध्यायेत्।। 2।। ❀ मात्रे वथ्स मुपावसृजति, सर्वेण वै यज्ञेन देवा स्सुवर्गँ लोक माय, न्पाकयज्ञेन मनु रश्राम्य,थ्सेडा मनु मुपाऽऽवर्तत, तान्देवासुरा व्यह्वयन्त- प्रतीची न्देवाः- पराची मसुरा, स्सा देवानुपाऽऽवर्तत, पशवो वै तद्देवा नवृणत- पशवोऽसुरा नजहु,र्यङ्कामयेतापशु स्स्यादिति- पराची न्तस्येडा मुपह्वये-तापशु रेव भवति, यम्।। 3।। ❀ कामयेत पशुमान्थ्स्यादिति- प्रतीची न्तस्येडा मुपह्वयेत- पशुमानेव भवति, ब्रह्मवादिनो वदन्ति, स त्वा इडा मुपह्वयेत- य इडा

मुपह्वया॒ऽऽत्मान॒ मिडा॑या मुप॒ह्वये॒तेति॒, सा न॑ः प्रि॒या सु॒प्रतू॑र्ति म॒घोनीत्या॒-हेडा॑ मे॒वोप॒ह्वया॒ऽऽत्मान॒ मिडा॑या मु॒पह्वयते॒, व्य॑स्त मि॒व वा॒ ए॒तद्य॒ज्ञस्य॒- यदि॒डा सा॒मि प्रा॒श्ञ्न॒न्ति।। 4।। सा॒मि मा॒र्जय॑न्त, ए॒त त्प्र॒ति वा॒ असु॒राणाँ य॒ज्ञो व्य॑च्छि॒द्यत॒, ब्रह्म॑णा दे॒वा स्स॒मद॑धु, बृह॒स्पति॒ स्तनु॒ता मि॒मन्न इत्या॑ह- ब्रह्म॒ वै दे॒वानां॒ बृह॒स्पति॒ ब्र॑ह्म॒णैव य॒ज्ञ॑ स्सन्द॑धाति, विच्छि॑न्नँ य॒ज्ञ॑ स्स॒मिम न्द॑धात्वि॒त्या॑ह॒- सन्त॑त्यै, विश्वे॑ दे॒वा इ॒ह मा॑दयन्ता॒ मित्या॑ह- सन्त॑त्यै॒व य॒ज्ञ न्दे॒वेभ्यो॒ऽनु दि॑शति॒, याँ वै।। 5।। य॒ज्ञे द॒क्षिणा॑ न्द॒दाति॒- ताम॑स्य प॒शवो॒ऽनु सङ्क्राम॑न्ति॒, स ए॒ष ई॑जा॒नो॒ऽप॒शु र्भा॑वु॒को॒, यज॑माने॒न खलु॒ वै तत्का॒र्य॑ मि॒त्याहु॒, र्यथा॑ दे॒वत्रा॑ द॒त्त.ङ्कु॒र्वीता॒ऽऽत्म न्प॒शून्॒ र॒मये॒तेति॒, ब्र॒ध्न पि॒न्वस्वे॒त्या॑ह- य॒ज्ञो वै ब्र॒ध्नो य॒ज्ञमे॒व तन्म॑ह॒य-त्यथो॑ दे॒वत्रै॒व द॒त्त.ङ्कु॑रुत॒, आ॒त्म न्प॒शून्॒ र॑मयते॒, द॒दतो॑ मे॒ मा क्षा॑यी॒त्या॒-हाक्षि॑तिं मे॒वोपै॑ति, कु॒र्व॒तो मे॒ मोप॑दस॒दित्या॑ह- भू॒मान॑ मे॒वोपै॑ति।। 6।। (वि॒द्वा न्ध्या॑ये॒ द्भ॑वति॒ यं प्रा॑श्ञ्न॒न्ति॒ याँ वै म॒ एका॑न्न वि॑ꣳश॒तिश्च।। 1।)

**प्रा।का।4 हौत्र ब्राह्मणम् – 3 (एको॑ऽनुवाक: 1)**

सꣳश्र॑वा ह सौव॑र्चनस स्तु॒मिञ्ज॑ मौपो॑दिति मु॒वाच- यथ्स॒त्रिणा॑ꣳ होता॑ऽभू॑ः- कामि॒डा मु॒पाह्व॑था इति॒- तामु॒पाह्व॒ इति॒ हो॒वाच॒, या प्रा॒णेन॑ दे॒वा न्दा॒धार- व्या॒नेन॑ मनु॒ष्या॑- नपा॒नेन॑ पि॒तॄनिति॒, छि॒नत्ति॒ सा न छि॒नत्ती '3' इति॒ छि॒नत्तीति॒ हो॒वाच॒, श॒रीरँ वा अ॒स्यै त.दुपा॒ह्वथा इति॒ हो॒वाच॒, गौर्वै।। 7।। अ॒स्यै श॒रीर.ङ्गाँ वाव तौ तत्प॒र्यव॒द॒ताँ, या य॒ज्ञे दी॒यते॒- सा प्रा॒णेन॑ दे॒वा न्दा॑धार॒, यया॑ मनु॒ष्या॒ जीव॑न्ति- सा व्या॒नेन॑ मनु॒ष्या॑न्, यां पि॒तृभ्यो॒ घ्नन्ति॑- सा॒ऽपा॒नेन॑ पि॒तॄन्, य॒ ए॒वँ वेद॒- पशु॒मा न्भ॒व,त्यथ॒ वै ता॒मुपा॒ह्व इति॒ हो॒वाच॒, या प्र॒जा॑ः प्र॒भव॑न्ती॑ः प्र॒त्याभ॒वती॒, त्यन्नँ वा अ॒स्यै॒तत्।। 8।। उ॒पाह्व॒था इति॒ हो॒वा,चौष॑धयो वा अ॒स्या अन्न॒- मोष॑धयो॒ वै प्र॒जा॑ः प्र॒भव॑न्ती॑ः प्र॒त्या भ॑वन्ति॒, य॒ ए॒वँ वे॒दान्ना॒दो भ॒व,त्यथ॒ वै ता॒मुपा॒ह्व इति॒ हो॒वाच॒, या प्र॒जा॑ः प॒राभ॑वन्ती रनुगृ॒ह्णाति॑ प्र॒त्याभ॑वन्ती गृ॒ह्णातीति॒, प्र॒ति॒ष्ठाँ वा अ॒स्यै॒त दु॒पाह्व॒था इति॒ हो॒वा,चेयँ वा अ॒स्यै प्र॒ति॒ष्ठा।। 9।। इ॒यँ वै प्र॒जा॑ः प॒राभ॑वन्ती॒ रनु॒गृह्णा॑ति॒- प्र॒त्याभ॑वन्ती गृ॒ह्णाति॒, य॒ ए॒वँ वेद॒- प्र॒त्ये॒व ति॒ष्ठ,त्यथ॒ वै ता॒मुपा॒ह्व इति॒ हो॒वाच॒, यस्यै॒ नि॒क्रम॑णे घृ॒तं प्र॒जा स्स॒ञ्जीव॑न्ती॑ः पि॒बन्ती॑ति॒, छि॒नत्ति॒ सा न छि॒नत्ती '3' इति॒ न छि॒नत्ती॑ति॒ हो॒वाच॒, प्र तु ज॒नयती॒त्येष वा इ॒डा मु॒पाह्व॒था इति॒ हो॒वाच॒, वृ॒ष्टिर्वा इ॒डा- वृ॒ष्ट्यै वै नि॒क्रम॑णे घृ॒तं प्र॒जा स्स॒ञ्जीव॑न्ती॑ः पि॒बन्ति॒, य॒ ए॒वँ वेद॒- प्रै॒व जा॑यते॒ऽन्ना॒दो भ॑वति।। 10।। (गौर्वा अ॒स्यै त॒त्प्र॒ति॒ष्ठा॒ऽह्व॒था इति॒ वि॑ꣳश॒तिश्च।। 2।)

परोऽक्षँ वा अन्ये देवा इज्यन्ते- प्रत्यक्ष मन्ये, यद्यजते- य एव देवाः परोक्ष मिज्यन्ते- तानेव तद्यजति, यदन्वाहार्य माहर- त्येते वै देवाः प्रत्यक्षँ- यद्ब्राह्मणा- स्तानेव तेन प्रीणा,त्यथो दक्षिणैवास्यैषा,ऽथो यज्ञस्यैव छिद्र मपि दधाति, यद्वै यज्ञस्य क्रूरँ यद्विलिष्ट -न्तदन्वाहार्येण।। 11।। अन्वाहरति, तदन्वाहार्यस्यान्वाहार्यत्व, न्देवदूता वा एते- यदृत्विजो, यदन्वाहार्य माहरति- देवदूतानेव प्रीणाति, प्रजापति र्देवेभ्यो यज्ञा न्व्यादिश,थ्स रिरिचानोऽमन्यत, स एत मन्वाहार्य मभक्त मपश्य, त्तमात्म न्नधत्त, स वा एष प्राजापत्यो- यदन्वाहार्यो, यस्यैवँ विदुषोऽन्वाहार्य आह्रियते- साक्षादेव प्रजापति मृध्नो,त्यपरिमितो निरुप्यो,ऽपरिमितः प्रजापतिः, प्रजापतेः।। 12।। आस्यै, देवा वै यद्यज्ञेऽकुर्वत- तदसुरा अकुर्वत, ते देवा एतं प्राजापत्य मन्वाहार्य मपश्य, न्तमन्वाहरन्त, ततो देवा अभव, न्पराऽसुरा, यस्यैवँ विदुषोऽन्वाहार्य आह्रियते- भवत्यात्मना- पराऽस्य भ्रातृव्यो भवति, यज्ञेन वा इष्टी पक्वेन पूर्ती, यस्यैवँ विदुषोऽन्वाहार्य आह्रियते- स त्वेवेष्टापूर्ती, प्रजापते र्भागोऽसि।। 13।। इत्याह- प्रजापति मेव भागधेयेन समर्धय,त्यूर्जस्वा न्पयस्वानित्या- होर्ज मेवास्मि न्पयो दधाति, प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्या-हाऽऽशिष मेवैतामाशास्ते,ऽक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिन्लोक इत्याह- क्षीयते वा अमुष्मि.न्लोकेऽन्न, मितःप्रदानँ ह्यमुष्मिन्लोके प्रजा उपजीवन्ति, यदेव मभिमृश-त्यक्षिति मेवैन द्गमयति- नास्यामुष्मि न्लोकेऽन्न.ङ्क्षीयते।। 14।। (अन्वाहार्येण प्रजापते रसि ह्यमुष्मि न्लोके पञ्चदश च। 3।)

बर्हिषोऽह न्देवयज्यया प्रजावा न्भूयास मित्याह- बर्हिषा वै प्रजापतिः प्रजा असृजत- तेनैव प्रजा स्सृजते, नराशꣳसस्याह न्देवयज्यया पशुमा न्भूयास मित्याह- नराशꣳसेन वै प्रजापतिः पशू नसृजत- तेनैव पशून्थ्सृजते,ऽग्ने स्स्विष्टकृतोऽह न्देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठाङ्गमेय मित्या- हाऽऽयुरेवाऽऽत्मन्धत्ते- प्रति यज्ञेन तिष्ठति, दर्शपूर्णमासयोः।। 15।। वै देवा उज्जिति मनूदजय- न्दर्शपूर्णमासाभ्या मसुरा नपानुद,न्ताग्ने रह मुज्जिति मनूज्जेष मित्याह- दर्शपूर्णमासयो रेव देवतानाँ यजमान उज्जिति मनूज्जयति- दर्शपूर्णमासाभ्यां भ्रातृव्या नपनुदते, वाजवतीभ्याँ व्यूह-त्यन्नँ वै वाजो- ऽन्न मेवावरुन्धे, द्वाभ्यां प्रतिष्ठित्यै, यो वै यज्ञस्य द्वौ दोहौ विद्वान् यजत- उभयतः।। 16।। एव यज्ञ न्दुहे- पुरस्ताच्चोपरिष्टा, च्चैष वा अन्यो यज्ञस्य दोह- इडाया मन्यो, यर्हि होता यजमानस्य नाम गृह्णीया- त्तर्हि ब्रूया, देमा अग्म न्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहे,ऽथो उभयत एव यज्ञ

न्दुहे- पुरस्ता च्चोपरिष्टाच्च, रोहितेन त्वाऽग्नि र्देवता ङ्गमय त्वि-त्याहैते वै देवाश्वाः।। 17।। ❀ यजमानः प्रस्तरो- यदेतैः प्रस्तरं प्रहरति- देवाश्वै रेव यजमान९ सुवर्गँ लोक ङ्गमयति, वि ते मुञ्चामि रशना वि रश्मी नित्या-हैष वा अग्ने र्विमोक- स्तेनैवैनँ विमुञ्चति, विष्णो श्शँयो रह न्देवयज्यया यज्ञेन प्रतिष्ठा ङ्गमेय मित्याह- यज्ञो वै विष्णु- र्यज्ञ एवान्ततः प्रतितिष्ठति, सोमस्याह न्देवयज्यया सुरेताः।। 18।। ❀ रेतो धिषीयेत्याह- सोमो वै रेतोधा- स्तेनैव रेत आत्म न्धत्ते, त्वष्टु रह न्देवयज्यया पशूना९ रूपं पुषेय मित्याह- त्वष्टा वै पशूनां मिथुनाना९ रूपकृ- त्तेनैव पशूना९ रूप मात्म न्धत्ते, देवानां पत्नी रग्नि र्गृहपति र्यज्ञस्य मिथुन न्तयो रह न्देवयज्यया मिथुनेन प्रभूयास मित्या-हैतस्माद्वै मिथुना त्प्रजापति र्मिथुनेन।। 19।। ❀ प्राजायत, तस्मादेव यजमानो मिथुनेन प्रजायते, वेदोऽसि वित्तिरसि विदेयेत्याह- वेदेन वै देवा असुराणाँ वित्तँ वेद्य मविन्दन्त, तद्वेदस्य वेदत्वँ, यद्यद्भ्रातृव्य स्याभिध्याये- त्तस्य नाम गृह्णीया- त्तदेवास्य सर्वँ वृङ्क्ते, घृतवन्त ङ्कुलायिन९ रायस्पोष९ सहस्रिणँ वेदो ददातु वाजिन मित्याह- प्रसहस्रं पशू नाप्नो,त्याऽस्य प्रजायाँ वाजी जायते- य एवँ वेद।। 20।। (दर्शपूर्णमासयो रुभयतो देवाश्वा स्सुरेताः प्रजापति र्मिथुनेनाऽऽप्नोत्यष्टौ च। 4।)

❀ ध्रुवाँ वै रिच्यमानाँ यज्ञोऽनुरिच्यते- यज्ञँ यजमानो- यजमानं प्रजा-, ध्रुवा माप्यायमानाँ यज्ञोऽन्वाप्यायते- यज्ञँ यजमानो- यजमानं प्रजा, आप्यायता न्ध्रुवा घृतेनेत्याह- ध्रुवा मेवाऽऽप्याययति, ता माप्यायमानाँ यज्ञोऽन्वाप्यायते- यज्ञँ यजमानो- यजमानं प्रजाः, प्रजापते र्विभा न्नाम लोक स्तस्मिङ्स्त्वा दधामि सह यजमानेनेति।। 21।। ❀ आ-हायँ वै प्रजापते र्विभा न्नाम लोक- स्तस्मिन्नेवैन न्दधाति- सह यजमानेन, रिच्यत इव वा एत-द्यद्यजते, यद्यजमानभागं प्राश्ञा-त्यात्मान मेव प्रीणा, त्येतावान् वै यज्ञो- यावान् यजमानभागो, यज्ञो यजमानो, यद्यजमानभागं प्राश्ञाति- यज्ञ एव यज्ञं प्रतिष्ठापय, त्येतद्वै सूयवस९ सोदकँ यद्बर्हिश्चाऽऽपश्चैतत्।। 22।। ❀ यजमानस्याऽऽयतनँ- यद्वेदि, र्यत्पूर्णपात्र मन्तर्वेदि निनयति- स्व एवाऽऽयतने सूयवस९ सोदक ङ्कुरुते, सदसि सन्मे भूया इत्या-हाऽऽपो वै यज्ञ- आपोऽमृतँ- यज्ञ मेवामृत मात्मन्धत्ते, सर्वाणि वै भूतानि व्रत मुपयन्त मनूपयन्ति, प्राच्या न्दिशि देवा ऋत्विजो मार्जयन्ता मित्या-हैष वै दर्शपूर्णमासयो रवभृथः,।। 23।। ❀ यान्येवैनं भूतानि व्रत मुपयन्त मनूपयन्ति- तैरेव सहावभृथ मवैति, विष्णुमुखा वै देवा श्छन्दोभि रिमा न्लोका ननपजय्य मभ्यजयन्, यद्विष्णुक्रमा न्क्रमते- विष्णुरेव भूत्वा यजमान श्छन्दोभि रिमा न्लोका ननपजय्य मभिजयति, विष्णोः क्रमोऽस्यभिमातिहेत्याह- गायत्री वै पृथिवी-

त्रैष्टुभ मन्तरिक्ष- ञ्जागती द्यौ- रानुष्टुभी र्दिश- श्छन्दोभि रेवेमा न्लोकान् यथापूर्व मभि जयति।। 24।।
(यजमानेनेति चैतदवभृथो दिश स्सप्त च। 4।)

❀ अगन्म सुव स्सुव रगन्मेत्याह - सुवर्गमेव लोक मेति, सन्दृशस्ते मा छिथ्सि यत्ते तप स्तस्मै ते माऽवृक्षीत्याह- यथायजुरेवैत,थ्सुभूरसि श्रेष्ठो रश्मीना मायुर्धा अस्यायु र्मे धेहीत्या हा-ऽशिष मेवैता माशास्ते, प्र वा एषोऽस्मा ल्लोकाच्च्यवते- यः।। 25।। ❀ विष्णुक्रमा न्क्रमते, सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते, ब्रह्मवादिनो वदन्ति- स त्वै विष्णुक्रमा न्क्रमेत- य इमा न्लोका न्भ्रातृव्यस्य सँविद्य- पुनरिमँ लोकं प्रत्यवरोहे दि,त्येष वा अस्य लोकस्य प्रत्यवरोहो- यदा.हेद मह ममुं भ्रातृव्य माभ्यो दिग्भ्योऽस्यै दिव इ-तीमानेव लोका न्भ्रातृव्यस्य सँविद्य- पुनरिमँ लोकं प्रत्यवरोहति, सम्।। 26।। ❀ ज्योतिषाऽभूव मित्याहास्मि.न्नेव लोके प्रति तिष्ठ,त्यैन्द्री मावृत मन्वावर्त इत्या-हासौ वा आदित्य इन्द्र- स्तस्यैवाऽऽवृत मनु पर्यावर्तते, दक्षिणा पर्यावर्तते- स्वमेव वीर्य मनु पर्यावर्तते- तस्मा द्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरो-ऽथो आदित्यस्यैवाऽऽवृत मनु पर्यावर्तते, समहं प्रजया सं मया प्रजेत्याहाऽऽशिषम्।। 27।। ❀ एवैता माशास्ते, समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यास मित्याह- यथायजु रेवैत, द्वसुमान् यज्ञो वसीया न्भूयास मित्या-हाऽऽशिष मेवैता माशास्ते, बहु वै गार्हपत्यस्यान्ते मिश्र मिव चर्यत, आग्निपावमानीभ्या ङ्गार्हपत्य मुपतिष्ठते- पुनात्येवाग्निं पुनीत आत्मान, न्द्वाभ्यां प्रतिष्ठित्या, अग्ने गृहपत इत्याह।। 28।। ❀ यथायजुरेवैत,च्छतꣳ हिमा इत्याह- शतन्त्वा हेमन्ता निन्धिषीयेति वावैतदाह, पुत्रस्य नाम गृह्ण-त्यन्नाद मेवैन ङ्करोति, तामाशिष माशासे तन्तवे ज्योतिष्मती मिति ब्रूया-द्यस्य पुत्रोऽजातस्स्या- त्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते, तामाशिष माशासेऽमुष्मै ज्योतिष्मती मिति ब्रूया- द्यस्य पुत्रः।। 29।। ❀ जात स्स्या- त्तेज एवास्मि न्ब्रह्मवर्चस न्दधाति, यो वै यज्ञं प्रयुज्य न विमुञ्च- त्यप्रतिष्ठानो वै स भवति, कस्त्वा युनक्ति स त्वा विमुञ्च.त्वित्याह- प्रजापति र्वै कः- प्रजापतिनैवैनँ युनक्ति- प्रजापतिना विमुञ्चति प्रतिष्ठित्या, ईश्वरँ वै व्रत मविसृष्टं प्रदहो,ऽग्ने व्रतपते व्रत मचारिष मित्याह- व्रत मेव।। 30।। ❀ वि सृजते शान्त्या अप्रदाहाय, पराङ् वाव यज्ञ एति न नि वर्तते पुनर्यो वै यज्ञस्य पुन.रालम्भँ विद्वान् यजते, तमभि नि वर्तते, यज्ञो बभूव स आ बभूवेत्या-हैष वै यज्ञस्य पुनरालम्भ- स्तेनैवैनं पुन रा लभते,ऽनवरुद्धा वा एतस्य विरा-ड्य आहिताग्नि, स्सन्नसभः पशवः खलु वै ब्राह्मणस्य सभेष्ट्वा प्राङुत्क्रम्य ब्रूया,द्गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञ इ-त्यव सभाꣳ रुन्धे प्र सहस्रं पशू नाप्नो-त्याऽस्य प्रजायाँ वाजी जायते।।

31।। (यस्स माशिष.ङ्गृहपत इत्याहामुष्मै ज्योतिष्मती मिति ब्रूया द्यस्य पुत्रो व्रत मेव खलु वै चतुर्विꣳशतिश्च। 5।)

**सौ।का।6 वाजपेय मन्त्राः – 1 (षडनुवाकाः 6)**

卐देव सवितः प्र सुव यज्ञं प्र सुव यज्ञपतिं भगाय दिव्यो गन्धर्वः। केतपूः केतन्नः पुनातु वाचस्पति र्वाच मद्य स्वदाति नः।।

卐 इन्द्रस्य वज्रोऽसि वार्त्रघ्न स्त्वयाऽयँ वृत्रँ वध्यात्।।

卐 वाजस्य नु प्रसवे मातरं मही मदिति न्नाम वचसा करामहे। यस्यामिदँ विश्वं भुवन मा विवेश तस्यान्नो देव स्सविता धर्म साविषत्।।

卐 अप्सु।। 32।। ❀ अन्त रमृत मप्सु भेषज मपा मुत प्रशस्ति.ष्वश्वा भवथ वाजिनः।।

卐 वायुर्वा त्वा मनुर्वा त्वा गन्धर्वा स्सप्तविꣳशतिः। ते अग्रे अश्व माऽयुञ्जन्ते अस्मि न्जव मादधुः।।

卐 अपा न्नपा.दाशुहेमन् य ऊर्मिः ककुद्मा न्प्रतूर्ति र्वाजसातम स्तेनायँ वाजꣳ सेत्।।

卐 विष्णोः क्रमोऽसि 卐विष्णोः क्रान्तमसि 卐विष्णो र्विक्रान्त म 卐स्यङ्कौ न्यङ्का वभितो रथँ यौ ध्वान्तँ वाताग्र मनु सञ्चरन्तौ दूरेहेति रिन्द्रियावा न्पतत्री ते नोऽग्नयः पप्रयः पारयन्तु।। 33।। (अप्सु न्यङ्कौ पञ्चदश च। 7।)

卐देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाज ञ्जेष 卐न्देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठ न्नाकꣳ रुहेय 卐मिन्द्राय वाचँ वदतेन्द्रँ वाज ञ्जापयतेन्द्रो वाज मजयित्।।

卐अश्वाजनि वाजिनि वाजेषु वाजिनीव.त्यश्वा न्थ्समथ्सु वाजय।

卐अर्वाऽसि 卐सप्तिरसि 卐वाज्यसि 卐वाजिनो वाज न्धावत मरुतां प्रसवे जयत 卐वि योजना मिमीध्व मध्वन स्स्कभ्नीत।। 34।। ❀ काष्ठा ङ्गच्छत-

卐 वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्व न्तृप्ता यात पथिभि र्देवयानैः।।

卐 ते नो अर्वन्तो हवनश्रुतो हवँ विश्वे श्रृण्वन्तु वाजिनः। मितद्रव स्सहस्रसा मेधसाता सनिष्यवः। महो ये रत्नꣳ समिथेषु जभ्रिरे

卐 शन्नो भवन्तु वाजिनो हवेषु।। देवताता मितद्रव स्स्वर्काः। जम्भयन्तोऽहिँ वृकꣳ रक्षाꣳसि सनेम्यस्म द्युयवन्न्।। 35।। ❀ अमीवाः।।
卐 एष स्य वाजी क्षिपणि न्तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि। क्रतु न्दधिक्रा अनु सन्तवीत्व त्पथा मङ्काꣳ स्यन्वापनीफणत्।।
卐 उत स्मास्य द्रवत स्तुरण्यतः पर्णं न्न वे रनु वाति प्रगर्धिनः। श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्ण्ण स्सहोर्जा तरित्रतः।।
卐 आ मा वाजस्य प्रसवो जगम्या दा द्यावापृथिवी विश्वशम्भू। आ मा गन्तां पितरा।। 36।। ❀ मातरा चाऽऽमा सोमो अमृतत्वाय गम्यात्।।
卐 वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाज ञ्जेष्यन्तो बृहस्पते र्भाग मव जिघ्रत 卐वाजिनो वाजजितो वाजꣳ ससृवाꣳसो वाज ञ्जिगिवाꣳसो बृहस्पते र्भागे नि मृड्ढ 卐मियँ व स्सा सत्या सन्धाऽभू द्या मिन्द्रेण समधध्व 卐मजीजिपत वनस्पतय इन्द्रँ वाजँ वि मुच्यध्वम्।। 37।। (स्कभ्नीत युयव न्पितरा द्विचत्वारिꣳशच्च। 8।)
🏺❀卐क्षत्रस्योल्बमसि 卐क्षत्रस्य योनिरसि 卐जाय एहि सुवो रोहाव 卐रोहाव हि सुव 卐रहन्नौ वुभयो स्सुवो रोक्ष्यामि 卐वाजश्च 卐प्रसव 卐श्चापिजश्च 卐क्रतुश्च 卐सुवश्च 卐मूर्धा च 卐व्यश्नियश्चा 卐श्चाऽऽन्त्यायन 卐श्चान्त्यश्च 卐भौवनश्च 卐भुवन 卐श्चाधिपतिश्च।
卐आयु र्यज्ञेन कल्पतां 卐प्राणो यज्ञेन कल्पता 卐मपानः।। 38।। ❀ यज्ञेन कल्पताँ 卐व्यानो यज्ञेन कल्पता 卐श्चक्षु र्यज्ञेन कल्पताꣳ 卐श्रोत्रँ यज्ञेन कल्पतां 卐मनो यज्ञेन कल्पताँ 卐वाग्यज्ञेन कल्पता 卐मात्मा यज्ञेन कल्पताँ 卐यज्ञो यज्ञेन कल्पताꣳ-
卐सुव र्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूम 卐समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषो 卐ऽन्नाय त्वा 卐ऽन्नाद्याय त्वा 卐वाजाय त्वा 卐वाजजित्यायै त्वा 卐ऽमृत मसि 卐पुष्टिरसि प्रजननमसि।। 39।। (अपानो वाजाय नव च। 9।)
🏺❀卐वाजस्येमं प्रसव स्सुषुवे अग्रे सोमꣳ राजान मोषधीष्वप्सु। ता अस्मभ्यं मधुमती र्भवन्तु वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः।।
卐 वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः। स विराजं पर्येति प्रजान न्प्रजां पुष्टिं वर्धयमानो अस्मे।।

卐 वाजस्येमं प्रसव श्शिश्रिये दिव मिमा च विश्वा भुवनानि सम्राट्। अदित्सन्त न्दापयतु प्रजान न्रयिम्।। 40।। ❀ च न स्सर्ववीरा न्नि यच्छतु।।
卐 अग्ने अच्छावदेह नः प्रति न स्सुमना भव। प्रणो यच्छ भुवस्पते धनदा असि नस्त्वम्।।
卐 प्रणो यच्छ.त्वर्यमा प्रभगः प्र बृहस्पतिः। प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः।।
卐 अर्यमणं बृहस्पति मिन्द्र न्दानाय चोदय। वाचँ विष्णुꣳ सरस्वतीꣳ सवितारम्।। 41।। ❀ च वाजिनम्।।
卐 सोमꣳ राजानँ वरुण मग्नि मन्वारभामहे। आदित्यान् विष्णुꣳ सूर्यं ब्रह्माणञ्च बृहस्पतिम्।।
卐 देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तु र्यन्त्रेणाग्ने स्त्वा साम्राज्येनाभि षिञ्चा 卐--मीन्द्रस्य- 卐 --बृहस्पते स्त्वा साम्राज्येनाभिषिञ्चामि।। 42।। (रयिꣳ सवितारꣳ षड्विꣳशच्च। 10।)
❀卐अग्नि रेकाक्षरेण वाच मुदजय 卐दश्विनौ द्व्यक्षरेण प्राणापाना वुदजयताँ 卐विष्णु स्त्र्यक्षरेण त्रीन्लोका नुदजय 卐थ्सोम श्चतुरक्षरेण चतुष्पदः पशू नुदजय 卐त्पूषा पञ्चाक्षरेण पङ्क्ति मुदजय 卐द्धाता षडक्षरेण षड्टृतू नुदजय 卐न्मरुत स्सप्ताक्षरेण सप्तपदाꣳ शक्वरी मुदजय 卐न्बृहस्पति रष्टाऽक्षरेण गायत्री मुदजय 卐न्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोम मुदजयत्।। 43।। ❀卐वरुणो दशाक्षरेण विराज मुदजय 卐दिन्द्र एकादशाक्षरेण त्रिष्टुभ मुदजय 卐द्विश्वे देवा द्वादशाक्षरेण जगती मुदजयन् 卐वसव स्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोम मुदजय 卐न्रुद्रा श्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोम मुदजय 卐न्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोम मुदजय 卐न्नदिति ष्षोडशाक्षरेण षोडशꣳ स्तोम मुदजय 卐त्प्रजापति स्सप्तदशाक्षरेण सप्तदशꣳ स्तोम मुदजयत्।। 44।। (त्रिवृतꣳ स्तोम मुदजय थ्षड्चत्वारिꣳशच्च। 11।)
❀卐उपयामगृहीतोऽसि नृषदन्त्वा द्रुषदं भुवनसद मिन्द्राय जुष्ट.ङ्गृह्णा 卐म्येष ते योनि रिन्द्राय 卐त्वोपयामगृहीतो ऽस्यप्सुषदन्त्वा घृतसदँ व्योमसद मिन्द्राय जुष्ट ङ्गृह्णा 卐म्येष ते योनि रिन्द्राय 卐त्वोपयामगृहीतोऽसि पृथिविषद न्त्वाऽन्तरिक्षसद न्नाकसद मिन्द्राय जुष्ट ङ्गृह्णा 卐म्येष ते योनि रिन्द्राय त्वा।।
卐 ये ग्रहाः पञ्चजनीना येषा न्तिस्त्रः परमजाः। दैव्यः कोशः।। 45।। ❀ समुब्जितः। तेषाँ विशिप्रियाणा मिष मूर्जꣳ समग्रभी 卐मेष ते योनि रिन्द्राय त्वा।।

卐 अपा॰ रस मुद्वयस॰ सूर्यरश्मि॰ समाभृतम्। अपा॰ रसस्य यो रस स्तँ वो गृह्णा म्युत्तम 卐मेष ते योनि रिन्द्राय त्वा।।

卐 अया विष्ठा जनय न्कर्वराणि स हि घृणि रुरु र्वराय गातुः। स प्रत्युदै द्धरुणो मध्वो अग्र॰ स्वायाँ यत्तनुवा न्तनू मैरयत।।

卐 उपयामगृहीतोऽसि प्रजापतये त्वा जुष्ट ङ्गृह्णा 卐म्येष ते योनिः प्रजापतये त्वा।। 46।। (कोश स्तनुवा न्त्रयोदश च। 12।)

**वै।का।12 याज्या: 7 (एकोनुवाक: 1)**

❀卐अन्वह मासा अन्विद्वना- न्यन्वोषधी रनु पर्वतासः। अन्विन्द्र॰ रोदसी वावशाने अन्वापो अजिहत जायमानम्।।

卐 अनु ते दायि मह इन्द्रियाय सत्रा ते विश्व मनु वृत्रहत्ये। अनु क्षत्र मनु सहो यजत्रेन्द्र देवेभि रनु ते नृषह्ये।।

卐 इन्द्राणी मासु नारिषु सुपत्नी मह मश्रवम्। न ह्यस्या अपर ञ्चन जरसा।। 47।। ❀ मरते पतिः।।

卐 नाह मिन्द्राणि रारण सख्यु र्वृषाकपेर् ऋते। यस्येद मप्य॰ हविः प्रिय न्देवेषु गच्छति।।

卐 यो जात एव प्रथमो मनस्वा न्देवो देवा न्क्रतुना पर्यभूषत्। यस्य शुष्मा द्रोदसी अभ्यसेता न्नृम्णस्य मह्ना स जनास इन्द्रः।।

卐 आ ते मह इन्द्रोत्युग्र समन्यवो यथ्समरन्त सेनाः। पताति दिद्यु न्नर्यस्य बाहुवो र्मा ते।। 48।। ❀ मनो विष्वद्रिय.ग्वि चारीत्।।

卐 मा नो मर्धी रा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते। नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वय मिन्द्र स्तुवन्तः।।

卐 आ तू भर माकि रेत त्परि ष्ठा.द्विद्मा हि त्वा वसुपतिँ वसूनाम्। इन्द्र यत्ते माहिन न्दत्र मस्त्यस्मभ्य न्तद्धर्यश्व।। 49।। ❀ प्र यन्धि।।

卐 प्रदातार॰ हवामह इन्द्र मा हविषा वयम्। उभा हि हस्ता वसुना पृणस्वाऽऽ प्र यच्छ दक्षिणा.दोत सव्यात्।।

卐 प्रदाता वज्री वृषभ स्तुराषा.ड्छुष्मी राजा वृत्रहा सोमपावा। अस्मिन् यज्ञे बर्हिष्या निषद्याथा भव यजमानाय शँ योः।।

卐 इन्द्र स्सुत्रामा स्ववा॑ँ अवोभि स्सुमृडीको भवतु विश्ववेदाः। बाधता न्द्वेषो अभय ङ्कृणोतु सुवीर्यस्य।। 50।। ❀ पतय स्स्याम।।

卐 तस्य वय॑ँ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम। स सुत्रामा स्ववा॑ँ इन्द्रो अस्मे आरा च्चि.द्वेष स्सनुत युयोतु।।

卐 रेवतीर्न स्सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभि र्मदेम।।

卐 प्रो ष्वस्मै पुरोरथ मिन्द्राय शूष मर्चत। अभीके चिदु लोककृ थ्सङ्गे समथ्सु वृत्रहा। अस्माकं बोधि चोदिता नभन्ता मन्यकेषाम्। ज्याका अधि धन्वसु।। 51।। (जरसा मा ते हर्यश्व सुवीर्यस्याध्येक ञ्च। 13।)

(पाकयज्ञ॑ँ सङ्ग्श्रवाꣳ परोऽक्षं बर्हिषोऽह न्ध्रुवा मगन्मेत्याह देव सवित र्देवस्याह.ङ्क्षत्रस्योल्बँ वाज स्याग्नि रेकाक्षरेणोपयामगृहीतोऽसि नृषद मन्वह मासा स्त्रयोदश।। पाकयज्ञं परोक्ष न्ध्रुवाँ वि सृजते च न स्सर्ववीरां पतय स्स्यामैकपञ्चाशत्।। 51। पाकयज्ञ न्धन्वसु।)

## ॐ ॐप्रथमकाण्डे अष्टमꣳ प्रपाठकः

### वै।का।1 राजसूय मन्त्राः,ब्राह्मणञ्च 1 (विंशत्यनुवाकाः 20)

❀ अनुमत्यै पुरोडाश मष्टाकपाल न्निर्वपति- धेनु र्दक्षिणा, ये प्रत्यञ्च श्शम्याया अवशीयन्ते- तन्नैरृत मेककपाल-ङ्कृष्णँ वासꣳ कृष्णतूष न्दक्षिणा, 卐वीहि स्वाहाऽऽहुतिञ्जुषाण 卐एष ते निरृते भागो भूते हविष्मत्यसि मुञ्चेम म॑ँहसस्स्वाहा 卐 नमो य इदञ्चकारा,-ऽऽदित्य.ञ्चरु न्निर्वपति- वरो दक्षिणा,ऽऽग्नावैष्णव मेकादशकपालँ- वामनो वही दक्षिणा,ऽऽग्नीषोमीयम्।। 1।। ❀ एकादशकपाल॑ँ- हिरण्य न्दक्षि,णैन्द्र मेकादश कपाल- मृषभो वही दक्षिणा,ऽऽग्नेय मष्टाकपाल मैन्द्र न्द-ध्यृषभो वही दक्षि,णैन्द्राग्न न्द्वादशकपालँ वैश्वदेव ञ्चरुं- प्रथमजो वथ्सो दक्षिणा, सौम्य॑ँ श्यामाक ञ्चरुँ- वासो दक्षिणा, सरस्यत्यै चरु॑ँ सरस्वते चरुं- मिथुनौ गावौ दक्षिणा।। 2।। (अग्नीषोमीय ञ्चतुस्त्रि॑ँशच्च। 1।)

❀ आग्नेय मष्टाकपाल न्निर्वपति- सौम्य ञ्चरु॑ँ- सावित्र न्द्वादशकपाल॑ँ- सारस्वत ञ्चरुं- पौष्ण ञ्चरुं- मारुत॑ँ सप्तकपालँ- वैश्वदेवी मामिक्षा- न्द्यावापृथिव्य मेककपालम्।। 3।। (आग्नेय॑ँ सौम्यं मारुत मष्टादश। 2।)

❀ ऐन्द्राग्न मेकादशकपालँ- मारुती मामिक्षाँ- वारुणी मामिक्षा-ङ्काय मेककपालं-

卐 प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः।।

卐 मोषूण इन्द्र पृथ्सु देवास्तु स्म ते शुष्मि.न्नवया। महीह्यस्य मीढुषो यव्या। हविष्मतो मरुतो वन्दते गीः।।

卐 यद्ग्रामे यदरण्ये यथ्सभायाँ यदिन्द्रिये। यच्छूद्रे यदर्य एन श्चकृमा वयम्। यदेकस्याधि धर्मणि तस्यावयजन.मसि स्वाहा।।

卐 अक्र न्कर्म कर्मकृत स्सह वाचा मयोभुवा। देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः।। 4।। (वयँ य.द्विꣳशतिश्च। 3।)

❀ अग्नयेऽनीकवते पुरोडाश मष्टाकपाल न्निर्वपति- साकꣳ सूर्येणोद्यता, मरुद्भ्य स्सान्तपनेभ्यो- मध्यन्दिने चरुं, मरुद्भ्यो गृहमेधिभ्य- स्सर्वासा न्दुग्धे सायञ्चरुं,-

卐 पूर्णा दर्वि परा पत सुपूर्णा पुन रापत। वस्नेव विक्रीणावहा इष मूर्जꣳ शतक्रतो।।

卐 देहि मे ददामि ते नि मे धेहि नि ते दधे। निहार मिन्नि मे हरा निहारम्।। 5।। ❀ निहरामि ते।। मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपाल न्निर्वपति- साकꣳ सूर्येणोद्यता,ऽऽग्नेय मष्टाकपाल न्निर्वपति- सौम्य ञ्चरुꣳ- सावित्र न्द्वादशकपालꣳ- सारस्वत ञ्चरुं- पौष्ण ञ्चरु- मैन्द्राग्न मेकादशकपाल- मैन्द्र ञ्चरुँ- वैश्वकर्मण मेककपालम्।। 6।। (हरा निहार न्त्रिꣳशच्च। 4।)

❀ सोमाय पितृमते पुरोडाशꣳ षट्कपाल न्निर्वपति- पितृभ्यो बर्हिषद्भ्यो धानाः- पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थ-

卐 मेतत्ते ततꣳ ये च त्वाम 卐न्वेतत्ते पितामह- 卐 --प्रपितामहꣳ ये चत्वाम 卐न्वत्र पितरो यथाभागं मन्दध्वꣳ-

卐 सुसन्दृशन्त्वा वयं मघव न्मन्दिषीमहि। प्रनूनं पूर्णवन्धुर स्स्तुतो यासि वशाꣳ अनु। योजा न्विन्द्र ते हरीꣲ। 7।।

❀卐 अक्ष.न्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती। योजा न्विन्द्र ते हरी।।

卐 अक्ष न्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः।।

卐 परेत पितर स्सोम्या गम्भीरैः पथिभिः पूर्व्यैः। अथा पितृ न्थ्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्ति।।

卐 मनो न्वाहुवामहे नाराश॰सेन स्तोमेन पितृणाञ्च मन्मभिः।।
卐 आ।। 8।। ❀ न एतु मनः पुनः क्त्वे दक्षाय जीवसे। ज्योक्क सूर्य न्दृशे।।
卐 पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवँ व्रात॰ सचेमहि।।
卐 यदन्तरिक्षं पृथिवी मुत द्याँ यन्मातरं पितरँ वा जिहि॰सिम। अग्निर्मा तस्मा देनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मा.मनेनसम्।। 9।। (हरी मन्मभि रा चतुश्चत्वारि॰शच्च। 5।)
❀ प्रतिपूरुष मेककपाला न्निर्वप- त्येक मतिरिक्तँ -
卐यावन्तो गृह्यास्स्म स्तेभ्यः कमकरं 卐पशूना॰ शर्मासि शर्म यजमानस्य शर्म मे य 卐च्चैक एव रुद्रो न द्वितीयाय तस्थ 卐आखुस्ते रुद्र पशु स्तञ्जुष 卐स्वैष ते रुद्र भाग स्सह स्वस्राऽम्बिकया तञ्जुषस्व 卐भेषज ङ्गवेऽश्वाय पुरुषाय भेषज मथो अस्मभ्यं भेषज॰ सुभेषजम्।। 10।। ❀ यथाऽसति।।
卐 सुगं मेषाय मेष्या 卐अवाम्ब रुद्र मदिम.ह्यव देव न्त्र्यम्बकम्। यथा न श्श्रेयसः कर द्यथा नो वस्यसः कर द्यथा नः पशुमतः कर द्यथा नो व्यवसाययात्।।
卐 त्र्यम्बकँ यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुक.मिव बन्धना न्मृत्यो र्मुक्षीय माऽमृतात्।।
卐 एष ते रुद्र भाग स्त.ञ्जुषस्व तेनावसेन परो मूजवतोऽती 卐ह्यवतत.धन्वा पिनाकहस्तः कृत्तिवासाः।। 11। (सुभेषज मिहि त्रीणि च। 6।)
❀ ऐन्द्राग्न न्द्वादशकपालँ- वैश्वदेव ञ्चरु- मिन्द्राय शुनासीराय पुरोडाश न्द्वादशकपालँ- वायव्यं पय- स्सौर्य मेककपाल- न्द्वादशगव॰ सीर न्दक्षिणा,ऽऽग्नेय मष्टाकपाल न्निर्वपति- रौद्र ङ्गावीधुक ञ्चरु- मैन्द्र न्दधि- वारुणँ यवमय ञ्चरुँ- वहिनी धेनु र्दक्षिणा, 卐ये देवाः पुरस्सदोऽग्निनेत्रा- 卐--दक्षिणसदो यमनेत्राः- 卐--पश्चात्सद स्सवितृनेत्रा- 卐--उत्तरसदो वरुणनेत्रा- 卐-- उपरिषदो बृहस्पतिनेत्रा- रक्षोहण स्ते नः पान्तु ते नोऽवन्तु तेभ्यः।। 12।। ❀ नम स्तेभ्य स्स्वाहा 卐समूढ॰ रक्ष स्सन्दग्ध॰ रक्ष इद मह॰ रक्षोऽभि सन्दहा 卐म्यग्नये रक्षोघ्ने स्वाहा 卐यमाय- 卐सवित्रे- 卐वरुणाय- 卐बृहस्पतये दुवस्वते- रक्षोघ्ने स्वाहा- प्रष्टिवाहो रथो दक्षिणा 卐देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्या॰ रक्षसो वध ञ्जुहोमि 卐हत॰ रक्षो 卐ऽवधिष्म रक्षो, यद्वस्ते- तद्दक्षिणा।। 13।। (तेभ्यः पञ्चचत्वारि॰शच्च। 7।)
❀ धात्रे पुरोडाश न्द्वादशकपाल न्निर्वप- त्यनुमत्यै चरु॰- राकायै चरु॰- सिनीवाल्यै चरु- ङ्कुह्वै चरुं- मिथुनौ गावौ दक्षिणा,ऽऽग्नावैष्णव मेकादश कपाल न्निर्वप- त्यैन्द्रावैष्णव मेकादशकपालँ- वैष्णव

न्त्रिकपालँ- वामनो वही दक्षिणा,ऽग्नीषोमीय मेकादशकपाल न्निर्वप-तीन्द्रासोमीय मेकादशकपाल९- सौम्य ञ्चरुं- बभ्रु र्दक्षिणा, सोमापौष्ण ञ्चरु न्निर्वप- त्यैन्द्रापौष्ण ञ्चरुं- पौष्ण ञ्चरु६- श्यामो दक्षिणा, वैश्वानर न्द्वादश कपाल न्निर्वपति- हिरण्य न्दक्षिणा, वारुणँ यवमय ञ्चरु- मश्वो दक्षिणा।। 14।।
(वैश्वानर न्द्वादश कपाल न्निरष्टौ च। 8।)

❀ बार्हस्पत्य ञ्चरु न्निर्वपति ब्रह्मणो गृहे- शितिपृष्ठो दक्षि,णैन्द्र मेकादशकपाल९ राजन्यस्य गृह- ऋषभो दक्षिणा,ऽदित्य ञ्चरुं महिष्यै गृहे- धेनु र्दक्षिणा, नैर्ऋत ञ्चरुं परिवृक्त्यै गृहे- कृष्णानाँ व्रीहीणा न्नखनिर्भिन्न ङ्कृष्णा कूटा दक्षिणा,ऽग्नेय मष्टाकपाल९ सेनान्यो गृहे- हिरण्य न्दक्षिणा, वारुण न्दशकपाल९ सूतस्य गृहे- महानिरष्टो दक्षिणा, मारुत९ सप्तकपाल ङ्ग्रामण्यो गृहे- पृश्नि र्दक्षिणा सावित्र न्द्वादशकपालम्।। 15।। ❀ क्षत्तु र्गृह उपध्वस्तो दक्षिणा,ऽश्विन न्द्विकपाल९ सङ्ग्रहीतु र्गृहे- सवात्यौ दक्षिणा, पौष्ण ञ्चरुं भागदुघस्य गृहे- श्यामो दक्षिणा, रौद्र ङ्गावीधुक ञ्चरु मक्षाऽवापस्य गृहे- शबल उद्वारो दक्षि,णेन्द्राय सुत्राम्णे पुरोडाश मेकादशकपालं प्रति निर्वप.तीन्द्राया९होमुचे, ऽयन्नो राजा वृत्रहा राजा भूत्वा वृत्रँ वध्या -न्मैत्राबार्हस्पत्यं भवति- श्वेतायै श्वेतवथ्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य- आश्वत्थे।। 16।। ❀ पात्रे चतुस्स्रक्तौ स्वयमवपन्नायै शाखायै कर्णा९श्चाकर्णा९श्च तण्डुलान् विचिनुया,द्ये कर्णा- स्स पयसि बार्हस्पत्यो, येऽकर्णा- स्स आज्ये मैत्र, स्स्वयङ्कृता वेदि र्भवति- स्वयन्दिनं बर्हि- स्स्वयङ्कृत इध्म, स्सैव श्वेता श्वेतवथ्सा दक्षिणा।। 17।। (सावित्र न्द्वादशकपाल माश्वत्थे त्रयस्त्रि९शच्च। 9।)

❀ अग्नये गृहपतये पुरोडाश मष्टाकपाल न्निर्वपति कृष्णानाँ व्रीहीणा९, सोमाय वनस्पतये श्यामाक ञ्चरु९, सवित्रे सत्यप्रसवाय पुरोडाश न्द्वादशकपाल माशूनाँ व्रीहीणा९, रुद्राय पशुपतये गावीधुक ञ्चरुं, बृहस्पतये वाचस्पतये नैवार ञ्चरु, मिन्द्राय ज्येष्ठाय पुरोडाश मेकादशकपालं महाव्रीहीणां, मित्राय सत्यायाऽम्बाना ञ्चरुँ, वरुणाय धर्मपतये यवमय ञ्चरु९,-
सविता त्वा प्रसवाना९ सुवता मग्नि र्गृहपतीना९ सोमो वनस्पतीना९ रुद्रः पशूनाम्।। 18।। ❀ बृहस्पति र्वाचा मिन्द्रो ज्येष्ठानां मित्र स्सत्यानाँ वरुणो धर्मपतीनाँ ये देवा देवसुवस्स्थ त इम मामुष्यायण मनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्या यैष वो भरता राजा सोमोऽस्माकं ब्राह्मणाना९ राजा प्रति त्यन्नाम राज्य मधायि स्वान्तनुवँ वरुणो अशिश्रेच्छुचे र्मित्रस्य व्रत्या अभूमामन्महि महत ऋतस्य नाम सर्वे व्राता वरुणस्याभूवन्वि मित्र एवै रराति मतारी

दसूषुदन्त यज्ञिया ऋतेन व्युत्रितो जरिमाणन्न आन ꖦद्विष्णोः क्रमोऽसि ꖦविष्णोः क्रान्तमसि ꖦविष्णोर्विक्रान्त मसि।। 19।। (पशूनाँ व्राताः पञ्चविꣳशतिश्च। 10।)

ꖦअर्थेतस्स्था-- ꖦऽपां पतिरसि- ꖦवृषाऽस्यूर्मि- ꖦवृषसेनोऽसि - ꖦ व्रजक्षितस्स्थ- ꖦमरुता मोजस्स्थ- ꖦसूर्यवर्चसस्स्थ- ꖦसूर्यत्वचसस्स्थ - ꖦमान्दास्स्थ- ꖦवाशास्स्थ- ꖦशक्करीस्स्थ- ꖦविश्वभृतस्स्थ- ꖦजनभृतस्स्था- ꖦऽग्ने स्तेजस्यास्स्था- ꖦऽपा मोषधीनाꣳ रसस्स्था-ऽपो देवी मधुमती रगृह्ण न्नूर्जस्वती राजसूयाय चितानाः। याभि र्मित्रावरुणा वभ्यषिञ्चन् याभि रिन्द्र मनय न्नत्यरातीः। राष्ट्रदास्स्थ राष्ट्र न्दत्त स्वाहा ꖦ -- राष्ट्रदा स्स्थ राष्ट्र ममुष्मै दत्त।। 20।। (अत्येकादश च। 11।)

ꖦदेवी राप स्संमधुमती मधुमतीभि स्सृज्यध्वं महि वर्चः≈ क्षत्रियाय वन्वाना ꖦअनाधृष्टा स्सीदतोर्जस्वती महि वर्चः क्षत्रियाय दधती ꖦरनिभृष्टमसि वाचो बन्धु स्तपोजा स्सोमस्य दात्रमसि ꖦश्शुक्रा व श्शुक्रेणोत्पुनामि चन्द्रा श्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः।
ꖦसधमादो द्युम्निनी रूर्ज एता अनिभृष्टा अपस्युवो वसानः। पस्त्यासु चक्रे वरुण स्सधस्थ मपाꣳ शिशुः।। 21।। मातृतमास्वन्तः।
ꖦक्षत्रस्योल्बमसि ꖦक्षत्रस्य योनिर ꖦस्याविन्नो अग्नि र्गृहपति ꖦराविन्न इन्द्रो वृद्धश्रवा ꖦआविन्नः पूषा विश्ववेदा ꖦआविन्नौ मित्रावरुणा वृतावृधा ꖦवाविन्ने द्यावापृथिवी धृतव्रते ꖦआविन्ना देव्यदिति र्विश्वरू ꖦप्याविन्नोऽय मसा वामुष्यायणोऽस्याँ विश्यस्मि न्राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्या ꖦयैष वो भरता राजा ꖦ सोमोऽस्माकं ब्राह्मणानाꣳ रा ꖦजेन्द्रस्य।। 22।। वज्रोऽसि वार्त्रघ्न स्त्वयाऽयँ वृत्रँ वध्या ꖦच्छत्रुबाधनास्स्थ ꖦपात मा प्रत्यञ्चं पात मा तिर्यञ्च मन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात ꖦहिरण्यवर्णा वुषसाँ विरोकेऽयस्स्थूणा वुदितौ सूर्यस्याꣳरोहतँ वरुण मित्र गर्त न्तत श्चक्षाथा मदिति न्दितिञ्च।। 23।। (शिशु रिन्द्रस्यैकचत्वारिꣳशच्च। 12।)

ꖦसमिध मातिष्ठ गायत्री त्वा छन्दसा मवतु त्रिवृथ्स्तोमो रथन्तरꣳ सामाग्नि र्देवता ब्रह्म द्रविण ꖦमुग्रा मा तिष्ठ त्रिष्टुप्त्वा छन्दसा मवतु पञ्चदशस्तोमो बृहथ्सामेन्द्रो देवता क्षत्र न्द्रविणँ ꖦविराज मातिष्ठ जगती त्वा छन्दसा मवतु सप्तदशस्तोमो वैरूपꣳ साम मरुतो देवता विड्द्रविण ꖦमुदीची मातिष्ठानुष्टुप्त्वा।। 24।। छन्दसा मवत्वेकविꣳशस्स्तोमो वैराजꣳ साम मित्रावरुणौ देवता बल

न्द्रविण फमूर्ध्वा मातिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रि९शौ स्तोमौ शाक्वररैवते सामनी बृहस्पति र्देवता वर्चो द्रविण फमीदृ फङ्क्कान्यादृ फङ्क्कैतादृङ्क्क फप्रतिदृङ्क्क फमितश्च फसम्मितश्च फसभराः।।

फशुक्रज्योतिश्च फचित्रज्योतिश्च फसत्यज्योतिश्च फज्योतिष्मा९श्च फसत्य फश्चर्तपाश्च।। 25।। ❀फअत्य९हाः।।

फअग्नये स्वाहा फसोमाय स्वाहा फसवित्रे स्वाहा फसरस्वत्यै स्वाहा फपूष्णे स्वाहा फबृहस्पतये स्वा फहेन्द्राय स्वाहा फघोषाय स्वाहा फश्लोकाय स्वा फहा९शाय स्वाहा फभगाय स्वाहा फक्षेत्रस्य पतये स्वाहा फपृथिव्यै स्वाहा फऽन्तरिक्षाय स्वाहा फदिवे स्वाहा फसूर्याय स्वाहा फचन्द्रमसे स्वाहा फनक्षत्रेभ्य स्स्वाहा फऽद्भ्य स्स्वा फहौषधीभ्य स्स्वाहा फवनस्पतिभ्य स्स्वाहा फचराचरेभ्यस्स्वाहा फपरिप्लवेभ्य स्स्वाहा फसरीसृपेभ्य स्स्वाहा।। 26।। (अनुष्टुप्स्वर्तपाश्च सरीसृपेभ्य स्स्वाहा। 13।)

❀फसोमस्य त्विषिरसि तवेव मे त्विषि र्भूया फदमृतमसि मृत्योर्मा पाहि फदिद्योन्मा पा फह्यवेष्टा दन्दशूका फनिरस्त न्नमुचे श्शिरः।

फसोमो राजा वरुणो देवा धर्मसुवश्च ये। ते ते वाच९ सुवन्ता.न्ते ते प्राण९ सुवन्ता.न्ते ते चक्षु स्सुवन्ता. न्ते ते श्रोत्र९ सुवन्ता९-

फसोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेः।। 27।। ❀ तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयो र्वीर्येण मरुता मोजसा फक्षत्राणा ङ्क्षत्रपति र फस्यतिदिवस्पाहि फसमाववृत्र न्नधरा गुदीची रहिं बुध्निय मनु सञ्चरन्ती स्ता४ पर्वतस्य वृषभस्य पृष्ठे नाव श्चरन्ति स्वसिच इयानाः।

फरुद्र यत्ते क्रयी पर न्नाम तस्मै हुतमसि यमेष्टमसि।

फ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुम स्तन्नो अस्तु वय९ स्याम पतयो रयीणाम्।। 28।। (अग्ने स्तैकादश च। 14।)

❀फइन्द्रस्य वज्रोऽसि वार्त्रघ्न स्त्वयाऽयँ वृत्रँ वध्या फन्मित्रावरुणयोस्त्वा प्रशास्त्रो४ प्रशिषा युनज्मि यज्ञस्य योगेन फविष्णो४ क्रमोऽसि फविष्णो४ क्रान्तमसि फविष्णो र्विक्रान्तमसि फमरुतां प्रसवे जेष फमाप्तं मन फस्समह मिन्द्रियेण वीर्येण फपशूनां मन्यु रसि तवेव मे मन्यु र्भूया फन्नमो मात्रे पृथिव्यै माऽहं मातरं पृथिवी९ हि९सिषं मा।। 29।। ❀ मां माता पृथिवी हि९सी फदिय दस्यायु रस्यायुर्मे धे

卐ह्यूर्गस्यूर्जं मे धेहि 卐युङ्ङसि वर्चोऽसि वर्चो मयि धे 卐ह्यग्नये गृहपतये स्वाहा 卐सोमाय वनस्पतये स्वा 卐हेन्द्रस्य बलाय स्वाहा 卐मरुता मोजसे स्वाहा-

卐ह२ंस श्शुचिष द्वसु रन्तरिक्षस द्धोता वेदिष दतिथि र्दुरोणसत्। नृष द्वरस दृतस द्व्योमस दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।। 30।। (हि२ंसिषं मर्तजा स्त्रीणि च। 15।)

☸❀卐मित्रोऽसि 卐वरुणोऽसि 卐समहँ विश्वै र्देवैः 卐क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि 卐स्योनामा सीद सुषदामा सीद 卐मा त्वा हि२ंसी न्मामा हि२ंसी 卐न्निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतु 卐र्ब्रह्मा '3' 卐न्त्व२ं राज.न्ब्रह्माऽसि सविताऽसि सत्यसवो 卐ब्रह्मा '3' 卐न्त्व२ं राज.न्ब्रह्माऽसीन्द्रोऽसि सत्यौजाः।। 31।। ❀卐ब्रह्मा '3' 卐न्त्व२ं राज.न्ब्रह्माऽसि मित्रोऽसि सुशेवो 卐ब्रह्मा '3' 卐न्त्व२ं राज.न्ब्रह्माऽसि वरुणोऽसि सत्यध 卐र्मैन्द्रस्य वज्रोऽसि वार्त्रघ्न स्तेन मे रध्य 卐दिशोऽभ्यय२ं राजाऽभू 卐थ्सुश्लोकाँ '4' 卐सुमङ्गलाँ '4' 卐सत्यराजा '3' न्।

卐अपा न्नप्त्रे 卐स्वाहोर्जो 卐नप्त्रे स्वाहा 卐ऽग्नये गृहपतये स्वाहा।। 32।। (सत्यौजा श्चत्वारि२ंशच्च। 16।)



☸❀ आग्नेय मष्टाकपाल न्निर्वपति- हिरण्य न्दक्षिणा, सारस्वत ञ्चरुँ- वथ्सतरी दक्षिणा, सावित्र न्द्वादशकपाल- मुपध्वस्तो दक्षिणा, पौष्ण ञ्चरु३ं- श्यामो दक्षिणा, बार्हस्पत्य ञ्चरु२ं- शितिपृष्ठो दक्षि,णैन्द्र मेकादशकपाल- मृषभो दक्षिणा, वारुण न्दशकपालं- महानिरष्टो दक्षिणा, सौम्य ञ्चरुं- बभ्रु र्दक्षिणा, त्वाष्ट्र मष्टाकपाल२ं- शुण्ठो दक्षिणा, वैष्णव न्त्रिकपालँ- वामनो दक्षिणा।। 33।। (आग्नेय२ं हिरण्य२ं सारस्वत न्द्विचत्वारि२ंशत्। 17।)

☸❀ सद्यो दीक्षयन्ति, सद्य स्सोम ङ्क्रीणन्ति, पुण्डरिस्रजां प्रयच्छति, दशभि र्वथ्सतरै स्सोम ङ्क्रीणाति, दशपेयो भवति, शतं ब्राह्मणाः पिबन्ति, सप्तदश३ं स्तोत्रं भवति, प्राकाशा वध्वर्यवे ददाति, स्रज मुद्गात्रे, रुक्म२ं होत्रे,ऽश्वं प्रस्तोतृप्रतिहर्तृभ्या, न्द्वादश पष्ठौही र्ब्रह्मणे, वशां मैत्रावरुणा,यर्षभं ब्राह्मणाच्छ२ंसिने, वाससी नेष्टापोतृभ्या२ं, स्थूरि यवाऽऽचित मच्छावाका,यानड्वाह मग्नीधे, भार्गवो होता भवति, श्रायन्तीयं ब्रह्मसामं भवति- वारवन्तीय मग्निष्टोमसाम२ं, सारस्वती रपो गृह्णाति।। 34।। (वारवन्तीय ञ्चत्वारि च। 18।)

☸❀ आग्नेय मष्टाकपाल न्निर्वपति- हिरण्य न्दक्षि,णैन्द्र मेकादशकपाल- मृषभो दक्षिणा, वैश्वदेव ञ्चरुं- पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणी मामिक्षाँ- वशा दक्षिणा, बार्हस्पत्य ञ्चरु२ं- शितिपृष्ठो

दक्षिणा,ऽदित्यां मल्हा ङ्गर्भिणी मालभते- मारुती पृश्ञिं- पष्ठौही मश्विभ्यां- पूष्णे पुरोडाश न्द्वादशकपाल न्निर्वपति- सरस्वते सत्यवाचे चरु९- सवित्रे सत्यप्रसवाय पुरोडाश न्द्वादश कपाल- न्तिसृधन्व९ शुष्कदृति र्दक्षिणा।। 35।। (आग्नेय९ हिरण्य मैन्द्र मृषभो वैश्वदेवं पिशङ्गी बार्हस्पत्य९ सप्तचत्वारि९शत्। 19।)

☸❀ आग्नेय मष्टाकपाल न्निर्वपति- सौम्य ञ्चरु९- सावित्र न्द्वादशकपालं- बार्हस्पत्य ञ्चरु- न्त्वाष्ट्र मष्टाकपालँ- वैश्वानर न्द्वादशकपाल- न्दक्षिणो रथवाहनवाहो दक्षिणा, सारस्वत ञ्चरु न्निर्वपति- पौष्ण ञ्चरुं- मैत्र ञ्चरुँ- वारुण ञ्चरु- ङ्क्षैत्रपत्य ञ्चरु- मादित्य ञ्चरु- मुत्तरो रथवाहनवाहो दक्षिणा।। 36।। (आग्नेय९ सौम्यं बार्हस्पत्य ञ्चतुस्त्रि९शत्। 20।)

**वै।का।15 सौत्रामणी मन्त्राः 1 (एकोऽनुवाकः 1)**

☸❀卐स्वाद्वीन्त्वा स्वादुना तीव्रा न्तीव्रेणामृता ममृतेन सृजामि स९सोमेन 卐सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व

卐 पुनातु ते परिस्रुत९ सोम९ सूर्यस्य दुहिता। वारेण शश्वता तना।।

卐 वायुः पूतः पवित्रेण प्रत्य'2'ङ्क्सोमो अतिद्रुतः। इन्द्रस्य युज्य स्सखा।।

卐 कुविदङ्ग यवमन्तो यवञ्चि द्यथा दान्त्यनुपूर्वं वियूय। इहेहैषा ङ्कृणुत भोजनानि ये बर्हिषो नमोवृक्ति न्न जग्मुः।।

आश्विन न्धूम्र मालभते- सारस्वतं मेष- मैन्द्र मृषभ- मैन्द्र मेकादशकपाल न्निर्वपति- सावित्र न्द्वादशकपालँ- वारुण न्दशकपाल९ 卐सोमप्रतीकाः पितर स्तृप्णुत, वडबा दक्षिणा।। 37।। (भोजनानि षड्वि९शतिश्च। 21।)

**वै।का।12 याज्याः 8 (एकोऽनुवाकः 1)**

☸❀卐अग्नाविष्णू महि तद्वां महित्वँ वीत.ङ्घृतस्य गुह्यानि नाम। दमेदमे सप्त रत्ना दधाना प्रति वा ञ्जिह्वा घृत माचरण्येत्।।

卐 अग्नाविष्णू महि धाम प्रियँ वाँ वीथो घृतस्य गुह्या जुषाणा। दमेदमे सुष्टुती वावृधाना प्रति वा ञ्जिह्वा घृत मुच्चरण्येत्।।

卐 प्रणो देवी सरस्वती वाजेभि र्वाजिनीवती। धीना मवि.त्र्यवतु।।

卐 आ नो दिवो बृहतः।। 38।।❀ पर्वतादा सरस्वती यजता गन्तु यज्ञम्। हव न्देवी जुजुषाणा घृताची शग्मान्नो वाच मुशती श्रृणोतु।।
卐 बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य। रास्व रत्नानि दाशुषे।।
卐 एवा पित्रे विश्वदेवाय वृष्णे यज्ञै र्विधेम नमसा हविर्भिः। बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम्।।
卐 बृहस्पते अति यदर्यो अर्हा.द्युम द्विभाति क्रतुम ज्जनेषु। यद्दीदय च्छवसा।। 39।।❀ ऋतप्रजात तदस्मासु द्रविण न्धेहि चित्रम्।।
卐 आ नो मित्रावरुणा घृतै र्गव्यूति मुक्षतम्। मध्वा रजाꣳसि सुक्रतू।।
卐 प्र बाहवा सिसृत ञ्जीवसे न आनो गव्यूति मुख्षत ङ्घृतेन। आ नो जने श्रवयतँ युवाना श्रुतं मे मित्रावरुणा हवेमा।।
卐 अग्निँ वः पूर्व्य ङ्गिरा देव मीडे वसूनाम्। सपर्यन्तः पुरुप्रियं मित्रन्न क्षेत्रसाधसम्।।
卐 मक्षू देववतो रथः।। 40।।❀ शूरो वा पृत्सु कासु चित्। देवानाँ य इन्मनो यजमान इयक्ष त्यभी दयज्वनो भुवत्।
卐 न यजमान रिष्यसि न सुन्वान न देवयो। --
卐 असदत्र सुवीर्य मुत त्य.दाश्वश्वियम्। --
卐 नकिष्ट.ङ्कर्मणा नशन्न प्र योष न्न योषति। --
卐 उप क्षरन्ति सिन्धवो मयोभुव ईजानञ्च यक्ष्यमाणञ्च धेनवः। पृणन्तञ्च पपुरिञ्च।। 41।।❀ श्रवस्यवो घृतस्य धारा उपयन्ति विश्वतः।।
卐 सोमारुद्रा विवृहतँ विषूची ममीवा या नो गय माविवेश। आरे बाधेथा न्निर्ऋतिं पराचैः कृत ञ्चिदेनः प्र मुमुक्त मस्मत्।।
卐 सोमारुद्रा युव मेता.न्यस्मे विश्वा तनूषु भेषजानि धत्तम्। अवस्यतं मुञ्चतँ यन्नो अस्ति तनूषु बद्ध.ङ्कृत मेनो अस्मत्।।
卐 सोमापूषणा जनना रयीणा ञ्जनना दिवो जनना पृथिव्याः। जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्व न्नमृतस्य नाभिम्।।

卐 इमौ देवौ जायमानौ जुषन्तेमौ तमा॑ꣳसि गूहता मजुष्टा। आभ्या मिन्द्रः पक्व मामा स्वन्त स्सोमापूषभ्या ञ्जन दुस्त्रियासु।। 42।। (बृहत श्शवसा रथः पपुरिञ्च दिवो जनना पञ्चवि॑ꣳशतिश्च। 22।)

(अनुमत्या आग्नेय मैन्द्राग्न मग्नये सोमाय प्रतिपूरुष मैन्द्राग्न न्धात्रे बार्हस्पत्य मग्नये गृहपतयेऽर्थेतो देवी स्समिध॑ꣳ सोम.स्येन्द्रस्य मित्र आग्नेय॑ꣳ सद्य आग्नेय॑ꣳ हिरण्य माग्नेयꣳ स्वाद्वीन्त्वाऽग्नाविष्णू द्वावि॑ꣳशतिः। अनुमत्यै यथाऽसति देवी रापो मित्रोऽसि शूरो वा द्विचत्वारि॑ꣳशत्। 42। अनुमत्या उस्त्रियासु।)

## द्वितीयकाण्डम्

### द्वितीयकाण्डे प्रथमः प्रपाठकः

#### वै।का।2 पशुबन्ध ब्राह्मणम् 1 (दशानुवाका: 10)

❀ वायव्यꣳ श्वेतमा लभेत भूतिकामो- वायुर्वै क्षेपिष्ठा देवता,- वायुमेव स्वेन भागधेयेनोप धावति- स एवैनं भूति ङ्गमयति- भवत्ये.वातिक्षिप्रा देवतेत्याहु - स्सैन मीश्वरा प्रदह इ-त्येत मेव सन्तँ वायवे नियुत्वत आ लभेत- नियुद्वा अस्य धृति- र्धृत एव भूति मुपै त्यप्रदाहाय- भवत्येव,।। 1।। ❀ वायवे नियुत्वत आ लभेत ग्रामकामो- वायुर्वा इमाः प्रजा नस्योता नेनीयते- वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मै प्रजा नस्योता नि यच्छति- ग्राम्येव भवति- नियुत्वते भवति- ध्रुवा एवास्मा अनपगाः करोति, वायवे नियुत्वत आ लभेत प्रजाकामः- प्राणो वै वायु- रपानो नियु- त्प्राणापानौ खलु वा एतस्य प्रजायाः।। 2।। ❀ अपक्रामतो- योऽलं प्रजायै सन्प्रजा न्न विन्दते- वायु मेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मै प्राणापानाभ्यां प्रजां प्र जनयति- विन्दते प्रजाँ, वायवे नियुत्वत आ लभेत ज्योगामयावी- प्राणो वै वायु- रपानो नियु- त्प्राणापानौ खलु वा एतस्मा दप क्रामतो- यस्य ज्योगामयति- वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप।। 3।। ❀ धावति- स एवास्मि न्प्राणापानौ दधा- त्युत यदीतासु र्भवति जीवत्येव, प्रजापतिर्वा इद मेक आसी-थ्सोऽकामयत प्रजाः पशून्थ्सृजेयेति- स आत्मनो वपा मुदक्खिद- त्तामग्नौ प्रागृह्णा- त्ततोऽज स्तूपर स्समभव- त्तꣳ स्वायै देवताया आऽलभत- ततो वै स प्रजाः पशू नसृजत- यः प्रजाकामः।। 4।। ❀ पशुकाम स्स्या-थ्स एतं प्राजापत्य मज न्तूपर मा लभेत- प्रजापति मेव स्वेन भागधेये नोपधावति- स एवास्मै प्रजां पशू न्प्र जनयति, यच्छ्मश्रुण स्तत्पुरुषाणा॑ꣳ रूपँ- यत्तूपर स्तदश्वानाँ- यदन्यतोद न्तद्गवाँ- यदव्या इव शफा

स्तदवीनाँ- यदज स्तदजाना- मेतावन्तो वै ग्राम्याः पशव- स्तान्।। 5।। ❀ रूपेणैवाव रुन्धे, सोमापौष्णं त्रैत मा लभेत पशुकामो- द्वौ वा अजायै स्तनौ- नानैव द्वावभि जायेते- ऊर्जं पुष्टि न्तृतीय- स्सोमापूषणावेव स्वेन भागधेयेनोप धावति- तावेवास्मै पशू न्प्रजनयत- स्सोमो वै रेतोधाः- पूषा पशूनां प्रजनयिता- सोम एवास्मै रेतो दधाति- पूषा पशू न्प्र जनय- त्यौदुम्बरो यूपो भव-त्यूर्ग्वा उदुम्बर- ऊर्क्पशव- ऊर्जैवास्मा ऊर्जं पशू नव रुन्धे।। 6।। (अप्रदाहाय भवत्येव प्रजाया आमयति वायुमेव नियुत्वन्तङ् स्वेन भागधेयेनोप प्रजाकाम स्तान् यूप स्त्रयोदश च। 1।)

❀ प्रजापतिः प्रजा असृजत- ता अस्माथ्सृष्टाः पराची राय- न्ता वरुण मगच्छ- न्ता अन्वै-त्ताः पुन रयाचत- ता अस्मै न पुनरददा- थ्सोऽब्रवी द्वरँ वृणी-ष्वाथ मे पुन र्देहीति- तासाँ वर माऽलभत- स कृष्ण एकशितिपा दभव- द्यो वरुणगृहीतस्स्या- थ्स एतँ वारुण ङ्कृष्ण मेकशितिपाद मा लभेत- वरुणम्।। 7।। ❀ एव स्वेन भागधेयेनोप धावति- स एवैनँ वरुणपाशा न्मुञ्चति- कृष्ण एकशितिपा द्भवति- वारुणो ह्येष देवतया समृद्ध्यै, सुवर्भानु रासुर स्सूर्य न्तमसाऽविध्य- त्तस्मै देवाः प्रायश्चित्ति मैच्छ- न्तस्य यत्प्रथम न्तमोऽपाघ्न-'2'न्थ्सा कृष्णाऽवि रभव-द्य द्वितीयꣳ सा फल्गुनी- यत्तृतीयꣳ सा बलक्षी- यदध्यस्था दपाकृन्त'2'न्थ्साऽवि र्वशा।। 8।। ❀ समभव,त्ते देवा अब्रुव- न्देवपशुर्वा अयꣳ समभू- त्कस्मा इम मा लफ्स्यामह इ-त्यथ वै तर्ह्यल्पा पृथिव्यासी- दजाता ओषधय- स्तामविँ वशा मादित्येभ्यः कामायाऽऽलभन्त- ततो वा अप्रथत पृथि-व्यजाय न्तौषधयो, यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति- स एता मविँ वशा मादित्येभ्यः कामाय।। 9।। ❀ आ लभेता-ऽऽदित्या नेव कामङ् स्वेन भागधेयेनोप धावति- त एवैनं प्रथयन्ति- पशुभिः प्र प्रजया जनय, न्त्यसावादित्यो न व्यरोचत- तस्मै देवाः प्रायश्चित्ति मैच्छ- न्तस्मा एता मल्हा आऽलभन्ता-ऽऽग्नेयी ङ्कृष्णग्रीवीꣳ- सꣳहिता मैन्द्रीꣳ- श्वेतां बार्हस्पत्या- न्ताभि रेवास्मि न्रुच मदधु- र्यो ब्रह्मवर्चसकाम स्स्या-त्तस्मा एता मल्हा आ लभेत-।। 10।। ❀ आग्नेयी ङ्कृष्णग्रीवीꣳ- सꣳहिता मैन्द्रीꣳ- श्वेतां बार्हस्पत्या- मेता एव देवता स्स्वेन भागधेयेनोप धावति- ता एवास्मि न्ब्रह्मवर्चस न्दधति- ब्रह्मवर्चस्येव भवति, वसन्ता प्रात.राग्नेयी ङ्कृष्णग्रीवी मालभेत- ग्रीष्मे मध्यन्दिने सꣳहिता मैन्द्रीꣳ- शर.द्यपराह्णे श्वेतां बार्हस्पत्या, न्त्रीणि वा आदित्यस्य तेजाꣳसि- वसन्ता प्रात- र्ग्रीष्मे मध्यन्दिने- शरद्यपराह्णे- यावन्त्येव तेजाꣳसि तान्येव।। 11।। ❀ अव रुन्धे, सँवथ्सरं पर्यालभ्यन्ते- सँवथ्सरो वै ब्रह्मवर्चसस्य प्रदाता- सँवथ्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति- ब्रह्मवर्चस्येव भवति, गर्भिणयो भवन्तीन्द्रियँ वै गर्भ- इन्द्रिय मेवास्मि

न्दधाति, सारस्वतीं मेषी मा लभेत- य ईश्वरो वाचो वदितो स्सन्वाच न्न वदे- द्वाग्वै सरस्वती-सरस्वतीमेव स्वेन भागधेयेनोप धावति- सैवास्मिन्न्।। 12।।❀ वाच न्दधाति- प्रवदिता वाचो भव-त्यपन्नदती भवति- तस्मा न्मनुष्या स्सर्वां वाचँ वद,न्त्याग्नेय ङ्कृष्णग्रीव मा लभेत- सौम्यं बभ्रु ञ्ज्योगामया- व्यग्निँ वा एतस्य शरीर ङ्गच्छति- सोमꣳ रसो- यस्य ज्योगामय- त्यग्ने रेवास्य शरीर न्निष्क्रीणाति- सोमा द्रस- मुत यदीतासु भवति जीवत्येव- सौम्यं बभ्रु मा लभेताऽऽग्नेय ङ्कृष्णग्रीवं प्रजाकाम- स्सोमः।। 13।।❀ वै रेतोधा- अग्निꣳ प्रजानां प्रजनयिता- सोम एवास्मै रेतो दधा-त्यग्निꣳ प्रजां प्र जनयति- विन्दते प्रजा, माग्नेय ङ्कृष्णग्रीव मा लभेत- सौम्यं बभ्रुँ- यो ब्राह्मणो विद्या मनूच्य न विरोचेत- यदाग्नेयो भवति तेज एवास्मि न्तेन दधाति- यथ्सौम्यो ब्रह्मवर्चस- न्तेन, कृष्णग्रीव आग्नेयो भवति- तम एवास्मा दप हन्ति, श्वेतो भवति।। 14।।❀ रुच मेवास्मि न्दधाति, बभ्रु स्सौम्यो भवति-ब्रह्मवर्चस मेवास्मि न्त्विषि न्दधा, त्याग्नेय ङ्कृष्णग्रीवमा लभेत- सौम्यं बभ्रु-माग्नेय ङ्कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान, आग्नेयो वै ब्राह्मण- स्सौम्यो राजन्यो-ऽभित स्सौम्य माग्नेयौ भवत- स्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि गृह्णा- त्येकधा समावृङ्क्ते- पुर एन न्दधते।। 15।। (लभेत वरुणँ वशैता मविं वशा मादित्येभ्यꣳ कामाय मलुहा आ लभेत तान्येव सैवास्मि'2'न्थ्सोम श्श्वेतो भवति त्रिचत्वारिꣳशच्च। 2।)

❀ देवासुरा एषु लोके.ष्वस्पर्धन्त, स एतँ विष्णु वामन मपश्य- त्तꣳ स्वायै देवताया आऽलभत- ततो वै स इमा न्लोका नभ्यजय,द्वैष्णवँ वामन मा लभेत स्पर्धमानो- विष्णु रेव भूत्वेमा न्लोका नभि जयति, विषम आ लभेत- विषमा इव हीमे लोका स्समृद्ध्या, -इन्द्राय मन्युमते मनस्वते ललामं प्राश्ङ्ग मा लभेत सङ्ग्रामे।। 16।।❀ सँयत्त, इन्द्रियेण वै मन्युना मनसा सङ्ग्राम ञ्जय-तीन्द्र मेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मि न्निन्द्रियं मन्युं मनो दधाति- जयति तꣳ सङ्ग्राम, मिन्द्राय मरुत्वते पृश्निसक्थ मा लभेत ग्रामकाम- इन्द्र मेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मै सजाता न्प्रयच्छति- ग्राम्येव भवति- यदृषभ स्तेन।। 17।।❀ ऐन्द्रो- यत्पृश्नि स्तेन मारुत स्समृद्ध्यै-पश्चा त्पृश्निसक्थो भवति- पश्चादन्ववसायिनी मेवास्मै विश ङ्करोति, सौम्यं बभ्रु मालभेतान्नकाम-स्सौम्यँ वा अन्नꣳ- सोम मेव स्वेन भागधेयेनोप धावति- स एवास्मा अन्नं प्र यच्छ-त्यन्नाद एव भवति-बभ्रु भव- त्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै, सौम्यं बभ्रु मा लभेत- यमलम्।। 18।।❀ राज्याय सन्तꣳ राज्य न्नोपनमे- थ्सौम्यँ वै राज्यꣳ- सोम मेव स्वेन भागधेयेनोप धावति- स एवास्मै राज्यं प्र यच्छ-

त्युपैनꣳ राज्य न्नमति- बभ्रु र्भव- त्येतद्वै सोमस्य रूपꣳ समृद्ध्या, इन्द्राय वृत्रतुरे ललामं प्राश्रुङ्ग मा लभेत- गतश्रीः प्रतिष्ठाकामः- पाप्मान मेव वृत्र न्तीर्त्वा प्रतिष्ठा ङ्गच्छ,तीन्द्रायाभिमातिघ्ने ललामं प्राश्रुङ्ग मा।। 19।। ❀ लभेत- यः पाप्मना गृहीत.स्स्या त्पाप्मा वा अभिमाति- रिन्द्र मेवाभिमातिहनꣳ स्वेन भागधेयेनोप धावति- स एवास्मा त्पाप्मान मभिमातिं प्रणुदत, -इन्द्राय वज्रिणे ललामं प्राश्रुङ्ग मालभेत- यमलꣳ राज्याय सन्तꣳ राज्य न्नोपनमे,दिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति- स एवास्मै वज्रं प्र यच्छति- स एनँ वज्रो भूत्या इन्ध- उपैनꣳ राज्य न्नमति- ललामः प्राश्रुङ्गो भव- त्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै।। 20।। (सङ्ग्रामे तेनाल मभिमातिघ्ने ललामं प्राश्रुङ्ग मैनं पञ्चदश च। 3।)

❀ असा.वादित्यो न व्यरोचत- तस्मै देवाः प्रायश्चित्ति मैच्छ, न्तस्मा एता न्दशर्षभा माऽलभन्त- तयैवास्मि न्रुच मदधु- र्यो ब्रह्मवर्चसकाम स्स्या-त्तस्मा एता न्दशर्षभामा लभे.तामु मेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति- स एवास्मि न्ब्रह्मवर्चस न्दधाति- ब्रह्मवर्चस्येव भवति, वसन्ता प्रात स्त्रीन्ललामा ना लभेत- ग्रीष्मे मध्यन्दिने-।। 21।। ❀ त्रीञ्छितिपृष्ठा- न्छर.द्यपराह्णे त्रीञ्छितिवारा, न्त्रीणि वा आदित्यस्य तेजाꣳसि- वसन्ता प्रात- र्ग्रीष्मे मध्यन्दिने- शरद्यपराह्णे- यावन्त्येव तेजाꣳसि- तान्येवाव रुन्धे, त्रयस्त्रय आ लभ्यन्ते- ऽभिपूर्व मेवास्मि न्तेजो दधाति, सँवथ्सरं पर्यालभ्यन्ते- सँवथ्सरो वै ब्रह्मवर्चसस्य प्रदाता- सँवथ्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति- ब्रह्मवर्चस्येव भवति- सँवथ्सरस्य परस्ता त्प्राजापत्य ङ्कद्रुम्।। 22।। ❀ आ लभेत, प्रजापति स्सर्वा देवता- देवतास्वेव प्रति तिष्ठति, यदि बिभीया द्दुश्चर्मा भविष्यामीति- सोमापौष्णꣳ श्याम मा लभेत- सौम्यो वै देवतया पुरुषः- पौष्णाः पशव- स्स्वयैवास्मै देवतया पशुभि स्त्वच ङ्करोति- न दुश्चर्मा भवति, देवाश्च वै यम श्चास्मि न्लोकेऽस्पर्धन्त- स यमो देवाना मिन्द्रियँ वीर्य मयुवत- तद्यमस्य।। 23।। ❀ यमत्व, न्ते देवा अमन्यन्त- यमो वा इद मभू- द्यद्वयꣳ स्म इति- ते प्रजापति मुपाधाव- '2'न्थ्स एतौ प्रजापति रात्मन उक्षवशौ निरमिमीत- ते देवा वैष्णावरुणीँ वशामा ऽलभ-न्तैन्द्र मुक्षाण- न्तँ वरुणेनैव ग्राहयित्वा- विष्णुना यज्ञेन प्राणुद,न्तैन्द्रेणैवास्येन्द्रिय मवृञ्जत- यो भ्रातृव्यवा न्थ्स्याथ्स स्पर्धमानो वैष्णावरुणीम्।। 24।। ❀ वशा मा लभे-तैन्द्र मुक्षाणँ- वरुणेनैव भ्रातृव्य ङ्ग्राहयित्वा विष्णुना यज्ञेन प्रणुदत- ऐन्द्रेणैवास्येन्द्रियँ वृङ्क्ते- भव.त्यात्मना- पराऽस्य भ्रातृव्यो भव,तीन्द्रो वृत्र मह-न्तँ वृत्रो हत ष्षोडशभि र्भोगै रसिना- त्तस्य वृत्रस्य शीर्षतो गाव उदाय-न्ता वैदेह्योऽभव- न्तासा मृषभो जघनेऽनूदै- त्तमिन्द्रः।। 25।। ❀ अचाय- थ्सोऽमन्यत- यो वा इम मालभेत- मुच्येतास्मा त्पाप्मन इति- स

आग्नेय ङ्कृष्णग्रीव मा॒ऽलभ-तैन्द्र मृषभं, तस्याग्नि रेव स्वेन भागधेये नोपसृत ष्षोडशधा वृत्रस्य भोगा नप्यदह- दैन्द्रेणेन्द्रिय मात्म न्नधत्त- य॰ पाप्मना गृहीतस्स्या-थ्स आग्नेय ङ्कृष्णग्रीव मा लभे-तैन्द्र मृषभ-मग्नि रेवास्य स्वेन भागधेये नोपसृतः।। 26।। ❀ पाप्मान मपि दह-त्यैन्द्रेणेन्द्रिय मात्म.न्धत्ते-मुच्यते पाप्मनो भवत्येव, द्यावापृथिव्या न्धेनु मालभेत ज्योगपरुद्धो-ऽनयोर् हि वा एषो ऽप्रतिष्ठितो-ऽथैष ज्योगपरुद्धो- द्यावापृथिवी एव स्वेन भागधेयेनोप धावति- ते एवैनं प्रतिष्ठा ङ्गमयत॰- प्रत्येव तिष्ठति- पर्यारिणी भवति- पर्यारीव ह्येतस्य राष्ट्रँ यो ज्योगपरुद्ध स्समृद्ध्यै ,वायव्यम्।। 27।। ❀ वथ्स मालभेत- वायुर्वा अनयो र्वथ्स- इमे वा एतस्मै लोका अपशुष्का विडपशुष्का-ऽथैष ज्योगपरुद्धो- वायु मेव स्वेन भागधेयेनोप धावति- स एवास्मा इमा न्लोकान्विशं प्र दापयति- प्रास्मा इमे लोका स्स्नुवन्ति- भुञ्जत्येनँ विडुप तिष्ठते।। 28।। (मध्यन्दिने कद्रुँ यमस्य स्पर्धमानो वैष्णावरुणी न्तमिन्द्रोऽस्य स्वेन भागधेयेनोपसृतो वायव्य न्द्विचत्वारि॰शच्च। 4।)

❀ इन्द्रो वलस्य बिल मपौर्णो-थ्स य उत्तम॰ पशु रासी-त्तं पृष्ठं प्रति सङ्गृह्योदक्खिद- त्त॰ सहस्रं पशवोऽनूदाय-'2'न्थ्स उन्नतोऽभव- द्य॰ पशुकाम स्स्या-थ्स एत मैन्द्र मुन्नतमा लभे-तेन्द्र मेव स्वेन भागधेयेनोप धावति- स एवास्मै पशू न्प्रयच्छति- पशुमानेव भव-त्युन्नतः।। 29।। ❀ भवति- साहस्री वा एषा लक्ष्मी यदुन्नतो- लक्ष्मियैव पशू नव रुन्धे, यदा सहस्रं पशू न्प्रा॒ऽऽप्नुया- दथ वैष्णवँ वामन मा लभे-तैतस्मिन्वै तथ्सहस्र मध्यतिष्ठ- त्तस्मा देष वामन स्समीषित॰- पशुभ्य एव प्रजातेभ्य॰ प्रतिष्ठा न्दधाति, कोऽर्हति सहस्रं पशू न्प्रा॒ऽऽप्तु मित्याहु- रहोरात्राण्येव सहस्र॰ संपाद्या॒ऽऽलभेत, पशवः।। 30।। ❀ वा अहोरात्राणि- पशूनेव प्रजाता न्प्रतिष्ठा ङ्गमय, त्योषधीभ्यो वेहत मालभेत प्रजाकाम-ओषधयो वा एतं प्रजायै परि बाधन्ते- योऽलं प्रजायै सन्प्रजा न्न विन्दत- ओषधय॰ खलु वा एतस्यै सूतु मपि घ्नन्ति- या वेह द्भव- त्योषधीरेव स्वेन भागधेयेनोप धावति- ता एवास्मै स्वा.द्योने॰ प्रजां प्र जनयन्ति- विन्दते।। 31।। ❀ प्रजा, मापो वा ओषधयो-ऽस- त्पुरुष- आप एवास्मा असत स्सद्ददति-तस्मादाहु- र्यश्चैवँ वेद- यश्चना,ऽऽपस्त्वावासत सद्ददती,त्यैन्द्री॰ सूतवशा मालभेत भूतिकामो-ऽजातो वा एष योऽलं भूत्यै स-न्भूति न्न प्रा॒ऽऽप्नो-तीन्द्र ङ्खलु वा एषा सूत्वा वशाऽभवत्-।। 32।। ❀ इन्द्रमेव स्वेन भागधेयेनोप धावति- स एवैनं भूति ङ्गमयति- भवत्येव- य॰ सूत्वा वशा स्या- त्तमैन्द्र मेवा॒ऽऽलभे-तैतद्वाव तदिन्द्रिय॰- साक्षा देवेन्द्रिय मव रुन्ध, -ऐन्द्राग्नं पुनरुथ्सृष्ट मालभेत- य आ तृतीया त्पुरुषा थ्सोम न्न पिबे- द्विच्छिन्नो वा एतस्य सोमपीथो- यो ब्राह्मण स्स.न्ना।। 33।। ❀ तृतीया त्पुरुषाथ्सोम

न्न पिब-तीन्द्राग्नी एव स्वेन भागधेयेनोप धावति- तावेवास्मै सोमपीथं प्र यच्छत- उपैनꣳ सोमपीथो नमति- यदैन्द्रो भव-तीन्द्रियँ वै सोमपीथ- इन्द्रियमेव सोमपीथ मव रुन्धे- यदाग्नेयो भव- त्याग्नेयो वै ब्राह्मण- स्स्वामेव देवता मनु सन्तनोति- पुनरुथ्सृष्टो भवति- पुनरुथ्सृष्ट इव ह्येतस्य।। 34।। ❀ सोमपीथ स्समृद्ध्यै- ब्राह्मणस्पत्य न्तूपर मालभे.ताभिचर- न्ब्रह्मणस्पति मेव स्वेन भागधेयेनोप धावति- तस्मा एवैन मावृश्चति- ताजगार्ति मार्च्छति- तूपरो भवति- क्षुरपविर्वा एषा लक्ष्मी यत्तूपर स्समृद्ध्यै- स्फ्यो यूपो भवति- वज्रो वै स्फ्यो- वज्रमेवास्मै प्र हरति, शरमयं बर्हि श्शृणा-त्येवैनँ वैभीदक इध्मो- भिनत्त्येवैनम्।। 35।। (भवत्युन्नतः॒ पशवो जनयन्ति विन्दतेऽभव त्सन्नैतस्येध्म स्त्रीणि च। 5।)

❀ बार्हस्पत्यꣳ शितिपृष्ठ मालभेत ग्रामकामो- यः॒ कामयेत पृष्ठꣳ समानानाꣳ स्यामिति- बृहस्पतिमेव स्वेन भागधेयेनोप धावति- स एवैनं पृष्ठꣳ समानाना.ङ्करोति- ग्राम्येव भवति- शितिपृष्ठो भवति- बार्हस्पत्यो ह्येष देवतया समृद्ध्यै, पौष्णꣳ श्याम मा लभेतान्नकामो-ऽन्नँ वै पूषा- पूषणमेव स्वेन भागधेयेनोप धावति- स एवास्मै।। 36।। ❀ अन्नं प्र यच्छ-त्यन्नाद एव भवति- श्यामो भव-त्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै, मारुतं पृश्ञि मालभेतान्नकामो-ऽन्नँ वै मरुतो- मरुत एव स्वेन भागधेयेनोप धावति- त एवास्मा अन्नं प्रयच्छ-न्त्यन्नाद एव भवति- पृश्ञिर्भव- त्येतद्वा अन्नस्य रूपꣳ समृद्ध्या, ऐन्द्र मरुण मालभेतेन्द्रियकाम- इन्द्रमेव।। 37।। ❀ स्वेन भागधेयेनोप धावति- स एवास्मि न्निन्द्रिय न्दधातीन्द्रियाव्येव भव-त्यरुणो भ्रूमा न्भव-त्येतद्वा इन्द्रस्य रूपꣳ समृद्ध्यै, सावित्र मुपध्वस्त मालभेत सनिकाम- स्सविता वै प्रसवानामीशे- सवितार मेव स्वेन भागधेयेनोप धावति- स एवास्मै सनिं प्र सुवति- दानकामा अस्मै प्रजा भव-न्त्युपध्वस्तो भवति- सावित्रो ह्येषः।। 38।। ❀ देवतया समृद्ध्यै, वैश्वदेवं बहुरूप मा लभेतान्नकामो- वैश्वदेवँ वा अन्नँ- विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति- त एवास्मा अन्नं प्र यच्छ-न्त्यन्नाद एव भवति- बहुरूपो भवति- बहुरूपꣳ ह्यन्नꣳ समृद्ध्यै, वैश्वदेवं बहुरूप मालभेत ग्रामकामो- वैश्वदेवा वै सजाता- विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति- त एवास्मै।। 39।। ❀ सजाता न्प्रयच्छन्ति- ग्राम्येव भवति- बहुरूपो भवति- बहुदेवत्यो1(ओ) ह्येष समृद्ध्यै, प्राजापत्य न्तूपर मा लभेत यस्यानाज्ञातमिव ज्योगामये- त्प्राजापत्यो वै पुरुषः॒- प्रजापतिः॒ खलु वै तस्य वेद- यस्यानाज्ञातमिव ज्योगामयति- प्रजापतिमेव स्वेन भागधेयेनोप धावति- स एवैन न्तस्माथ्स्रामा न्मुञ्चति- तूपरो भवति- प्राजापत्यो ह्येष देवतया समृद्ध्यै।। 40।। (अस्मा इन्द्र मेवैष सजाता विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवास्मै प्राजापत्यो हि त्रीणि च। 6।)

वषट्कारो वै गायत्रियै शिरोऽच्छिन- त्तस्यै रसः परापत-त्तं बृहस्पति रुपागृह्णा-थ्सा शितिपृष्ठा वशाऽभव- द्यो द्वितीयः पराऽपत-त्तं मित्रावरुणा वुपागृह्णीताꣳ सा द्विरूपा वशाऽभव- द्यस्तृतीयः पराऽपत-त्तँ विश्वे देवा उपागृह्ण'2'-न्थ्सा बहुरूपा वशाऽभव- द्यश्चतुर्थः पराऽपत-थ्स पृथिवीं प्राविश-त्तं बृहस्पतिरभि।। 41।। अगृह्णा- दस्त्वेवायं भोगायेति- स उक्षवश स्समभव-द्य ल्लोहितं पराऽपत-त्तद्रुद्र उपागृह्णा-त्सा रौद्री रोहिणी वशाऽभव,द्बार्हस्पत्याꣳ शितिपृष्ठा मालभेत ब्रह्मवर्चसकामो-बृहस्पतिमेव स्वेन भागधेयेनोप धावति- स एवास्मि न्ब्रह्मवर्चस न्दधाति- ब्रह्मवर्चस्येव भवति- छन्दसाँ वा एष रसो यद्वशा- रस इव खलु।। 42।। वै ब्रह्मवर्चस- ञ्छन्दसा मेव रसेन रसं ब्रह्मवर्चस मव रुन्धे, मैत्रावरुणी न्द्विरूपा मालभेत वृष्टिकामो- मैत्रँ वा अह- र्वारुणी रात्रि- रहोरात्राभ्या ङ्खलु वै पर्जन्यो वर्षति- मित्रावरुणावेव स्वेन भागधेयेनोप धावति- तावेवास्मा अहोरात्राभ्यां पर्जन्यँ वर्षयत-श्छन्दसाँ वा एष रसो यद्वशा- रस इव खलु वै वृष्टि- श्छन्दसा मेव रसेन।। 43।। रसँ वृष्टि मव रुन्धे, मैत्रावरुणी न्द्विरूपा मालभेत प्रजाकामो- मैत्रँ वा अह- र्वारुणी रात्रि- रहोरात्राभ्या ङ्खलु वै प्रजाः प्र जायन्ते- मित्रावरुणावेव स्वेन भागधेयेनोप धावति- तावेवास्मा अहोरात्राभ्यां प्रजां प्र जनयत-श्छन्दसाँ वा एष रसो यद्वशा- रस इव खलु वै प्रजा- छन्दसा मेव रसेन रसं प्रजा मव।। 44।। रुन्धे, वैश्वदेवीं बहुरूपा मा लभेतान्नकामो- वैश्वदेवँ वा अन्नँ- विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति- त एवास्मा अन्नं प्र यच्छ- न्त्यन्नाद एव भवति- छन्दसाँ वा एष रसो यद्वशा- रस इव खलु वा अन्न- ञ्छन्दसा मेव रसेन रस मन्नमव रुन्धे, वैश्वदेवीं बहुरूपा मालभेत ग्रामकामो- वैश्वदेवा वै।। 45।। सजाता- विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति- त एवास्मै सजाता न्प्रयच्छन्ति- ग्राम्येव भवति- छन्दसाँ वा एष रसो यद्वशा- रस इव खलु वै सजाता- श्छन्दसा मेव रसेन रसꣳ सजाता नव रुन्धे, बार्हस्पत्य मुक्षवश मालभेत ब्रह्मवर्चसकामो- बृहस्पति मेव स्वेन भागधेयेनोप धावति- स एवास्मि न्ब्रह्मवर्चसम्।। 46।। दधाति- ब्रह्मवर्चस्येव भवति- वशँ वा एष चरति यदुक्षा- वश इव खलु वै ब्रह्मवर्चसँ- वशेनैव वशं ब्रह्मवर्चस मव रुन्धे, रौद्रीꣳ रोहिणी मा लभेताभिचर- न्रुद्रमेव स्वेन भागधेयेनोप धावति- तस्मा एवैन मा वृश्चति- ताजगार्ति मार्च्छति- रोहिणी भवति- रौद्री ह्येषा देवतया समृद्ध्यै, स्फ्यो यूपो भवति- वज्रो वै स्फ्यो वज्र मेवास्मै प्र हरति शरमयं बर्हि श्शृणा त्येवैनँ वैभीदक इध्मो भिनत्त्येवैनम्।। 47।। (अभि खलु वृष्टि श्छन्दसा मेव रसेन रसं प्रजा मव वैश्वदेवा वै ब्रह्मवर्चसँ यूप एकान्न विꣳशतिश्च। 7।)

असावादित्यो न व्यरोचत- तस्मै देवा॰ प्रायश्चित्ति मैच्छ- न्तस्मा एता॰ सौरी॰ श्वेताँ वशा माऽलभन्त- तयैवास्मि न्नुच मदधु- र्यो ब्रह्मवर्चसकाम स्स्या-त्तस्मा एता॰ सौरी॰ श्वेताँ वशा मालभे- तामु मेवाऽऽदित्यङ्ग्ं स्वेन भागधेयेनोप धावति, स एवास्मि न्ब्रह्मवर्चस न्दधाति- ब्रह्मवर्चस्येव भवति- बैल्वो यूपो भव-त्यसौ।। 48।। वा आदित्यो यतोऽजायत- ततो बिल्व उदतिष्ठ- थ्सयोन्येव ब्रह्मवर्चस मव रुन्धे, ब्राह्मणस्पत्यां बभ्रुकर्णी मालभेताभिचरन्-वारुण न्दशकपालं पुरस्ता न्निर्वपे- द्वरुणेनैव भ्रातृव्य ङ्ग्राहयित्वा ब्रह्मणा स्तृणुते- बभ्रुकर्णी भव- त्येतद्वै ब्रह्मणो रूप॰ समृद्ध्यै, स्फ्यो यूपो भवति- वज्रो वै स्फ्यो वज्र मेवास्मै प्र हरति- शरमयं बर्हि श्शृणाति।। 49।। एवैनँ वैभीदक इध्मो भिन त्त्येवैनँ, वैष्णवँ वामन मा लभेत- यँ यज्ञो नोपनमे- द्विष्णुर्वै यज्ञो- विष्णु मेव स्वेन भागधेयेनोप धावति- स एवास्मै यज्ञं प्र यच्छ- त्युपैनँ यज्ञो नमति- वामनो भवति- वैष्णवो ह्येष देवतया समृद्ध्यै, त्वाष्ट्रँ वडब मा लभेत पशुकाम- स्त्वष्टा वै पशूनां मिथुनानाम्।। 50।। प्रजनयिता- त्वष्टार मेव स्वेन भागधेयेनोप धावति- स एवास्मै पशू न्मिथुना न्प्र जनयति- प्रजा हि वा एतस्मि न्पशव॰ प्रविष्टा- अथैष पुमान्थ्सन्वडब- स्साक्षा देव प्रजां पशू नव रुन्धे, मैत्रङ्ग्ं श्वेत मा लभेत- सङ्ग्रामे सँयत्ते समयकामो- मित्र मेव स्वेन भागधेयेनोप धावति- स एवैनं मित्रेण सन्नयति-।। 51।। विशालो भवति- व्यवसायय त्येवैनं- प्राजापत्य ङ्कृष्ण मालभेत वृष्टिकाम॰- प्रजापतिर्वै वृष्ट्या ईशे- प्रजापति मेव स्वेन भागधेयेनोप धावति- स एवास्मै पर्जन्यं वर्षयति- कृष्णो भव- त्येतद्वै वृष्ट्यै रूप॰- रूपेणैव वृष्टि मव रुन्धे- शबलो भवति- विद्युत मेवास्मै जनयित्वा वर्षय- त्यवाश्रृङ्गो भवति- वृष्टि मेवास्मै नि यच्छति।। 52।। (असौ श्शृणाति मिथुनाना न्नयति यच्छति। 8।)

वरुण॰ सुषुवाण मन्नाद्य न्नोपानम-थ्स एताँ वारुणी ङ्कृष्णाँ वशा मपश्य-त्ता॰ स्वायै देवताया आऽलभत- ततो वै तमन्नाद्य मुपानम, द्यमल मन्नाद्याय सन्त मन्नाद्य न्नोपनमे-थ्स एताँ वारुणी ङ्कृष्णाँ वशा मा लभेत, वरुणमेव स्वेन भागधेयेनोप धावति- स एवास्मा अन्नं प्र यच्छ- त्यन्नादः।। 53।। एव भवति- कृष्णा भवति- वारुणी ह्येषा देवतया समृद्ध्यै, मैत्रङ्ग्ं श्वेत मालभेत- वारुण ङ्कृष्ण- मपा ञ्चौषधीनाञ्च सन्धा वन्नकामो- मैत्रीर्वा ओषधयो- वारुणी रापो-ऽपाञ्च खलु वा ओषधीनाञ्च रस मुप जीवामो- मित्रावरुणावेव स्वेन भागधेयेनोप धावति- तावेवास्मा अन्नं प्र यच्छतो-ऽन्नाद एव भवति-।। 54।। अपा ञ्चौषधीनाञ्च सन्धा वालभत- उभयस्यावरुद्ध्यै- विशाखो यूपो भवति- द्वे ह्येते देवते समृद्ध्यै, मैत्रङ्ग्ं श्वेत मा लभेत- वारुण ङ्कृष्ण ञ्ज्योगामयावी- यन्मैत्रो भवति मित्रेणैवास्मै वरुण॰

शमयति- यद्वारुण स्साक्षा देवैनँ वरुणपाशा न्मुञ्च-त्युत यदीतासु भवति- जीवत्येव, देवा वै पुष्टि न्नाविन्दन्-।। 55।।❀ तां मिथुनेऽपश्य- न्तस्या न्न समराधय- न्तावश्विना वब्रूता- मावयोर्वा एषा मैतस्याँ वदध्वमिति- साऽश्विनो रेवाभव- द्यः पुष्टिकाम स्स्या-थ्स एतामाश्विनीँ यमीँ वशा मा लभे- ताश्विनावेव स्वेन भागधेयेनोप धावति- तावेवास्मि न्पुष्टि न्धत्तः- पुष्यति प्रजया पशुभिः।। 56।। (अन्नादोऽन्नाद एव भवत्यविन्द न्पञ्चचत्वारिꣳशच्च। 9।)

❀ आश्विन न्धूम्रललाम मा लभेत- यो दुर्ब्राह्मण स्सोमं पिपासे- दश्विनौ वै देवाना मसोमपा वास्ता- न्तौ पश्चा सोमपीथं प्राऽऽप्नुता- मश्विना वेतस्य देवता- यो दुर्ब्राह्मण स्सोमं पिपास- त्यश्विना वेव स्वेन भागधेयेनोप धावति- तावेवास्मै सोमपीथं प्र यच्छत- उपैनꣳ सोमपीथो नमति- यद्धूम्रो भवति- धूम्रिमाण मेवास्मा दप हन्ति- ललामः।। 57।।❀ भवति- मुखत एवास्मि न्तेजो दधाति- वायव्य ङ्गोमृग मा लभेत- य.मजघ्निवाꣳस मभिशꣳसेयु- रपूता वा एतँ वागृच्छति- य.मजघ्निवाꣳस मभिशꣳसन्ति- नैष ग्राम्यः पशु र्नाऽऽरण्यो- यद्गोमृगो- नेवैष ग्रामे नाऽऽरण्ये य.मजघ्निवाꣳस मभिशꣳसन्ति, वायु र्वै देवानां पवित्रँ- वायु मेव स्वेन भागधेयेनोप धावति- स एव।। 58।।❀ एनं पवयति- पराची वा एतस्मै व्युच्छन्ती व्युच्छति- तमः पाप्मानं प्र विशति- यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽवि र्भवति- सौर्यं बहुरूप मालभे-तामु मेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति- स एवास्मा त्तमः पाप्मान मप हन्ति- प्रतीच्यस्मै व्युच्छन्ती व्युच्छ-त्यप तमः पाप्मानꣳ हते।। 59।। (ललाम स्स एव षड्चत्वारिꣳशच्च। 10।)

**वै।का।12 याज्या: 9 (एकोऽनुवाक: 1)**

❀卐इन्द्रँ वो विश्वतस्प[5]❀ 卐रीन्द्र न्नरो[6] ❀ 卐 मरुतो यद्ध वो दिवो[7] ❀ 卐या वश्शर्म[8] ❀।

卐 भरेष्विन्द्रꣳ सुहवꣳ हवामहे ऽꣳहोमुचꣳ सुकृत न्दैव्य ञ्जनम्। अग्निं मित्रँ वरुणꣳ सातये भग न्द्यावापृथिवी मरुत स्स्वस्तये।।

卐 ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपाँ वृषण्वान्। शिशीत मिन्द्रापर्वता युव न्न स्तन्नो विश्वे वरिवस्यन्तु देवाः।।

卐 प्रिया वो नाम।। 60।।❀ हुवे तुराणाम्। आ यत्तृप न्मरुतो वावशानाः।।

5

6

7

8

卐 श्रियसे कं भानुभि स्सं मिमिक्षिरे ते रश्मिभि स्त ऋक्वभि स्सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः।।

卐 अग्निः प्रथमो वसुभिर्नो अव्या थ्सोमो रुद्रेभि रभि रक्षतु त्मना। इन्द्रो मरुद्भिर् ऋतुधा कृणो त्वादित्यैर्नो वरुण स्सं शिशातु।।

卐 सन्नो देवो वसुभि रग्नि स्सम्।। 61।।❀ सोम स्तनूभी रुद्रियाभिः। समिन्द्रो मरुद्भि र्यज्ञियै स्समादित्यैर्नो वरुणो अजिज्ञिपत्।।

卐 यथाऽऽदित्या वसुभि स्संबभूवु र्मरुद्भी रुद्रा स्समजानताभि। एवा त्रिणाम न्नहृणीयमाना विश्वे देवा स्समनसो भवन्तु।।

卐 कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने। अर्हन्त श्चिद्यमिन्धते सञ्जनयन्ति जन्तवः।।

卐 सँ यदिषो वनामहे सं हव्या मानुषाणाम्। उत द्युम्नस्य शवसः।। 62।।❀ ऋतस्य रश्मिमा ददे।।

卐 यज्ञो देवानां प्रत्येति सुम्न मादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमति र्ववृत्या दंहो श्चिद्या वरिवोवित्तराऽसत्।।

卐 शुचि रप स्सूयवसा अदब्ध उप क्षेति वृद्धवया स्सुवीरः। नकिष्टं '2' घ्नन्त्यन्तितो न दूरा द्य आदित्यानां भवति प्रणीतौ।।

卐 धारयन्त आदित्यासो जगथ्स्था देवा विश्वस्य भुवनस्य गोपाः। दीर्घाधियो रक्षमाणाः।। 63।।❀ असुर्य मृतावान श्चयमाना ऋणानि।।

卐 तिस्रो भूमी र्धारय न्त्रीं रुत द्यू न्त्रीणि व्रता विदथे अन्तरेषाम्। ऋतेनाऽऽदित्या महि वो महित्व न्तदर्यमन्वरुण मित्र चारु।।

卐 त्यान्नु क्षत्रियां अव आदित्यान् याचिषामहे। सुमृडीकां अभिष्टये।।

卐 न दक्षिणा वि चिकिते न सव्या न प्राचीन मादित्या नोत पश्चा। पाक्या चि द्वसवो धीर्या चित्।। 64।।❀ युष्मानीतो अभय ञ्ज्योतिरश्याम्।।

卐 आदित्याना मवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन। अनागास्त्वे अदितित्वे तुरास इमँ यज्ञ न्दधतु श्रोषमाणाः।।

卐 इमं मे वरुण श्रुधी हव मद्या च मृडय। त्वामवस्यु रा चके।।

卐 तत्त्वा यामि ब्रह्मणा वन्दमान स्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः।। 65।। (नामाग्नि स्सꣳ शवसो रक्षमाणा धीयो चिदेकान्न पञ्चाशच्च। 11।)
(वायव्यं प्रजापतिस्ता वरुण न्देवासुरा एष्वसावादित्यो दशर्षभा मिन्द्रो वलस्य बार्हस्पत्यँ वषट्कारोऽसौ सौरीँ वरुण माश्विन मिन्द्रँ वो नर एकादश। 11।) (वायव्य माग्नेयी ङ्कृष्णग्रीवी मसा वादित्यो वा अहोरात्राणि वषट्कारः प्रजनयिता हुवे तुराणां पञ्चषष्टिः। 65। वायव्यं प्र मोषीः।)

**द्वितीयकाण्डे द्वितीयः प्रपाठकः**

**वै।का।3 काम्येष्टि ब्राह्मणम्,मन्त्राश्च 1 (एकादशानुवाका: 11)**

प्रजापतिः प्रजा असृजत- तास्सृष्टा इन्द्राग्नी अपागूहताꣳ- सोऽचाय त्प्रजापति- रिन्द्राग्नी वै मे प्रजा अपाघुक्षतामिति- स एत मैन्द्राग्न मेकादशकपाल मपश्य-त्त न्निरवप- त्तावस्मै प्रजाः प्रासाधयता- मिन्द्राग्नी वा एतस्य प्रजा मप गूहतो- योऽलं प्रजायै स.न्प्रजा न्न विन्दत- ऐन्द्राग्न मेकादशकपाल न्निर्वपे त्प्रजाकाम- इन्द्राग्नी।। 1।। एव स्वेन भागधेयेनोप धावति- तावेवास्मै प्रजां प्र साधयतो- विन्दते प्रजा, मैन्द्राग्न मेकादशकपाल न्निर्वपे थ्स्पर्धमानः क्षेत्रे वा सजातेषु- वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति- ताभ्यामेवेन्द्रियँ वीर्यं भ्रातृव्यस्य वृङ्क्ते- वि पाप्मना भ्रातृव्येण जयते,ऽप वा एतस्मा दिन्द्रियँ वीर्य ङ्क्रामति- यस्सङ्ग्राम मुपप्रया-त्यैन्द्राग्न मेकादशकपाल न्निः।। 2।। वपेथ्सङ्ग्राम मुपप्रयास्य- न्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति- तावेवास्मि न्निन्द्रियँ वीर्य न्धत्त- स्सहेन्द्रियेण वीर्येणोप प्रयाति- जयति तꣳ सङ्ग्रामँ, वि वा एष इन्द्रियेण वीर्येणर्ध्यते- यस्सङ्ग्राम ञ्जय-त्यैन्द्राग्न मेकादशकपाल न्निर्वपे थ्सङ्ग्राम ञ्जि-त्वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति- तावेवास्मि न्निन्द्रियँ वीर्यम्।। 3।। धत्तो- नेन्द्रियेण वीर्येण व्यृध्यते,ऽप वा एतस्मा दिन्द्रियँ वीर्य ङ्क्रामति- य एति जनता- मैन्द्राग्न मेकादशकपाल न्निर्वपे ज्जनता मेष्य- न्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति- तावेवास्मि न्निन्द्रियँ वीर्य न्धत्त- स्सहेन्द्रियेण वीर्येण जनता मेति- पौष्ण ञ्चरु मनु निर्वपे- त्पूषा वा इन्द्रियस्य वीर्यस्यानुप्रदाता- पूषणमेव।। 4।। स्वेन भागधेयेनोप धावति- स एवास्मा इन्द्रियँ वीर्यमनु प्र यच्छति- क्षैत्रपत्य ञ्चरु न्निर्वपे ज्जनता माग-त्येयँ वै क्षेत्रस्य पति- रस्यामेव प्रति तिष्ठ-त्यैन्द्राग्न मेकादशकपाल मुपरिष्टा न्निर्वपे- दस्यामेव प्रतिष्ठायेन्द्रियँ वीर्यमुपरिष्टा दात्म.न्धत्ते।। 5।। (प्रजाकाम इन्द्राग्नी उपप्रयात्यैन्द्राग्न मेकादशकपाल न्निर्वीर्यं पूषण मेवैकान्न चत्वारिꣳशच्च। 1।)

अग्नये पथिकृते पुरोडाश मष्टाकपाल न्निर्वपे-द्यो दर्.शपूर्णमासयाजी स.न्नमावास्याँ वा पौर्णमासीँ वाऽतिपादये- त्पथो वा एषोऽध्यपथेनैति- यो दर्.शपूर्णमासयाजी स.न्नमावास्याँ वा पौर्णमासीँ वाऽतिपादय- त्यग्निमेव पथिकृतꣳ स्वेन भागधेयेनोप धावति- स एवैन मपथा त्पन्था मपि नय- त्यनड्वा न्दक्षिणा- वही ह्येष समृद्ध्या, अग्नये व्रतपतये।। 6।। पुरोडाश मष्टाकपाल न्निर्वपे-द्य आहिताग्नि स्स.न्नव्रत्यमिव चरे- दग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोप धावति- स एवैनँ व्रतमा लम्भयति- व्रत्यो भव,त्यग्नये रक्षोघ्ने पुरोडाश मष्टाकपाल न्निर्वपे-द्य॰ रक्षा॰सि सचेर- न्नग्निमेव रक्षोहणꣳ स्वेन भागधेयेनोप धावति- स एवास्मा द्रक्षा॰स्यप हन्ति- निशिताया न्निर्वपेत्-।। 7।। निशितायां॰ हि रक्षा॰सि प्रेरते- संप्रेर्णान्येवैनानि हन्ति- परिश्रिते याजये द्रक्षसा मनन्ववचाराय- रक्षोघ्नी याज्याऽनुवाक्ये भवतो- रक्षसा॰ स्तृत्या, अग्नये रुद्रवते पुरोडाश मष्टाकपाल न्निर्वपे दभिचर- न्नेषा वा अस्य घोरा तनू र्यद्रुद्र- स्तस्मा एवैनमा वृश्चति- ताजगार्ति मार्च्छे, त्यग्नये सुरभिमते पुरोडाश मष्टाकपाल न्निर्वपे- द्यस्य गावो वा पुरुषाः।। 8।। वा प्रमीयेरन्- यो वा बिभीया- देषा वा अस्य भेषज्या तनू र्यथ्सुरभिमती- तयैवास्मै भेषज ङ्करोति- सुरभिमते भवति- पूतीगन्ध स्यापहत्या, अग्नये क्षामवते पुरोडाश मष्टाकपाल न्निर्वपेथ्सङ्ग्रामे सँयत्ते- भागधेयेनैवैन॰ शमयित्वा परा नभि निर्दिशति- यमवरेषाँ विध्यन्ति- जीवति स- यं परेषां प्र स मीयते- जयति त॰ सङ्ग्रामम्,।। 9।। अभि वा एष एता.नुच्यति- येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते- पुरुषाऽऽहुतिर्ह्यस्य प्रियतमा-ऽग्नये क्षामवते पुरोडाश मष्टाकपाल न्निर्वपे- द्भागधेये नैवैन॰ शमयति- नैषां पुराऽऽयुषोऽपरः प्र मीयते,ऽभि वा एष एतस्य गृहानुच्यति- यस्य गृहा न्दह-त्यग्नये क्षामवते पुरोडाश मष्टाकपाल न्निर्वपे- द्भागधेये नैवैन॰ शमयति- नास्यापर ङ्गृहा न्दहति।। 10।। (व्रतपतये निशिताया न्निर्वपे त्पुरुषा स्सङ्ग्राम न्न चत्वारि च। 2।)

अग्नये कामाय पुरोडाश मष्टाकपाल न्निर्वपे- द्यङ्कामो नोपनमे- दग्निमेव कामꣳ स्वेन भागधेयेनोप धावति- स एवैन ङ्कामेन समर्धय- त्युपैन ङ्कामो नम,त्यग्नये यविष्ठाय पुरोडाश मष्टाकपाल न्निर्वपे थ्स्पर्धमानः क्षेत्रे वा सजातेषु वा-ऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति- तेनैवेन्द्रियँ वीर्यं भ्रातृव्यस्य।। 11।। युवते- वि पाप्मना भ्रातृव्येण जयते,ऽग्नये यविष्ठाय पुरोडाश मष्टाकपाल न्निर्वपे दभिचर्यमाणो-ऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति- स एवास्मा द्रक्षा॰सि यवयति- नैन मभिचरन्थ्स्तृणुते,ऽग्नय आयुष्मते पुरोडाश मष्टाकपाल न्निर्वपे- द्यः कामयेत सर्व मायु रिया मि-त्यग्नि मेवाऽऽयुष्मन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मिन्न्।। 12।। आयु र्दधाति- सर्वमायुरे, त्यग्नये

जातवेदसे पुरोडाश मष्टाकपाल न्निर्वपे द्भूतिकामो-ऽग्निमेव जातवेदसꣳ स्वेन भागधेयेनोप धावति- स एवैनं भूति ङ्गमयति- भवत्ये,वाग्नये रुक्मते पुरोडाश मष्टाकपाल न्निर्वपे द्रुक्कामो-ऽग्निमेव रुक्मन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मि न्रुच न्दधाति- रोचत ए,वाग्नये तेजस्वते पुरोडाशम्।। 13।।❀ अष्टाकपाल न्निर्वपे त्तेजस्कामो-ऽग्निमेव तेजस्वन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मि न्तेजो दधाति- तेजस्व्येव भव,त्यग्नये साहन्त्याय पुरोडाश मष्टाकपाल न्निर्वपे थ्सीक्षमाणो-ऽग्निमेव साहन्त्यꣳ स्वेन भागधेयेनोप धावति- तेनैव सहते- यꣳ सीक्षते।। 14।। (भ्रातृव्यस्यास्मि न्तेजस्वते पुरोडाश मष्टात्रिꣳशच्च। 3।)

❀ अग्नयेऽन्नवते पुरोडाश मष्टाकपाल न्निर्वपे-द्यः कामयेतान्नवा न्थ्स्यामि-त्यग्नि मेवान्नवन्तꣳ स्वेन भागधेयेनोप धावति- स एवैन मन्नवन्त ङ्करो- त्यन्नवानेव भव,त्यग्नयेऽन्नादाय पुरोडाश मष्टाकपाल न्निर्वपे-द्यः कामयेतान्नाद स्स्यामि-त्यग्नि मेवान्नादꣳ स्वेन भागधेयेनोप धावति- स एवैन मन्नाद ङ्करो- त्यन्नादः।। 15।।❀ एव भव,त्यग्नयेऽन्नपतये पुरोडाश मष्टाकपाल न्निर्वपे-द्यः कामये.तान्नपति स्स्यामि-त्यग्नि मेवान्नपतिꣳ स्वेन भागधेयेनोप धावति- स एवैन मन्नपति ङ्करो-त्यन्नपतिरेव भव,त्यग्नये पवमानाय पुरोडाश मष्टाकपाल न्निर्वपे- दग्नये पावका-याग्नये शुचये ज्योगामयावी- यदग्नये पवमानाय निर्वपति- प्राणमेवास्मि न्तेन दधाति- यदग्नये।। 16।।❀ पावकाय वाच मेवास्मि न्तेन दधाति- यदग्नये शुचय आयु रेवास्मि न्तेन दधा,त्युत यदीतासु र्भवति- जीवत्ये,वैता मेव निर्वपे च्चक्षुष्कामो- यदग्नये पवमानाय निर्वपति- प्राण मेवास्मि न्तेन दधाति- यदग्नये पावकाय- वाच मेवास्मि न्तेन दधाति- यदग्नये शुचये- चक्षु रेवास्मि न्तेन दधाति-।। 17।।❀ उत यद्यन्धो भवति- प्रैव पश्य, त्यग्नये पुत्त्रवते पुरोडाश मष्टाकपाल न्निर्वपे- दिन्द्राय पुत्त्रिणे पुरोडाश मेकादशकपालं प्रजाकामो-ऽग्निरेवास्मै प्रजां प्रजनयति- वृद्धामिन्द्रः प्र यच्छ- त्यग्नये रसवतेऽजक्षीरे चरु न्निर्वपे-द्यः कामयेत रसवान्थ्स्यामि-त्यग्निमेव रसवन्तꣳ स्वेन भागधेयेनोप धावति- स एवैनꣳ रसवन्त ङ्करोति-।। 18।।❀ रसवानेव भव-त्यजक्षीरे भव-त्याग्नेयी वा एषा यदजा- साक्षादेव रसमव रुन्धे,ऽग्नये वसुमते पुरोडाश मष्टाकपाल न्निर्वपे-द्यः कामयेत वसुमान्थ्स्यामि-त्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोप धावति- स एवैनँ वसुमन्त ङ्करोति- वसुमानेव भव,त्यग्नये वाजसृते पुरोडाश मष्टाकपाल न्निर्वपेथ्सङ्ग्रामे सँयत्ते- वाजम्।। 19।।❀ वा एष सिसीर्षति- यस्सङ्ग्राम ञ्जिगीष-त्यग्निः खलु वै देवानाँ वाजसृ- दग्निमेव वाजसृतꣳ स्वेन भागधेयेनोप धावति- धावति वाजꣳ- हन्ति वृत्र- ञ्जयति तꣳ सङ्ग्राम- मथो

अग्निरिव न प्रतिधृषे भव,त्यग्नयेऽग्निवते पुरोडाश मष्टाकपाल न्निर्वपे द्यस्याग्ना वग्नि मभ्युद्धरेयु-
र्निर्दिष्टभागो वा एतयो रन्यो-ऽनिर्दिष्टभागोऽन्य-स्तौ सम्भवन्तौ यजमानम्।। 20।। ❀ अभि सम्भवत-
स्स ईश्वर आर्ति माऽर्तो- र्यदग्नयेऽग्निवते निर्वपति- भागधेयेनैवैनौ शमयति- नाऽर्तिमार्च्छति
यजमानो,ऽग्नये ज्योतिष्मते पुरोडाश मष्टाकपाल निर्वपे- द्यस्याग्नि रुद्धृतोऽहुतेऽग्निहोत्र उद्वाये- दपर
आदीप्यानूद्धृत्य इत्याहु- स्तत्तथा न कार्यँ, यद्भागधेय मभि पूर्व उद्ध्रियते- किमपरोऽभ्युत्।। 21।। ❀
ह्रियेतेति- तान्येवावक्षाणानि सन्निधाय मन्थे, ऽदितः प्रथम ञ्जज्ञे अग्नि स्स्वाद्योने रधि जातवेदाः। स
गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यँ वहतु प्रजान- न्निति, छन्दोभि रेवैनग्ँ स्वाद्योनेः प्र जनय- त्येष
वाव सोऽग्निरित्याहु- र्ज्योतिस्त्वा अस्य परापतितमिति, यदग्नये ज्योतिष्मते निर्वपति- यदेवास्य ज्योतिः
परापतित- न्तदेवाव रुन्धे।। 22।। (करोत्यन्नादो दधाति यदग्नये शुचये चक्षुरेवास्मिन्तेन दधाति
करोति वाजँ यजमान मुदेवास्य षड्च। 4।)
❀ वैश्वानर न्द्वादशकपाल न्निर्वपे- द्वारुण ञ्चरु- न्दधिक्रावृण्णे चरु मभिशस्यमानो- यद्वैश्वानरो
द्वादशकपालो भवति- सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सरेणैवैनग्ँ स्वदय-त्यप पापँ वर्णꣳ हते-
वारुणेनैवैनँ वरुणपाशा न्मुञ्चति- दधिक्रावृण्णा पुनाति- हिरण्य न्दक्षिणा- पवित्रँ वै हिरण्यं- पुना
त्येवैन- माद्य मस्यान्नं भव,त्येता मेव निर्वपे त्प्रजाकाम- स्सँवथ्सरः।। 23।। ❀ वा एतस्याशान्तो
योनिं प्रजायै पशूना न्निर्दहति- योऽलं प्रजायै सन्प्रजा न्न विन्दते- यद्वैश्वानरो द्वादशकपालो भवति-
सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सरमेव भागधेयेन शमयति- सोऽस्मै शान्त स्स्वाद्योनेः प्रजां प्र
जनयति- वारुणेनैवैनँ वरुणपाशा न्मुञ्चति- दधिक्रावृण्णा पुनाति- हिरण्य न्दक्षिणा- पवित्रँ वै हिरण्यं-
पुनात्येवैनम्-।। 24।। ❀ विन्दते प्रजाँ, वैश्वानर न्द्वादशकपाल न्निर्वपे त्पुत्रे जाते- यदष्टकपालो भवति
गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपाल स्त्रिवृतैवास्मि न्तेजो दधाति, यद्दशकपालो विराजैवास्मि
न्नन्नाद्य न्दधाति, यदेकादशकपाल स्त्रिष्टुभैवास्मि न्निन्द्रिय न्दधाति, यद्द्वादशकपालो जगत्यैवास्मि न्पशू
न्दधाति, यस्मिन्जात एतामिष्टि न्निर्वपति- पूतः।। 25।। ❀ एव तेजस्व्यन्नाद इन्द्रियावी पशुमा
न्भव,त्यव वा एष सुवर्गा ल्लोकाच्छिद्यते- यो दर्शपूर्णमासयाजी स.न्नमावास्याँ वा पौर्णमासीँ
वाऽतिपादयति- सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते- वैश्वानर न्द्वादशकपाल न्निर्वपे दमावास्याँ
वा पौर्णमासीँ वाऽतिपाद्य- सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सरमेव प्रीणा-त्यथो सँवथ्सर मेवास्मा
उप दधाति- सुवर्गस्य लोकस्य समष्ट्यै-।। 26।। ❀ अथो देवता एवान्वारभ्य सुवर्गँ लोकमेति, वीरहा

वा एष देवानाँ- योऽग्नि.मुद्वासयते- न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्ष,न्नाग्नेय मष्टाकपाल न्निर्वपे- द्वैश्वानर न्द्वादशकपाल-मग्नि मुद्वासयिष्यन्- यदष्टाकपालो भव-त्यष्टाऽक्षरा गायत्री- गायत्रोऽग्नि- र्यावानेवाग्नि- स्तस्मा आतिथ्य ङ्करो,त्यथो यथा जनँ यतेऽवस ङ्करोति- तादृक्।। 27।। ❀ एव त,द्वादशकपालो वैश्वानरो भवति- द्वादश मासा स्सँवथ्सर- स्सँवथ्सरः खलु वा अग्ने र्योनि- स्स्वामेवैनँ योनि ङ्गमय- त्याद्य मस्यान्नं भवति, वैश्वानर न्द्वादशकपाल न्निर्वपे- न्मारुतꣳ सप्तकपाल ङ्ग्रामकाम- आहवनीये वैश्वानर मधि श्रयति- गार्हपत्ये मारुतं- पापवस्यसस्य विधृत्यै- द्वादशकपालो वैश्वानरो भवति- द्वादश मासा स्सँवथ्सर- स्सँवथ्सरेणैवास्मै सजाताꣳश्च्यावयति- मारुतो भवति-।। 28।। ❀ मरुतो वै देवानाँ विशो- देवविशेनैवास्मै मनुष्यविश मव रुन्धे- सप्तकपालो भवति- सप्तगणा वै मरुतो- गणश एवास्मै सजाता नवरुन्धे-ऽनूच्यमान आ सादयति- विश मेवास्मा अनुवर्त्मान ङ्करोति।। 29।। (प्रजाकाम स्सँवथ्सरः पुनात्येवैनं पूत स्समष्ट्यै तादृङ्मारुतो भवत्येकान्न त्रिꣳशच्च। 5।)

❀ आदित्य ञ्चरु न्निर्वपे थ्सङ्ग्राम मुपप्रयास्य- न्नियँ वा अदिति- रस्यामेव पूर्वे प्रति तिष्ठन्ति, वैश्वानर न्द्वादशकपाल न्निर्वपे दायतन ङ्गत्वा- सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सरः खलु वै देवाना मायतन- मेतस्माद्वा आयतना द्देवा असुरा नजयन्- यद्वैश्वानर न्द्वादशकपाल न्निर्वपति- देवाना मेवाऽऽयतने यतते- जयति तꣳ सङ्ग्राम- मेतस्मिन्वा एतौ मृजाते।। 30।। ❀ यो विद्विषाणयो रन्न.मत्ति, वैश्वानर न्द्वादशकपाल न्निर्वपे द्विद्विषाणयो रन्नञ्जग्ध्वा- सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सरस्वदित मेवात्ति- नास्मिन्मृजाते- सँवथ्सराय वा एतौ सममाते यौ सममाते- तयोर्यः पूर्वोऽभिद्रुह्यति- तँ वरुणो गृह्णाति, वैश्वानर न्द्वादशकपाल न्निर्वपे थ्सममानयोः पूर्वोऽभिद्रुह्य- सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सर मेवाऽऽस्त्वा निर्वरुणम्।। 31।। ❀ परस्ता दभि द्रुह्यति- नैनँ वरुणो गृह्णा,त्याव्यँ वा एष प्रति गृह्णाति- योऽविं प्रतिगृह्णाति- वैश्वानर न्द्वादशकपाल न्निर्वपे दविं प्रतिगृह्य- सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सरस्वदिता मेव प्रति गृह्णाति- नाऽऽव्यं प्रतिगृह्णा,त्यात्मनो वा एष मात्रामाप्नोति- य उभयाद त्प्रतिगृह्णा- त्यश्वँ वा पुरुषँ वा- वैश्वानर न्द्वादशकपाल न्निर्वपे दुभयादत्।। 32।। ❀ प्रतिगृह्य- सँवथ्सरो वा अग्नि र्वैश्वानर- स्सँवथ्सरस्वदितमेव प्रति गृह्णाति- नाऽऽत्मनो मात्रा माप्नोति, वैश्वानर न्द्वादशकपाल न्निर्वपे थ्सनि मेष्य '2'- न्थ्सँवथ्सरो वा अग्नि र्वैश्वानरो- यदा खलु वै सँवथ्सर ञ्जनताया ञ्चर-त्यथ स धनार्घो भवति- यद्वैश्वानर न्द्वादशकपाल न्निर्वपति- सँवथ्सरसातामेव सनिमभि प्र च्यवते-

दानकामा अस्मै प्रजा भवन्ति- यो वै सँवथ्सरम्।। 33।।❀ प्रयुज्य न विमुञ्च-त्यप्रतिष्ठानो वै स भव-त्येतमेव वैश्वानरं पुन रागत्य निर्वपे- द्यमेव प्रयुङ्क्ते- तं भागधेयेन वि मुञ्चति प्रतिष्ठित्यै- यया रज्वोत्तमा ङ्गामाजे- त्तां भ्रातृव्याय प्र हिणुया- न्निरृत्र्तिमेवास्मै प्र हिणोति।। 34।। (मृजाते निर्वरुणँ वपे दुभयाद्यो वै सँवथ्सर९ षड्वि९शच्च।। 6।)

❀ ऐन्द्र ञ्चरु न्निर्वपे त्पशुकाम- ऐन्द्रा वै पशव- इन्द्रमेव स्वेन भागधेयेनोप धावति- स एवास्मै पशून्प्र यच्छति- पशुमानेव भवति- चरु र्भवति- स्वादेवास्मै योनेः पशून्प्रजनय,तीन्द्रायेन्द्रियावते पुरोडाश मेकादशकपाल न्निर्वपे त्पशुकाम- इन्द्रियँ वै पशव- इन्द्र मेवेन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति- सः।। 35।।❀ एवास्मा इन्द्रियं पशून्प्र यच्छति- पशुमानेव भव,तीन्द्राय घर्मवते पुरोडाश मेकादशकपाल न्निर्वपे द्ब्रह्मवर्चसकामो- ब्रह्मवर्चसँ वै घर्म- इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मि.न्ब्रह्मवर्चस न्दधाति- ब्रह्मवर्चस्येव भव,तीन्द्रायार्कवते पुरोडाश मेकादशकपाल न्निर्वपे दन्नकामो-ऽर्को वै देवाना मन्न- मिन्द्र मेवार्कवन्तꣳ स्वेन भागधेयेन।। 36।।❀ उप धावति- स एवास्मा अन्नं प्र यच्छ-त्यन्नाद एव भव,तीन्द्राय घर्मवते पुरोडाश मेकादशकपाल न्निर्वपे- दिन्द्रा येन्द्रियावत- इन्द्रा यार्कवते भूतिकामो- यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति- यदिन्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति- यदिन्द्रायार्कवते भूत एवान्नाद्ये प्रति तिष्ठति- भवत्ये,वेन्द्राय।। 37।।❀ अ९होमुचे पुरोडाश मेकादशकपाल न्निर्वपे-द्यः पाप्मना गृहीतस्स्या-त्पाप्मा वा अ९ह- इन्द्रमेवा९होमुचꣳ स्वेन भागधेयेनोप धावति- स एवैनं पाप्मनोऽ९हसो मुञ्च,तीन्द्राय वैमृधाय पुरोडाश मेकादशकपाल न्निर्वपे-द्यं मृधोऽभिप्रवेपेर- न्राष्ट्राणि वाऽभि समियु-रिन्द्रमेव वैमृधꣳ स्वेन भागधेयेनोप धावति- स एवास्मान्मृधः।। 38।।❀ अपह,न्तीन्द्राय त्रात्रे पुरोडाश मेकादशकपाल न्निर्वपे द्बद्धो वा परियत्तो- वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति- स एवैन न्त्रायत- इन्द्रायार्काश्वमेधवते पुरोडाश मेकादशकपाल न्निर्वपे-द्यं महायज्ञो नोपनमे- देते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधा- विन्द्र मेवार्काश्वमेधवन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मा अन्ततो महायज्ञ ञ्च्यावय- त्युपैनं महायज्ञो नमति।। 39।। (इन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति सोऽर्कवन्तꣳ स्वेन भागधेयेनैवेन्द्रायास्मा न्मृधोऽस्मै सप्त च। 7।)

❀ इन्द्रायान्वृजवे पुरोडाश मेकादशकपाल न्निर्वपे द्ग्रामकाम- इन्द्रमेवान्वृजुꣳ स्वेन भागधेयेनोप धावति- स एवास्मै सजाता ननुका.न्करोति- ग्राम्येव भव,तीन्द्राण्यै चरु न्निर्वपे- द्यस्य सेनाऽस९शितेव

स्या-दिन्द्राणी वै सेनायै देव-तेन्द्राणीमेव स्वेन भागधेयेनोप धावति- सैवास्य सेनाꣳ सꣳश्यति-बल्बजानपि।। 40।।❀ इध्मे सन्नह्ये- द्गौर्यत्राधिष्कन्ना न्यमेह- त्ततो बल्बजा उदतिष्ठ- न्गवामेवैन न्न्यायमपिनीय गा वेदय,तीन्द्राय मन्युमते मनस्वते पुरोडाश मेकादशकपाल न्निर्वपे थ्सङ्ग्रामे सँयत्त-इन्द्रियेण वै मन्युना मनसा सङ्ग्राम ञ्जय-तीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मिन्निन्द्रियं मन्युं मनो दधाति- जयति तम्।। 41।।❀ सङ्ग्राम,मेतामेव निर्वपे-द्यो हतमना स्स्वयंपाप इव स्या-देतानि हि वाँ एतस्मा दपक्रान्ता- न्यथैष हतमना स्स्वयंपाप- इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति- स एवास्मि न्निन्द्रियं मन्युं मनो दधाति- न हतमना स्स्वयंपापो भव,तीन्द्राय दात्रे पुरोडाश मेकादशकपाल निर्वपे-द्यः कामयेत दानकामा मे प्रजास्स्युः।। 42।।❀ इ-तीन्द्रमेव दातारꣳ स्वेन भागधेयेनोप धावति- स एवास्मै दानकामाः प्रजाः करोति- दानकामा अस्मै प्रजा भव,न्तीन्द्राय प्रदात्रे पुरोडाश मेकादशकपाल न्निर्वपे- द्यस्मै प्रत्तमिव सन्न प्रदीये-तेन्द्रमेव प्रदातारꣳ स्वेन भागधेयेनोप धावति- स एवास्मै प्र दापय,तीन्द्राय सुत्राम्णे पुरोडाश मेकादशकपाल न्निर्वपे दपरुद्धो वा।। 43।।❀ अपरुध्यमानो- वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोप धावति- स एवैन न्त्रायतेऽनपरुध्यो भव-तीन्द्रो वै सदृङ्ङेवताभि रासी-थ्स न व्यावृत मगच्छ-थ्स प्रजापति मुपाधाव-त्तस्मा एतमैन्द्र मेकादशकपाल न्निरवप- त्तेनैवास्मि न्निन्द्रिय मदधा- च्छक्करी याज्याऽनुवाक्ये अकरो-द्वज्रो वै शक्करी- स एनँ वज्रो भूत्या ऐन्ध-।। 44।।❀ सोऽभव-थ्सोऽबिभे- द्भूतः प्र मा धक्ष्यतीति- स प्रजापतिं पुन रुपाधाव-थ्स प्रजापति श्शक्कर्या अधि रेवती न्निरमिमीत शान्त्या अप्रदाहाय- योऽलꣳ श्रियै स'2'न्थ्सदृ'2'ङ्क्समानै स्स्या-त्तस्मा एत मैन्द्र मेकादशकपाल न्निर्वपे- दिन्द्रमेव स्वेन भागधेयेनोप धावति- स एवास्मि न्निन्द्रिय न्दधाति- रेवती पुरोऽनुवाक्या भवति शान्त्या अप्रदाहाय- शक्करी याज्या-वज्रो वै शक्करी- स एनँ वज्रो भूत्या इन्धे- भवत्येव।। 45।। (अपि तꣳ स्युर्वैन्ध भवति चतुर्दश च। 8।)

❀ आग्नावैष्णव मेकादशकपाल न्निर्वपे दभिचर '2'- न्थ्सरस्व.त्याज्यभागा स्या-द्बार्हस्पत्य श्चरु, र्यदाग्नावैष्णव एकादशकपालो भव- त्यग्नि स्सर्वा देवता विष्णु र्यज्ञो- देवताभिश्चैवैनँ यज्ञेन चाभि चरति, सरस्व.त्याज्यभागा भवति- वाग्वै सरस्वती- वाचैवैन मभि चरति, बार्हस्पत्य श्चरु र्भवति- ब्रह्म वै देवानां बृहस्पति- र्ब्रह्मणैवैन मभि चरति,।। 46।।❀ प्रति वै परस्ता दभिचरन्त मभि चरन्ति, द्वेद्वे पुरोऽनुवाक्ये कुर्या-दति प्रयुक्त्या- एतयैव यजेताभिचर्यमाणो, देवताभिरेव देवताः प्रतिचरति- यज्ञेन यज्ञँ- वाचा वाचं- ब्रह्मणा ब्रह्म- स देवताश्चैव यज्ञञ्च मध्यतो व्यवसर्पति- तस्य न कुतश्चनोपाऽऽव्याधो

भवति- नैन मभिचरन्थ्स्तृणुत, आग्नावैष्णव मेकादशकपाल न्निर्वपे-द्यँ यज्ञो न।। 47।।❀ उपनमे-दग्नि स्सर्वा देवता विष्णु र्यज्ञो-ऽग्निश्चैव विष्णुश्च स्वेन भागधेयेनोप धावति- तावेवास्मै यज्ञं प्र यच्छत-उपैनँ यज्ञो नम,त्याग्नावैष्णव ङ्घृते चरु न्निर्वपे च्चक्षुष्कामो-ऽग्नेर्वै चक्षुषा मनुष्या वि पश्यन्ति- यज्ञस्य देवा- अग्निश्चैव विष्णुश्च स्वेन भागधेयेनोप धावति- तावेव।। 48।।❀ अस्मिन्चक्षु.र्धत्त- श्चक्षुष्मानेव भवति- धेन्वै वा एतद्रेतो यदाज्य- मनडुह स्तण्डुला- मिथुना देवास्मै चक्षुः प्र जनयति- घृते भवति- तेजो वै घृत- न्तेज श्चक्षु- स्तेजसैवास्मै तेज श्चक्षु रव रुन्ध- इन्द्रियँ वै वीर्यँ वृङ्क्ते- भ्रातृव्यो यजमानोऽयजमान,स्याध्वरकल्पां प्रति निर्वपे द्भ्रातृव्ये यजमाने- नास्येन्द्रियम्।। 49।।❀ वीर्यँ वृङ्क्ते, पुरा वाचः प्रवदितो र्निर्वपे- द्यावत्येव वाक्ता मप्रोदितां भ्रातृव्यस्य वृङ्क्ते- तामस्य वाचं प्रवदन्ती मन्या वाचोऽनु प्र वदन्ति- ता इन्द्रियँ वीर्यँ यजमाने दध, त्याग्नावैष्णव मष्टाकपाल न्निर्वपे त्प्रातस्सवनस्याऽऽकाले- सरस्व.त्याज्यभागा स्या-द्बार्हस्पत्य श्चरु, र्यदष्टाकपालो भव-त्यष्टाऽक्षरा गायत्री- गायत्रं प्रातस्सवनं- प्रातस्सवनमेव तेनाऽऽप्नोति,।। 50।।❀ आग्नावैष्णव मेकादशकपाल न्निर्वपे न्माध्यन्दिनस्य सवनस्याऽऽकाले- सरस्व.त्याज्यभागा स्या-द्बार्हस्पत्य श्चरु, र्यदेकादशकपालो भव- त्येकादशाक्षरा त्रिष्टु-प्त्रैष्टुभं माध्यन्दिनꣳ सवनं- माध्यन्दिनमेव सवन न्तेनाऽऽप्नो,त्याग्नावैष्णव न्द्वादशकपाल न्निर्वपे त्तृतीयसवनस्याऽऽकाले- सरस्वत्याज्यभागा स्या-द्बार्हस्पत्य श्चरु, र्यद्द्वादशकपालो भवति- द्वादशाक्षरा जगती- जागत न्तृतीयसवन- न्तृतीयसवनमेव तेनाऽऽप्नोति, देवताभिरेव देवताः।। 51।।❀ प्रतिचरति- यज्ञेन यज्ञँ- वाचा वाचँ- ब्रह्मणा ब्रह्म- कपालैरेव छन्दाꣳस्याप्नोति- पुरोडाशै स्सवनानि, मैत्रावरुण मेककपाल न्निर्वपे द्वशायै काले- यैवासौ भ्रातृव्यस्य वशाऽनूबन्ध्या- सो एवैषैतस्यैककपालो भवति- न हि कपालैः पशु.मर्ह त्याप्तुम्।। 52।। (ब्रह्मणैवैन मभि चरति यज्ञो न तावेवास्येन्द्रियमाप्नोति देवता स्सप्तत्रिꣳशच्च।। 9।)

❀ असावादित्यो न व्यरोचत- तस्मै देवाः प्रायश्चित्ति मैच्छ- न्तस्मा एतꣳ सोमारौद्र ञ्चरु न्निरवप- न्तेनैवास्मि न्रुच मदधु-र्यो ब्रह्मवर्चसकाम स्स्या-त्तस्मा एतꣳ सोमारौद्र ञ्चरु न्निर्वपे-थ्सोम ञ्चैव रुद्रञ्च स्वेन भागधेयेनोप धावति- तावेवास्मि.न्ब्रह्मवर्चस न्धत्तो- ब्रह्मवर्चस्येव भवति, तिष्यापूर्णमासे निर्वपे-द्रुद्रः।। 53।।❀ वै तिष्य- स्सोमः पूर्णमास- स्साक्षादेव ब्रह्मवर्चस मव रुन्धे, परिश्रिते याजयति- ब्रह्मवर्चसस्य परिगृहीत्यै, श्वेतायै श्वेतवथ्सायै दुग्धं मथित माज्यं भव,त्याज्यं प्रोक्षण- माज्येन मार्जयन्ते- यावदेव ब्रह्मवर्चस- न्तथ्सर्व ङ्करो,त्यति ब्रह्मवर्चस ङ्क्रियत इत्याहु- रीश्वरो दुश्चर्मा

भवितोरिति, मानवी~ ऋचौ धाय्ये कुर्या- द्यद्वै किञ्च मनु रवद- त्तद्भेषजम्-।। 54।।❀ भेषज मेवास्मै करोति, यदि बिभीया दुश्चर्मा भविष्यामीति- सोमापौष्ण ञ्चरु न्निर्वपे,थ्सौम्यो वै देवतया पुरुषः- पौष्णाः पशव- स्स्वयैवास्मै देवतया पशुभि स्त्वच ङ्करोति- न दुश्चर्मा भवति, सोमारौद्र ञ्चरु न्निर्वपे त्प्रजाकाम- स्सोमो वै रेतोधा- अग्निः प्रजानां प्रजनयिता- सोम एवास्मै रेतो दधा- त्यग्निः प्रजां प्र जनयति- विन्दते।। 55।।❀ प्रजा॰, सोमारौद्र ञ्चरु न्निर्वपे दभिचर- न्थ्सौम्यो वै देवतया पुरुष- एष रुद्रो यदग्नि- स्स्वाया एवैन न्देवतायै निष्क्रीय रुद्रायापि दधाति- ताजगार्ति माच्छति, सोमारौद्र ञ्चरु न्निर्वपे ज्ज्योगामयावी- सोमँ वा एतस्य रसो गच्छ-त्यग्नि॰ शरीरँ- यस्य ज्योगामयति- सोमादेवास्य रस न्निष्क्रीणा-त्यग्ने श्शरीर-मुत यदि।। 56।।❀ इतासु र्भवति जीवत्येव, सोमारुद्रयोर्वा एत ङ्ग्रसित॰ होता निष्खिदति- स ईश्वर आर्ति मा ऽर्तो- रनड्वान् होत्रा देयो- वह्निर्वा अनड्वान्- वह्निर् होता- वह्निनैव वह्नि मात्मानङ् स्पृणोति- सोमारौद्र ञ्चरु न्निर्वपे-द्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्य ञ्जनयेय.मिति, वेदिं परिगृह्यार्ध मुद्धन्या- दर्ध न्नार्ध बर्हिष स्तृणीया- दर्ध न्नार्ध मिध्मस्याभ्यादध्या- दर्ध न्न स्व एवास्मा आयतने भ्रातृव्य ञ्जनयति।। 57।। (रुद्रो भेषजँ विन्दते यदि स्तृणीयादर्ध न्द्वादश च। 10।)

❀ ऐन्द्र मेकादशकपाल न्निर्वपे न्मारुत॰ सप्तकपाल ङ्ग्रामकाम, इन्द्रञ्चैव मरुतश्च स्वेन भागधेयेनोप धावति- त एवास्मै सजाता.न्प्र यच्छन्ति- ग्राम्येव भव-त्याहवनीय ऐन्द्र मधि श्रयति- गार्हपत्ये मारुतं- पापवस्यसस्य विधृत्यै- सप्तकपालो मारुतो भवति- सप्तगणा वै मरुतो- गणश एवास्मै सजातानव रुन्धे-ऽनूच्यमान आ सादयति- विश.मेव।। 58।।❀ अस्मा अनुवर्त्मान.ङ्करो,त्येतामेव निर्वपे-द्यः कामयेत क्षत्राय च विशे च समद न्दध्या मि,त्यैन्द्रस्यावद्य न्ब्रूया ॐदिन्द्रायानु ब्रूही- त्याश्राव्य ब्रूया ॐन्मरुतो यजे-ति मारुतस्या वद्य न्ब्रूया ॐन्मरुद्भ्योऽनु ब्रूही- त्याश्राव्य ब्रूया ॐदिन्द्रँ यजे-ति स्व एवैभ्यो भागधेये समद न्दधाति, वितृ॰ह्णाणा स्तिष्ठ- न्त्येतामेव।। 59।।❀ निर्वपे-द्यः कामयेत कल्पेरन्निति, यथादेवत मवदाय यथादेवतँ यजे- द्भागधेयेनैवैनान् यथायथ ङ्कल्पयति- कल्पन्त ए,वैन्द्र मेकादशकपाल न्निर्वपे- द्वैश्वदेव न्द्वादशकपाल ङ्ग्रामकाम, इन्द्रञ्चैव विश्वा॰श्च देवान्थ्स्वेन भागधेयेनोप धावति- त एवास्मै सजातान्प्र यच्छन्ति- ग्राम्येव भव,त्यैन्द्रस्यावदाय वैश्वदेवस्यावद्ये- दथैन्द्रस्य।। 60।।❀ उपरिष्टा.दिन्द्रियेणैवास्मा उभयत स्सजाता.न्परि गृह्णा,त्युपाधाय्यपूर्वयँ वासो दक्षिणा- सजाताना मुपहित्यै, पृश्ञ्यै दुग्धे प्रैय्यङ्गव ञ्चरु न्निर्वपे न्मरुद्भ्यो ग्रामकामः, पृश्ञ्यै वै पयसो मरुतो जाताः- पृश्ञ्यै प्रियङ्गवो- मारुताः खलु वै देवतया सजाता- मरुत एव स्वेन भागधेयेनोप

धावति- त एवास्मै सजातान्प्र यच्छन्ति- ग्राम्येव भवति- प्रियवती याज्याऽनुवाक्ये।। 61।।❀ भवतः- प्रिय मेवैनꣳ समानाना.ङ्करोति, द्विपदा पुरोऽनुवाक्या भवति- द्विपद एवाव रुन्धे- चतुष्पदा याज्या- चतुष्पद एव पशूनव रुन्धे, देवासुरा स्सँयत्ता आस-न्ते देवा मिथो विप्रिया आस-न्ते1(ए)ऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमाना श्चतुर्धा व्यक्राम- न्नग्नि र्वसुभि- स्सोमो रुद्रै- रिन्द्रो मरुद्भि- र्वरुण आदित्यै, स्स इन्द्रः प्रजापति मुपाधाव-त्तम्।। 62।।❀ एतया सं'2'ज्ञान्याऽयाजय,दग्नये वसुमते पुरोडाश मष्टाकपाल न्निरवप- थ्सोमाय रुद्रवते चरु-मिन्द्राय मरुत्वते पुरोडाश मेकादशकपालँ- वरुणायाऽऽदित्यवते चरु, न्ततो वा इन्द्र न्देवा ज्यैष्ठ्यायाभि समजानत, यस्समानै र्मिथो विप्रिय स्स्या- त्तमेतया सं'2'ज्ञान्या याजये- दग्नये वसुमते पुरोडाशमष्टाकपाल न्निर्वपे-थ्सोमाय रुद्रवते चरु- मिन्द्राय मरुत्वते पुरोडाश मेकादशकपालँ- वरुणायाऽऽदित्यवते चरु- मिन्द्र मेवैनं भूत.ञ्ज्यैष्ठ्याय समाना अभि सञ्जानते- वसिष्ठस्समानानां भवति।। 63।। (विशमेव तिष्ठन्त्येता मेवाथैन्द्रस्य याज्याऽनुवाक्ये तँ वरुणाय चतुर्दश च। 11।)

**वै।का।12 याज्या: 10 (एकोऽनुवाक: 1)**

❀卐हिरण्यगर्भ[9] ❃ 卐आपो ह य[10] ❃ 卐प्रजापते[11] ❃।

卐 स वेद पुत्त्रः पितरꣳ स मातरꣳ स सूनु र्भुवथ्स भुव त्पुनर्मघः। स द्यामौर्णो दन्तरिक्षꣳ स सुवस्स विश्वा भुवो अभवथ्स आऽभवत्।।

卐 उदु त्य[12] ❃ 卐चित्रम्[13] ❃।।

卐 स प्रत्नव न्नवीयसाऽग्ने द्युम्नेन सँयता। बृहत्ततन्थ भानुना।।

卐 नि काव्या वेधस श्शश्वत स्कर् हस्ते दधानः।। 64।।❀ नर्या पुरूणि। अग्नि र्भुव द्रयिपती रयीणाꣳ सत्रा चक्राणो अमृतानि विश्वा।।

卐 हिरण्यपाणि मूतये सवितार मुपह्वये। स चेत्ता देवता पदम्।।

卐 वाम मद्य सवित र्वाम मु श्वो दिवेदिवे वाम मस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरे रया धिया वामभाजस्स्याम।।

9
10
11
12
13

卐 बडित्था पर्वताना ङ्खिद्रं बिभर्षि पृथिवि। प्र या भूमि प्रवत्वति मह्ना जिनोषि।। 65।। ❀ महिनि।।

卐 स्तोमासस्त्वा विचारिणि प्रतिष्टोभन्त्यक्तुभिः। प्र या वाजन्न हेषन्तं पेरु मस्यस्यर्जुनि।।

卐 ऋदूदरेण सख्या सचेय यो मा न रिष्ये द्धर्यश्व पीतः। अयँ य स्सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिर मेम्यच्छ।।

卐 आपान्तमन्यु स्स्तृपलप्रभर्मा धुनि श्शिमीवा ञ्छरुमाꣳ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वगिन्द्रं प्रतिमानानि देभुः।।

卐 प्र।। 66।। ❀ सुवानस्सोम ऋतयु श्चिकेतेन्द्राय ब्रह्म जमदग्नि रर्चन्न्। वृषा यन्ताऽसि शवस स्तुरस्यान्त यच्छ गृणते धर्त्र न्दृꣳह।।

卐 सबाधस्ते मदञ्च शुष्मयञ्च ब्रह्म नरो ब्रह्मकृत स्सपर्यन्न्। अर्को वा यत्तुरते सोमचक्षा स्तत्रेदिन्द्रो दधते पृथ्सु तुर्याम्।।

卐 वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।। 67।। ❀ वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभि स्सदा नः।।

卐 प्र तत्ते अद्य शिपिविष्ट नामार्य श्शꣳसामि वयुनानि विद्वान्। तन्त्वा गृणामि तवस मतवीया न्क्षयन्त मस्य रजसः पराके।।

卐 किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अस्म दपगूह एत द्यदन्यरूप स्समिथे बभूथ।। 68।।

❀卐अग्ने दा दाशुषे रयिँ वीरवन्तं परीणसम्। शिशीहि न स्सूनुमतः।।

卐 दा नो अग्ने शतिनो दा स्सहस्रिणो दुरो न वाजꣴ श्रुत्या अपा वृधि। प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुषसो वि दिद्युतुः।।

卐 अग्निर्दा द्रविणँ वीरपेशा अग्नि र्ऋषिँ यस्सहस्रा सनोति। अग्निर्दिवि हव्यमा ततानाग्ने र्धामानि विभृता पुरुत्रा।।

卐 मा।। 69।। ❀ नो मर्धी[14]❀ 卐रा तू भर[15]❀।।

卐 घृतन्न पूतं तनू ररेपा श्शुचि हिरण्यम्। तत्ते रुक्मो न रोचत स्स्वधावः।।



14

15

卐 उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣴ स्तोतृभ्य आ भर।।

卐 वायो शतꣳ हरीणाँ युवस्व पोष्याणाम्। उत वा ते सहस्त्रिणो रथ आ यातु पाजसा।।

卐 प्र याभिः।। 70।। ❀ यासि दाश्वाꣳस मच्छा नियुद्भि र्वायविष्टये दुरोणे। नि नो रयिꣳ सुभोजसँ युवेह नि वीरव द्गव्य मश्वियञ्च राधः।।

卐 रेवतीर्न स्सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभि र्मदेम।।

卐 रेवाꣳ इद्रेवत स्स्तोता स्यात्त्वावतो मघोनः। प्रेदु हरिव श्श्रुतस्य।। 71।। (दधानो जिनोषि देभु॰ प्र हव्यं बभूथ मा याभिश्चत्वारिꣳशच्च। 12।)

(प्रजापतिस्ता स्सृष्टा अग्नये पथिकृतेऽग्नये कामायाग्नयेऽन्नवते वैश्वानर मादित्य ञ्चरु मैन्द्र ञ्चरुमिन्द्रा यान्वृजव अग्नावैष्णव मसौ सोमारौद्र मैन्द्र मेकादशकपालꣳ हिरण्यगर्भो द्वादश। 12। प्रजापति रग्नये कामायाभि सम्भवतो यो विद्विषाणयो रिध्मे सन्नह्ये दाग्नावैष्णव मुपरिष्टा द्यासि दाश्वाꣳस मेकसप्ततिः। 71। प्रजापति॰ प्रेदु हरिव श्श्रुतस्य।)

**ꣻꣻ ꣻꣻद्वितीयकाण्डे तृतीय॰ प्रपाठकः**

**वै।का।3 काम्येष्टि ब्राह्मणम्,मन्त्राश्च 2 (त्रयोदशानुवाका: 13)**

❀ आदित्येभ्यो भुवद्वद्भ्य श्चरु न्निर्वपे द्भूतिकाम- आदित्या वा एतं भूत्यै प्रति नुदन्ते- योऽलं भूत्यै सन्भूति न्न प्राप्नो-त्यादित्यानेव भुवद्वत स्स्वेन भागधेयेनोप धावति- त एवैनं भूति ङ्गमयन्ति- भवत्येवा,ऽऽदित्येभ्यो धारयद्वद्भ्य श्चरु न्निर्वपे दपरुद्धो वाऽपरुध्यमानो वा-ऽऽदित्या वा अपरोद्धार आदित्या अवगमयितार- आदित्यानेव धारयद्वतः।। 1।। ❀ स्वेन भागधेयेनोप धावति- त एवैनँ विशि दाध्र-त्यनपरुध्यो भव, 卐त्यदितेऽनु मन्यस्वे- त्यपरुध्यमानोऽस्य पदमा ददी,तेयँ वा अदिति-रिय मेवास्मै राज्यमनु मन्यते, 卐सत्याऽऽशी- रित्याह- सत्यामेवाऽऽशिष ङ्कुरुत, 卐इह मन- इत्याह- प्रजा एवास्मै समनस॰ करो, 卐त्युप प्रेत मरुतः।। 2।। ❀ सुदानव एना विश्पतिनाऽभ्यमुꣳ राजान- मित्याह, मारुती वै विड्ज्येष्ठो विश्पति- र्विशैवैनꣳ राष्ट्रेण समर्धयति- य॰ परस्ता द्ग्राम्यवादी स्या-त्तस्य गृहा द्व्रीही नाहरे,च्छुक्लाꣳश्च कृष्णाꣳश्च वि चिनुया,द्ये शुक्लास्स्यु स्तमादित्य ञ्चरु न्निर्वपे- दादित्या वै देवतया वि-ड्विश मेवाव गच्छति,।। 3।। ❀ अवगताऽस्य वि-डनवगतꣳ राष्ट्र मित्याहु- र्ये कृष्णास्स्यु- स्तँ वारुण ञ्चरु न्निर्वपे- द्वारुणँ वै राष्ट्र- मुभे एव विशञ्च राष्ट्रञ्चाव गच्छति- यदि नावगच्छे, 卐दिममह

मादित्येभ्यो भाग न्निर्वपा म्यामुष्मा दमुष्यै विशोऽवगन्तो- रिति निर्वपे,दादित्या एवैनं भागधेयं प्रेप्सन्तो विशमव।। 4।। ❀ गमयन्ति, यदि नावगच्छे- दाश्वत्था न्मयूखा न्थ्सप्त मध्यमेषाया मुप हन्या, ॐदिद मह मादित्या न्बध्ना म्यामुष्मा दमुष्यै विशोऽवगन्तो- रि,त्यादित्या एवैनं बद्धवीरा विशमव गमयन्ति, यदि नावगच्छे- देत.मेवाऽऽदित्य ञ्चरु न्निर्वपे- दिध्मेऽपि मयूखा न्थ्सन्नह्ये- दनपरुध्य मेवाव गच्छ,त्याश्वत्था भवन्ति- मरुताँ वा एतदोजो यदश्वत्थ, ओजसैव विशमव गच्छति- सप्त भवन्ति- सप्तगणा वै मरुतो- गणश एव विशमव गच्छति।। 5।। (धारयद्वतो मरुतो गच्छति विश मवैत दष्टादश च। 1।)

❀ देवा वै मृत्यो रबिभयु-स्ते प्रजापति मुपाधाव- न्तेभ्य एतां प्राजापत्याꣳ शतकृष्णला न्निरवप- त्तयैवैष्वमृत मदधा-द्यो मृत्यो र्बिभीया- त्तस्मा एतां प्राजापत्याꣳ शतकृष्णला न्निर्वपे- त्प्रजापतिमेव स्वेन भागधेयेनोप धावति- स एवास्मि न्नायु र्दधाति- सर्व मायुरेति, शतकृष्णला भवति- शताऽऽयुः पुरुष श्शतेन्द्रिय- आयुष्येवेन्द्रिये।। 6।। ❀ प्रति तिष्ठति, घृते भव-त्यायुर्वै घृत- ममृतꣳ हिरण्य- मायु श्चैवास्मा अमृतञ्च समीची दधाति, चत्वारिचत्वारि कृष्णला.न्यव द्यति- चतुरवत्तस्याऽऽप्त्या, एकधा ब्रह्मण उप हर-त्येकधैव यजमान आयु र्दधा,त्यसावादित्यो न व्यरोचत- तस्मै देवाः प्रायश्चित्ति मैच्छ- न्तस्मा एतꣳ सौर्य ञ्चरु न्निरवप- न्तेनैवास्मिन्न्।। 7।। ❀ रुच मदधु,र्यो ब्रह्मवर्चसकाम स्स्या-त्तस्मा एतꣳ सौर्य ञ्चरु न्निर्वपे- दमुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति- स एवास्मि न्ब्रह्मवर्चस न्दधाति- ब्रह्मवर्चस्येव भव,त्युभयतो रुक्मौ भवत- उभयत एवास्मिन्रुच न्दधाति, प्रयाजेप्रयाजे कृष्णल ञ्जुहोति- दिग्भ्य एवास्मै ब्रह्मवर्चसमव रुन्ध, आग्नेय मष्टाकपाल न्निर्वपे- थ्सावित्र न्द्वादशकपालं- भूम्यै।। 8।। ❀ चरुँ- यः कामयेत हिरण्यँ विन्देय हिरण्यं मोप नमेदिति, यदाग्नेयो भव-त्याग्नेयँ वै हिरण्यँ- यस्यैव हिरण्य- न्तेनैवैन द्विन्दते, सावित्रो भवति- सवितृप्रसूत एवैन द्विन्दते, भूम्यै चरु भव- त्यस्यामेवैन द्विन्दत- उपैनꣳ हिरण्य न्नमति, वि वा एष इन्द्रियेण वीर्येणर्ध्यते- यो हिरण्यँ विन्दत- एताम्।। 9।। ❀ एव निर्वपे,द्धिरण्यँ वित्त्वा नेन्द्रियेण वीर्येण व्यृध्यत- एतामेव निर्वपे- द्यस्य हिरण्य न्नश्ये,द्यदाग्नेयो भव- त्याग्नेयँ वै हिरण्यँ- यस्यैव हिरण्य- न्तेनैवैन द्विन्दति, सावित्रो भवति- सवितृप्रसूत एवैनद्विन्दति, भूम्यै चरु भव- त्यस्याँ वा एत न्नश्यति- यन्नश्य-त्यस्यामेवैन द्विन्द,तीन्द्रः।। 10।। ❀ त्वष्टु स्सोम मभीषहाऽपिब-थ्स विष्व ङ्व्यार्छ-थ्स इन्द्रियेण सोमपीथेन व्यार्ध्यत- स यदूर्ध्व मुदवमी- त्ते श्यामाका अभव'2'-न्थ्स प्रजापति मुपाधाव- त्तस्मा एतꣳ सोमेन्द्रꣳ श्यामाक ञ्चरु न्निरवप-

त्तेनैवास्मि न्निन्द्रिय९ सोमपीथ मदधा,द्धि वाँ एष इन्द्रियेण सोमपीथेनर्ध्यते- यस्सोमँ वमिति- यस्सोमवामी स्या-त्तस्मैं।। 11।।❀ एत९ सोमेन्द्र३ श्यामाक ञ्चरु न्निर्वपे- थ्सोम ञ्चैवेन्द्रञ्च स्वेन भागधेयेनोप धावति- तावेवास्मि न्निन्द्रिय९ सोमपीथ न्धत्तो- नेन्द्रियेण सोमपीथेन व्यृद्ध्यते, यथ्सौम्यो भवति- सोमपीथ मेवाव रुन्धे, यदैन्द्रो भव-तीन्द्रियँ वै सोमपीथ- इन्द्रियमेव सोमपीथमव रुन्धे, श्यामाको भव-त्येष वाव स सोमः-।। 12।।❀ साक्षादेव सोमपीथ मव रुन्धे,ऽग्नये दात्रे पुरोडाश मष्टाकपाल न्निर्वपे- दिन्द्राय प्रदात्रे पुरोडाश मेकादशकपालं पशुकामो,ऽग्निरेवास्मै पशू न्प्रजनयति- वृद्धा निन्द्रः प्र यच्छति, दधि मधु घृत.मापो धाना भव-न्त्येतद्वै पशूना९ रूप९- रूपेणैव पशू नव रुन्धे, पञ्चगृहीतं भवति- पाङ्क्ता हि पशवो, बहुरूपं भवति- बहुरूपा हि पशवः।। 13।।❀ समृद्ध्यै, प्राजापत्यं भवति- प्राजापत्या वै पशवः- प्रजापति रेवास्मै पशू.न्प्रजनय,त्यात्मा वै पुरुषस्य मधु, यन्मध्वग्नौ जुहो- त्यात्मानमेव तद्यजमानोऽग्नौ प्र दधाति, पङ्क्तौ याज्याऽनुवाक्ये भवतः- पाङ्क्तः पुरुषः- पाङ्क्ताः पशव- आत्मानमेव मृत्यो र्निष्क्रीय पशूनव रुन्धे।। 14।। (इन्द्रियेऽस्मिन्भूम्या एतामिन्द्र स्स्यात्तस्मै सोमो बहुरूपा हि पशव एकचत्वारि९शच्च। 2।)

❀ देवा वै सत्र मासतर्द्धिपरिमितँ यशस्कामा- स्तेषा९ सोम९ राजानँ यश आर्छ-थ्स गिरि मुदै- त्तमग्नि रनूदै- त्तावग्नीषोमौ समभवता, न्ताविन्द्रो यज्ञविभ्रष्टोऽनु परै- त्तावब्रवी द्याजयतं मेति- तस्मा एतामिष्टि न्निरवपता- माग्नेय मष्टाकपाल- मैन्द्र मेकादशकपाल९- सौम्य ञ्चरु, न्तयैवास्मि न्तेजः।। 15।।❀ इन्द्रियं ब्रह्मवर्चस मधत्ताँ- यो यज्ञविभ्रष्ट स्स्या-त्तस्मा एता मिष्टि न्निर्वपे- दाग्नेय मष्टाकपाल- मैन्द्र मेकादशकपाल९- सौम्य ञ्चरुँ, यदाग्नेयो भवति- तेज एवास्मि न्तेन दधाति, यदैन्द्रो भव-तीन्द्रिय मेवास्मि न्तेन दधाति, यथ्सौम्यो- ब्रह्मवर्चस न्तेनाऽऽग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषये- त्तेजश्चैवास्मि न्ब्रह्मवर्चसञ्च समीची।। 16।।❀ दधा,त्यग्नीषोमीय मेकादशकपाल न्निर्वपे-द्य ङ्कामो नोपनमे,दाग्नेयो वै ब्राह्मण.स्स सोमं पिबति- स्वामेव देवता९ स्वेन भागधेयेनोप धावति- सैवैन ङ्कामेन समर्धय- त्युपैनङ्कामो नम,त्यग्नीषोमीय मष्टाकपाल न्निर्वपे द्ब्रह्मवर्चसकामो-ऽग्नीषोमावेव स्वेन भागधेयेनोप धावति- तावेवास्मि.न्ब्रह्मवर्चस न्धत्तो- ब्रह्मवर्चस्येव।। 17।।❀ भवति, यदष्टाकपाल स्तेनाऽऽग्नेयो, यच्छ्यामाक- स्तेन सौम्य स्समृद्ध्यै, सोमाय वाजिने श्यामाक ञ्चरु न्निर्वपे-द्यः क्लैब्या द्बिभीया- द्रेतो हि वाँ एतस्मा द्वाजिन मपक्राम- त्यथैष क्लैब्याद्बिभाय, सोममेव वाजिन३ स्वेन भागधेयेनोप धावति- स एवास्मि न्रेतो वाजिन न्दधाति- न क्लीबो भवति, ब्राह्मणस्पत्य मेकादशकपाल

न्निर्वपे द्ग्रामकामः-।। 18।।❀ ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति- स एवास्मै सजातान्प्र यच्छति- ग्राम्येव भवति, गणवती याज्याऽनुवाक्ये भवत- स्सजातैरेवैन ङ्गणवन्त ङ्करो,त्येतामेव निर्वपेद्यः कामयेत- ब्रह्मन्विशँ वि नाशयेयमिति, मारुती याज्याऽनुवाक्ये कुर्या-द्ब्रह्मन्नेव विशँ वि नाशयति।। 19।। (तेज स्समीची ब्रह्मवर्चस्येव ग्रामकाम स्त्रिचत्वारि॰शच्च। 3।)

❀ अर्यम्णे चरु न्निर्वपे थ्सुवर्गकामो-ऽसौ वा आदित्योऽर्यमा-ऽर्यमण मेव स्वेन भागधेयेनोप धावति- स एवैन॰ सुवर्गं लोक ङ्गमय- त्यर्यम्णे चरु न्निर्वपे-द्यः कामयेत दानकामा मे प्रजास्स्युरि,त्यसौ वा आदित्यो-ऽर्यमा यः खलु वै ददाति सोऽर्यमा-ऽर्यमणमेव स्वेन भागधेयेनोप धावति- स एव।। 20।।❀ अस्मै दानकामाः प्रजाः करोति- दानकामा अस्मै प्रजा भव,न्त्यर्यम्णे चरु न्निर्वपेद्यः कामयेत स्वस्ति जनतामिया मि-त्यसौ वा आदित्योऽर्यमा-ऽर्यमणमेव स्वेन भागधेयेनोप धावति- स एवैन न्तद्गमयति यत्र जिगमिष,तीन्द्रो वै देवाना मानुजावर आसी-थ्स प्रजापति मुपाधाव- त्तस्मा एत मैन्द्र मानुषूक मेकादशकपाल न्निः।। 21।।❀ अवप- त्तेनैवैन मग्र न्देवतानां पर्यणय- द्बुध्नवती अग्रवती याज्याऽनुवाक्ये अकरो- द्बुध्नादेवैन मग्रं पर्यणय,द्यो राजन्य आनुजावर स्स्या-त्तस्मा एत मैन्द्र मानुषूक मेकादशकपाल न्निर्वपे- दिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैन मग्र॰ समानानां परिणयति- बुध्नवती अग्रवती याज्याऽनुवाक्ये भवतो- बुध्ना.देवैन मग्रम्।। 22।।❀ परिणय-त्यानुषूको भव-त्येषा ह्येतस्य देवता य आनुजावर स्समृध्यै, यो ब्राह्मण आनुजावर स्स्या-त्तस्मा एतं बार्हस्पत्य मानुषूक ञ्चरु न्निर्वपे- द्बृहस्पतिमेव स्वेन भागधेयेनोप धावति- स एवैन मग्र॰ समानानां परिणयति- बुध्नवती अग्रवती याज्याऽनुवाक्ये भवतो- बुध्नादेवैन मग्रं परिणय-त्यानुषूको भव-त्येषा ह्येतस्य देवता य आनुजावर स्समृध्यै।। 23।। (एव निरग्रमेतस्य चत्वारि च। 4।)

❀ प्रजापते स्त्रयस्त्रि॰श द्दुहितर आस-न्ता स्सोमाय राज्ञेऽददा- त्तासा॰ रोहिणी मुपै-त्ता ईर्ष्यन्तीः पुन रगच्छ-न्ता अन्वै-त्ताः पुन.रयाचत- ता अस्मै न पुन रददा-थ्सोऽब्रवी- दृत ममीष्व- यथा समावच्छ उपैष्या-म्यथ ते पुनर्दास्यामीति- स ऋत मामी-त्ता अस्मै पुन रददा- त्तासा॰ रोहिणी मेवोप।। 24।।❀ ऐ-त्तँ यक्ष्म आर्छ, द्राजानँ यक्ष्म आरदिति- तद्राजयक्ष्मस्य जन्म, यत्पापीया नभव- त्तत्पापयक्ष्मस्य, यज्जायाभ्योऽविन्द- त्तज्जायेन्यस्य, य एव मेतेषाँ यक्ष्माणा ञ्जन्म वेद- नैन मेते यक्ष्मा विन्दन्ति, स एता एव नमस्य न्नुपाधाव-त्ता अब्रुवन्वरँ वृणामहै- समावच्छ एव न उपाय इति- तस्मा एतम्।। 25।।❀ आदित्य ञ्चरु न्निरवप- न्तेनैवैनं पापाथ्स्रामा दमुञ्चन्, यः पापयक्ष्मगृहीत स्स्या-

त्तस्मा एत मादित्य ञ्चरु न्निर्वपे- दादित्यानेव स्वेन भागधेयेनोप धावति- त एवैनं पापाथ्स्रामा न्मुञ्च,न्त्यमावास्याया न्निर्वपे- दमुमेवैन माप्यायमान मन्वाप्याययति, नवोनवो भवति जायमान इति पुरोऽनुवाक्या भव- त्यायु रेवास्मि न्तया दधाति, यमादित्या अ॒ꣳशु माप्याययन्तीति याज्यैवैन मेतया प्याययति।। 26।। (एवोपैत मस्मि न्त्रयोदश च। 5।)

प्रजापति र्देवेभ्योऽन्नाद्यँ व्यादिश- थ्सोऽब्रवी- द्यदिमा.न्लोका नभ्यतिरिच्यातै- तन्ममासदिति- तदिमा न्लोकानभ्य.त्यरिच्य-तेन्द्र॒ꣳ राजान- मिन्द्र मधिराज- मिन्द्र॒ꣳ स्वराजान, न्ततो वै स इमा न्लोका॒ꣳ स्त्रेधाऽदुह- त्तत्त्रिधातो स्त्रिधातुत्वँ, यङ्कामयेतान्नाद स्स्यादिति- तस्मा एत न्त्रिधातु न्निर्वपे- दिन्द्राय राज्ञे पुरोडाशम्।। 27।। एकादशकपाल मिन्द्रायाधिराजा- येन्द्राय स्वराज्ञे,ऽयँ वा इन्द्रो राजाऽय मिन्द्रोऽधिराजोऽसा विन्द्र स्स्वरा- डिमानेव लोकान्थ्स्वेन भागधेयेनोप धावति- त एवास्मा अन्नं प्र यच्छ-न्त्यन्नाद एव भवति, यथा वथ्सेन प्रत्ता ङ्गान्दुह- एव मेवेमा न्लोका न्प्रत्ता न्काम मन्नाद्य न्दुह, उत्तानेषु कपालेष्वधि श्रय त्ययातयामत्वाय, त्रयः पुरोडाशा भवन्ति- त्रय इमे लोका- एषाँ लोकाना माप्त्या, उत्तरउत्तरो ज्याया न्भव- त्येवमिव हीमे लोका स्समृद्ध्यै, सर्वेषा मभिगमय न्नव द्यत्यछम्बट्कारँ- व्यत्यासमन्वा.हानिर्दाहाय।। 28।। (पुरोडाश न्त्रय ष्षड्विꣳशतिश्च। 6।)

‡ देवासुरा स्सँयत्ता आस-न्ता न्देवा नसुरा अजय-न्ते देवाः पराजिग्याना असुराणाँ वैश्य मुपाऽऽय- न्तेभ्य इन्द्रियँ वीर्य मपाक्राम- त्तदिन्द्रोऽचाय- त्तदन्वपाक्राम- त्तदवरुध न्नाशक्नो- त्तदस्मा दभ्यर्धोऽचर-थ्सप्रजापति मुपाधाव- त्तमेतया सर्वपृष्ठयाऽयाजय- त्तयैवास्मि न्निन्द्रियँ वीर्य मदधा-द्य इन्द्रियकामः।। 29।। वीर्यकाम स्स्या-त्तमेतया सर्वपृष्ठया याजये- देता एव देवतास्स्वेन भागधेयेनोप धावति- ता एवास्मि न्निन्द्रियँ वीर्य न्दधति- यदिन्द्राय राथन्तराय निर्वपति- यदेवाग्ने स्तेज स्तदेवाव रुन्धे, यदिन्द्राय बार्हताय- यदेवेन्द्रस्य तेज स्तदेवाव रुन्धे, यदिन्द्राय वैरूपाय- यदेव सवितु स्तेज.स्तत्।। 30।। एवाव रुन्धे, यदिन्द्राय वैराजाय- यदेव धातु स्तेज स्तदेवाव रुन्धे, यदिन्द्राय शाक्वराय- यदेव मरुता न्तेज स्तदेवाव रुन्धे, यदिन्द्राय रैवताय- यदेव बृहस्पते स्तेज स्तदेवाव रुन्ध, एतावन्ति वै तेजा॒ꣳसि- तान्येवाव रुन्ध, उत्तानेषु कपाले.ष्वधि श्रय त्ययातयामत्वाय, द्वादशकपालः पुरोडाशः।। 31।। भवति वैश्वदेवत्वाय, समन्तं पर्यवद्यति- समन्त मेवेन्द्रियँ वीर्यँ यजमाने दधाति, व्यत्यास मन्वा हानिर्दाहा,याश्व ऋषभो वृष्णि र्बस्त स्सा दक्षिणा वृषत्वा,यैतयैव यजेताभिशस्यमान,

एताश्चेद्वा अस्य देवता अन्न मद-न्त्यदन्त्यु वेवास्य मनुष्याः।। 32।। (इन्द्रियकाम स्सवितु स्तेज स्तत्पुरोडाशोऽष्टात्रि॰शच्च। 7।)

रजनो वै कौणेयः क्रतुजित ञ्जानकि ञ्चक्षुर्वन्य मया- त्तस्मा एता मिष्टि न्निरवप- दग्नये भ्राजस्वते पुरोडाश मष्टाकपाल॰- सौर्य ञ्चरु- मग्नये भ्राजस्वते पुरोडाश मष्टाकपाल- न्तयैवास्मि न्चक्षु रदधा-द्य श्चक्षुष्काम स्स्या-त्तस्मा एता मिष्टि न्निर्वपे, दग्नये भ्राजस्वते पुरोडाश मष्टाकपाल॰- सौर्य ञ्चरु- मग्नये भ्राजस्वते पुरोडाश मष्टाकपाल, मग्नेर्वै चक्षुषा मनुष्या वि।। 33।। पश्यन्ति- सूर्यस्य देवा, अग्नि ञ्चैव सूर्यञ्च स्वेन भागधेयेनोप धावति- तावेवास्मि न्चक्षुर्धत्त- श्चक्षुष्मानेव भवति, यदाग्नेयौ भवत- श्चक्षुषी एवास्मि न्तत्प्रति दधाति, यथ्सौर्यो- नासिका न्ते,नाभित स्सौर्य माग्नेयौ भवत- स्तस्मा दभितो नासिका ञ्चक्षुषी- तस्मा न्नासिकया चक्षुषी विधृते, समानी याज्याऽनुवाक्ये भवत- स्समान॰ हि चक्षु स्समृध्या, उदु त्य ञ्जातवेदस॰[16]- सप्त त्वा हरितो रथे[17]- चित्र न्देवाना मुदगा दनीक[18]- मिति पिण्डान्प्र यच्छति- चक्षुरेवास्मै प्र यच्छति- यदेव तस्य तत्।। 34।। (विद्यष्टा वि॰शतिश्च। 8।)

ध्रुवोऽसि ध्रुवोऽह॰ सजातेषु भूयास न्धीर श्चेत्ता वसुवि ध्रुवोऽसि ध्रुवोऽह॰ सजातेषु भूयास मुग्रश्चेत्ता वसुवि ध्रुवोऽसि ध्रुवोऽह॰ सजातेषु भूयास मभिभूश्चेत्ता वसुवि दामन.मस्यामनस्य देवा ये सजाताः-- --कुमारा-स्समनस स्तानह ङ्कामये हृदा ते मा.ङ्कामयन्ता॰ हृदा- तान्म आमनसः कृधि स्वाहा ऽऽमनमसि।। 35।। आमनस्य देवा यास्स्त्रिय स्समनस-स्ता अह ङ्कामये हृदा- ता मा ङ्कामयन्ता॰ हृदा- ता म आमनसः कृधि स्वाहा, वैश्वदेवी॰ साङ्ग्रहणी न्निर्वपे द्ग्रामकामो, वैश्वदेवा वै सजाता- विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति- त एवास्मै सजाता.न्प्रयच्छन्ति- ग्राम्येव भवति- साङ्ग्रहणी भवति- मनोग्रहणँ वै सङ्ग्रहणं- मन एव सजातानाम्।। 36।। गृह्णाति, ध्रुवोऽसि ध्रुवोऽह॰ सजातेषु भूयासमिति- परिधी न्परि दधा.त्याशिष मैवैतामा शास्ते,ऽथो एत.देव सर्व॰ सजातेष्वधि भवति- यस्यैवँ विदुष एते परिधयः परिधीयन्त, आमन.मस्यामनस्य देवा इति तिस्र आहुती र्जुहो-त्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका यास्स्त्रिय- स्तानेवाव रुन्धे- त एन मवरुद्धा उप तिष्ठन्ते।। 37।। (स्वाहाऽऽमनमसि सजातान॰ रुन्धे पञ्च च। 9।)

16

17

18

☬❀卐यन्नव मै-त्तन्नवनीत मभव, द्यदसर्प- त्तथ्सर्पि रभव,द्य.दद्ध्रियत- तद्घृत मभव, 卐दश्विनो॰ प्राणोऽसि तस्य ते दत्ताँ- ययो॰ प्राणोऽसि स्वा 卐हेन्द्रस्य प्राणोऽसि तस्य ते ददातु- यस्य प्राणोऽसि स्वाहा 卐मित्रावरुणयो॰ प्राणोऽसि तस्य ते दत्ताँ- ययो॰ प्राणोऽसि स्वाहा 卐विश्वेषा न्देवानां प्राणोऽसि।। 38।।❀ तस्य ते ददतु- येषां प्राणोऽसि स्वाहा

卐घृतस्य धारा ममृतस्य पन्था-मिन्द्रेण दत्तां प्रयतां मरुद्भिः। तत्त्वा विष्णु॰ पर्यपश्य- त्तत्त्वेडा गव्यैरयत्।।

卐पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपा॰शो वीर्येण देवस्त्वा सवितोथ्सृजतु जीवातवे जीवनस्यायै 卐बृहद्रथन्तरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत्।। 39।।❀ सृजतु जीवातवे जीवनस्याया 卐अग्नेस्त्वा मात्रया जगत्यै वर्तन्याऽऽग्रयणस्य वीर्येण देवस्त्वा सवितोथ्सृजतु जीवातवे जीवनस्याया

卐इम मग्न आयुषे वर्चसे कृधि- प्रिय॰ रेतो वरुण सोम राजन्न्। मातेवास्मा अदिते शर्म यच्छ- विश्वे देवा जरदष्टि र्यथाऽसत्।।

卐अग्नि रायुष्मान्थ्स वनस्पतिभि रायुष्मा न्तेन त्वाऽऽयुषाऽऽयुष्मन्त ङ्करोमि 卐सोम आयुष्मा.न्थ्स ओषधीभि- 卐र्यज्ञ आयुष्मा.न्थ्स दक्षिणाभि- 卐र्ब्रह्माऽऽयुष्म त्तद्ब्राह्मणै रायुष्म- 卐द्देवा आयुष्मन्त स्तेऽमृतेन- 卐पितर आयुष्मन्त स्ते स्वधयाऽऽयुष्मन्त- स्तेन त्वाऽऽयुषाऽऽयुष्मन्त ङ्करोमि।। 40।। (विश्वेषा न्देवानां प्राणोऽसि त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोथ्सोम आयुष्मा न्पञ्चवि॰शतिश्च। 10।)

☬❀ अग्निँ वाँ एतस्य शरीर ङ्गच्छति- सोम॰ रसो- वरुण एनँ वरुणपाशेन गृह्णाति- सरस्वतीँ वा.गग्नाविष्णू आत्मा- यस्य ज्योगामयति, यो ज्योगामयावी स्या-द्यो वा कामयेत सर्वमायु रियामिति- तस्मा एतामिष्टि न्निर्वपे- दाग्नेय मष्टाकपाल॰- सौम्य ञ्चरुँ- वारुण न्दशकपाल॰- सारस्वत ञ्चरु- माग्नावैष्णव मेकादशकपाल, मग्ने.रेवास्य शरीर न्निष्क्रीणाति- सोमाद्रसम्-।। 41।।❀ वारुणेनैवैनँ वरुणपाशा.न्मुञ्चति- सारस्वतेन वाच न्दधा-त्यग्नि स्सर्वा देवता- विष्णु र्यज्ञो- देवताभि श्चैवैनँ यज्ञेन च भिषज्य-त्युत यदीतासु र्भवति जीवत्येव, यन्नव.मै त्तन्नवनीत मभव दित्याज्य मवेक्षते- रूपमेवास्यैत न्महिमानँ व्याचष्टे,ऽश्विनो॰ प्राणोऽसीत्याहाश्विनौ वै देवानाम्।। 42।।❀ भिषजौ- ताभ्यामेवास्मै भेषज ङ्करो,तीन्द्रस्य प्राणोऽसी त्या-हेन्द्रिय मेवास्मि न्नेतेन दधाति, मित्रावरुणयो॰ प्राणोऽसीत्याह-

प्राणापानावेवास्मि न्नेतेन दधाति, विश्वेषा न्देवानां प्राणोऽसीत्याह वीर्य मेवास्मि न्नेतेन दधाति, घृतस्य धारा ममृतस्य पन्था.मित्याह- यथायजु रेवैत,त्पावमानेन त्वा स्तोमेनेति।। 43।।❀ आह- प्राणमेवास्मि न्नेतेन दधाति, बृहद्रथन्तरयोस्त्वा स्तोमेनेत्या-हौज एवास्मि न्नेतेन दधा, त्यग्नेस्त्वा मात्रयेत्याहाऽऽत्मान मेवास्मि न्नेतेन दधा,त्यृत्विजः पर्याहु- र्यावन्त एवर्त्विज- स्त एनं भिषज्यन्ति, ब्रह्मणो हस्त मन्वारभ्य पर्याहु- रेकधैव यजमान आयु र्दधति, यदेव तस्य तद्धिरण्यात्।। 44।।❀ घृत न्निष्पिब- त्यायुर्वै घृत- ममृत॰ हिरण्य- ममृता देवाऽऽयु र्निष्पिबति, शतमानं भवति- शताऽऽयुः पुरुष श्शतेन्द्रिय- आयुष्येवेन्द्रिये प्रति तिष्ठ,त्यथो~ खलु यावती स्समा एष्य न्मन्येत- तावन्मानᳬ स्याथ्समृद्ध्या, इमममग्न आयुषे वर्चसे कृधीत्याहाऽऽयु रेवास्मिन्वर्चो दधाति, विश्वे देवा जरदष्टि र्यथाऽसदित्याह- जरदष्टि मेवैन ङ्करो,त्यग्नि रायुष्मा.निति हस्त ङ्गृह्णा,त्येते वै देवा आयुष्मन्त- स्त एवास्मि न्नायु र्दधति- सर्वमायुरेति।। 45।। (रस न्देवाना॰ स्तोमेनेति हिरण्या दसदिति द्वावि॰शतिश्च। 11।)

❀ प्रजापति र्वरुणायाश्व मनय-थ्स स्वान्देवता मार्च्छ-थ्स पर्यदीर्यत, स एतँ वारुण ञ्चतुष्कपाल मपश्य- त्तन्निरवप- त्ततो वै स वरुणपाशा दमुच्यत, वरुणो वा एत ङ्गृह्णाति- योऽश्वं प्रतिगृह्णाति, यावतोऽश्वा न्प्रतिगृह्णीया- त्तावतो वारुणा न्चतुष्कपाला न्निर्वपे- द्वरुण मेव स्वेन भागधेयेनोप धावति- स एवैनँ वरुणपाशा न्मुञ्चति,।। 46।।❀ चतुष्कपाला भवन्ति- चतुष्पाद्ध्यश्व स्समृद्ध्या, एकमतिरिक्त न्निर्वपे- द्यमेव प्रतिग्राही भवति- यँ वा नाध्येति- तस्मादेव वरुणपाशा.न्मुच्यते, यद्यपरं प्रतिग्राही स्या- थ्सौर्य मेककपाल.मनु निर्वपे- दमुमेवाऽऽदित्य मुच्चार ङ्कुरुते,ऽपोऽवभृथ मवै-त्यफ्सु वै वरुण- स्साक्षादेव वरुण मवयजते, ऽपोनप्त्रीय ञ्चरुं पुनरेत्य निर्वपे- दफ्सुयोनिर्वा अश्व- स्स्वामेवैनँ योनि ङ्गमयति- स एन॰ शान्त उप तिष्ठते।। 46।। (मुञ्चति चरु॰ सप्तदश च। 12।)

❀卐 या वा.मिन्द्रावरुणा- यतव्या- तनू स्तयेम म॰हसो मुञ्चतँ 卐या वामिन्द्रावरुणा सहस्या- 卐-- रक्षस्या- 卐--तेजस्या- तनू स्तयेम म॰हसो मुञ्चतँ 卐यो वा.मिन्द्रावरुणा वग्नौ स्रामस्तँ वा.मेतेनाव यजे 卐यो वा.मिन्द्रावरुणा द्विपाथ्सु पशुषु- 卐 --चतुष्पाथ्सु- 卐 --गोष्ठे- 卐 --गृहे- 卐--ष्वफ्स्वो- 卐-- षधीषु- 卐--वनस्पतिषु- स्रामस्तँ वा.मेतेनाव यज, इन्द्रो वा एतस्य।। 48।।❀ इन्द्रियेणाप क्रामति- वरुण एनँ वरुणपाशेन गृह्णाति, यः पाप्मना गृहीतो भवति- यः पाप्मना गृहीत स्स्या-त्तस्मा एता.मैन्द्रावरुणीं पयस्या न्निर्वपे, दिन्द्र एवास्मि न्निन्द्रिय दधाति- वरुण एनँ वरुणपाशान्मुञ्चति, पयस्या

भवति- पयो हि वा एतस्मा दपक्राम- त्यथैष पाप्मना गृहीतो, यत्पयस्या भवति- पय एवास्मि न्तया दधाति, पयस्यायाम्।। 49।।❀ पुरोडाश मव दधा-त्यात्मन्वन्त मेवैन ङ्करो,त्यथो आयतनवन्त.मेव चतुर्धा व्यूहति- दिक्ष्वेव प्रति तिष्ठति, पुन स्समूहति- दिग्भ्य एवास्मै भेषज ङ्करोति, समूह्याव द्यति- यथाऽविद्ध न्निष्कृन्तति- तादृगेव त,द्यो वा.मिन्द्रावरुणा वन्नौ स्त्राम स्तँ वामेतेनाव यज इत्याह- दुरिष्ट्या एवैनं पाति, यो वा.मिन्द्रावरुणा द्विपाथ्सु पशुषु स्त्राम.स्तँ वामेतेनाव यज- इत्या-हैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीया-स्ता एवास्मै वरुणपाशा.न्मुञ्चति।। 50।। (एतस्य पयस्यायां पाति षड्विँशतिश्च। 13।)

**वै।का।12 याज्या: 11 (एकोऽनुवाक: 1)**

❀卐स प्रत्नव[19]❀ 卐न्नि काव्ये[20] 卐न्द्रँ वो विश्वतस्प[21] 卐रीन्द्र न्नरः[22]❀।।

卐 त्वन्न स्सोम विश्वतो रक्षा राजन्नघायतः। न रिष्ये त्वावत स्सखा।।

卐 या ते धामानि दिवि या पृथिव्याँ या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वै स्सुमना अहेडन्राज न्थ्सोम प्रति हव्या गृभाय।।

卐 अग्नीषोमा सवेदसा सहूती वनत ङ्गिरः। सन्देवत्रा बभूवथुः।।

卐 युवम्।। 51।।❀ एतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवँ सिन्धूँ रभिशस्ते रवद्या दग्नीषोमा वमुञ्चत ङ्गृभीतान्।।

卐 अग्नीषोमाविमँ सु मे शृणुतँ वृषणा हवम्। प्रति सूक्तानि हर्यतं भवत न्दाशुषे मयः।।

卐 आऽन्य न्दिवो मातरिश्वा जभारामथ्ना दन्यं परि श्येनो अद्रेः। अग्नीषोमा ब्रह्मणा वावृधानोरुँ यज्ञाय चक्रथुरु लोकम्।।

卐 अग्नीषोमा हविषः प्रस्थितस्य वीतम्।। 52।।❀ हर्यतँ वृषणा जुषेथाम्। सुशर्माणा स्ववसा हि भूत मथा धत्तँ यजमानाय शँ योः।।

卐 आ प्यायस्व[23]❀ 卐सन्ते[24]❀।।

19

20

21

22

23

24

卐 गणानान्त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ न श्शृण्वन्नूतिभि स्सीद सादनम्।।

卐 स इज्जनेन स विशा स जन्मना स पुत्रै र्वाजं भरते धना नृभिः। देवानाँ यः पितर माविवासति।। 53।। ❀ श्रद्धामना हविषा ब्रह्मणस्पतिम्।।

卐 स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण। बृहस्पति रुस्रिया हव्यसूदः कनिक्रद द्वावशती रुदाजत्।।

卐 मरुतो यद्ध वो दिवो[25]❀ 卐या व श्शर्म[26]❀।।

卐 अर्यमाऽऽयाति वृषभ स्तुविष्मा न्दाता वसूनां पुरुहूतो अर्हन्न्। सहस्राक्षो गोत्रभि द्वज्रबाहु रस्मासु देवो द्रविण न्दधातु।।

卐 ये तेऽर्यम न्बहवो देवयानाः पन्थानः।। 54।। ❀ राज न्दिव आचरन्ति। तेभिर्नो देव महि शर्म यच्छ शन्न एधि द्विपदे शञ्चतुष्पदे।।

卐 बुध्ना दग्र मङ्गिरोभि र्गृणानो वि पर्वतस्य दृꣳहितान्यैरत्। रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्र श्चकार।।

卐 बुध्नादग्रेण वि मिमाय मानै र्वज्रेण खान्यतृण न्नदीनाम्। वृथाऽसृज त्पथिभि र्दीर्घयाथै स्सोमस्य ता मद इन्द्र श्चकार।। 55।।

❀卐 प्र यो जज्ञे विद्वाꣳ अस्य बन्धुँ विश्वानि देवो जनिमा विवक्ति। ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचा दुच्चा स्वधयाऽभि प्र तस्थौ।।

卐 महान्मही~ अस्तभाय द्विजातो द्याꣳ सद्म पार्थिवञ्च रजः। स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पति र्देवता यस्य सम्राट्।।

卐 बुध्नाद्यो अग्रमभ्यत्योजसा बृहस्पति माविवासन्ति देवाः। भिनद्वलँ वि पुरो दर्दरीति कनिक्रद थ्सुवरपो जिगाय।। 56।। (युवँ वीत माविवासति पन्थानो दीर्घयाथै स्सोमस्य ता मद इन्द्र श्चकार देवा नव च। 14।)

(आदित्येभ्यो देवा वै मृत्यो र्देवा वै सत्रमासतार्यम्णे प्रजापते स्त्रयस्त्रिꣳश त्प्रजापति र्देवेभ्योऽन्नाद्य न्देवासुरा स्तान्त्रजनो ध्रुवोऽसि यन्नवमैदग्निँ वै प्रजापति र्वरुणाय या वामिन्द्रावरुणा स प्रत्नव च्चतुर्दश।

25

26

14। आदित्येभ्य स्त्वष्टुरस्मै दानकामा एवाव रुन्धेऽग्निँ वै स प्रत्नवथ्षद्दश्चाशत्। 56। आदित्येभ्य स्सुव रपो जिगाय।)

## द्वितीयकाण्डे चतुर्थः प्रपाठकः

### वै।का।3 काम्येष्टि ब्राह्मणम्,मन्त्राश्च 3 (त्रयोदशानुवाका: 13)

❀ देवा मनुष्याः पितर स्तेऽन्यत आस- न्नसुरा रक्षाꣳसि पिशाचा, स्तेऽन्यत स्तेषा न्देवाना मुत यदल्पँ लोहित मकुर्व- न्तद्रक्षाꣳसि रात्रीभि रसुभ्न, न्तान्थ्सुब्धा न्मृता नभि व्यौच्छ,त्ते देवा अविदु- र्यो वै नोऽयं म्रियते- रक्षाꣳसि वा इमं '2' घ्नन्तीति, ते रक्षाꣳस्युपामन्त्रयन्त- तान्यब्रुवन्वरँ वृणामहै- यत्।। 1।।❀ असुरा न्जयाम- तन्न स्सहासदिति- ततो वै देवा असुरा नजय, न्तेऽसुरा ञ्जित्वा- रक्षाꣳस्यपानुदन्त, तानि रक्षाꣳस्यनृत मकर्तेति- समन्त न्देवा न्पर्यविश,न्ते देवा अग्नावनाथन्त, तेऽग्नये प्रवते पुरोडाश मष्टाकपाल न्निरवप- न्नग्नये विबाधवते-ऽग्नये प्रतीकवते, यदग्नये प्रवते निरवपन्- यान्येव पुरस्ता.द्रक्षाꣳसि।। 2।।❀ आस-न्तानि तेन प्राणुदन्त, यदग्नये विबाधवते- यान्येवाभितो रक्षाꣳस्यास- न्तानि तेन व्यबाधन्त, यदग्नये प्रतीकवते- यान्येव पश्चा द्रक्षाꣳस्यास- न्तानि तेनापानुदन्त, ततो देवा अभव- न्पराऽसुरा, यो भ्रातृव्यवान्थ्स्या-थ्स स्पर्धमान एतयेष्ट्या यजे-ताग्नये प्रवते पुरोडाश मष्टाकपाल न्निर्वपे- दग्नये विबाधवते-।। 3।।❀ अग्नये प्रतीकवते, यदग्नये प्रवते निर्वपति- य एवास्मा च्छ्रेया न्भ्रातृव्य- स्तन्तेन प्रणुदते, यदग्नये विबाधवते- य एवैनेन सदृ-ङ्न्तेन विबाधते, यदग्नये प्रतीकवते- य एवास्मा त्पापीया-न्त न्तेनाप नुदते, प्र श्रेयाꣳसं भ्रातृव्य न्नुदते-ऽति सदृश.ङ्कामति- नैनं पापीया नाप्नोति- य एवँ विद्वानेतयेष्ट्या यजते।। 4।। (वृणामहै यत्पुरस्ताद्रक्षाꣳसि वपे दग्नये विबाधवत एव श्चत्वारि च। 1।)

❀ देवासुरा स्सँयत्ता आस-न्ते देवा अब्रुवन्- यो नो वीर्यावत्तम स्तमनु समारभामहा इति, त इन्द्र मब्रुव-न्त्वँ वै नो वीर्यावत्तमोऽसि- त्वामनु समारभामहा इति, सोऽब्रवी- त्तिस्रो म इमा स्तनुवो वीर्यावती-स्ताः प्रीणी-ताथासुरा नभि भविष्यथेति, ता वै ब्रूहीत्यब्रुव- न्निय मꣳहोमु-गियँ विमृ.धेय मिन्द्रियावती।। 5।।❀ इत्यब्रवी,त्त इन्द्रायाꣳहोमुचे पुरोडाश मेकादशकपाल न्निरवप- न्निन्द्राय वैमृधा- येन्द्रायेन्द्रियावते, यदिन्द्रायाꣳहोमुचे निरवप- न्नꣳहस एव तेनामुच्यन्त, यदिन्द्राय वैमृधाय- मृध एव तेनापाघ्नत, यदिन्द्रायेन्द्रियावत- इन्द्रियमेव तेनाऽऽत्म न्नदधत, त्रयस्त्रिꣳशत्कपालं पुरोडाश न्निरवप- न्त्रयस्त्रिꣳशद्वै देवता- स्ता इन्द्र आत्म.न्ननु समारम्भयत भूत्यै,।। 6।।❀ ताँ वाव देवा

विजिति मुत्तमा मसुरै र्व्यजयन्त, यो भ्रातृव्यवा न्थ्स्या-थ्स स्पर्धमान एतयेष्ट्या यजे-तेन्द्रायाꣳहोमुचे पुरोडाश मेकादशकपाल न्निर्वपे- दिन्द्राय वैमृधा-येन्द्रायेन्द्रियावते,ऽꣳहसा वा एष गृहीतो- यस्मा च्छ्रेया न्भ्रातृव्यो- यदिन्द्रायाꣳहोमुचे निर्वप.त्यꣳहस एव तेन मुच्यते, मृधा वा एषोऽभिषण्णो- यस्माथ्समाने ष्वन्य श्श्रेया.नुत।। 7।।❀ अभ्रातृव्यो- यदिन्द्राय वैमृधाय- मृध एव तेनाप हते, यदिन्द्रा.येन्द्रियावत- इन्द्रियमेव तेनाऽऽत्मन्धत्ते, त्रयस्त्रिꣳशत्कपालं पुरोडाश न्निर्वपति- त्रयस्त्रिꣳशद्वै देवता- स्ता एव यजमान आत्म न्ननु समारम्भयते भूत्यै, सा वा एषा विजिति र्नामेष्टि- र्य एवं विद्वा नेतयेष्ट्या यजत- उत्तमा.मेव विजितिं भ्रातृव्येण वि जयते।। 8।। (इन्द्रियावती भूत्या उतैकान्न पञ्चाशच्च। 2।)

❀ देवासुरा स्सँयत्ता आस-न्तेषा ङ्गायत्र्योजो बलमिन्द्रियँ वीर्यं प्रजां पशू.न्थ्सङ्गृह्याऽऽदायापक्रम्यातिष्ठ- त्तेऽमन्यन्त- यतरान् वा इय मुपावर्थ्स्यति- त इदं भविष्यन्तीति, ताँ व्यह्वयन्त- विश्वकर्मन्निति देवा- दाभीत्यसुरा, स्सा नान्यतराꣳश्चनोपाऽऽवर्तत, ते देवा एतद्यजु रपश्य न्नोजोऽसि सहोऽसि बलमसि।। 9।।❀ भ्राजोऽसि देवाना न्धाम नामासि विश्वमसि विश्वाऽऽयु स्सर्वमसि सर्वाऽऽयु रभिभू- रिति वाव देवा असुराणा मोजो बलमिन्द्रियँ वीर्यं प्रजां पशू नवृञ्जत, यद्गाय.त्र्यपक्रम्यातिष्ठ- त्तस्मा देता ङ्गायत्रीतीष्टि माहु, स्सँवथ्सरो वै गायत्री- सँवथ्सरो वै तदपक्रम्यातिष्ठ- द्यदेतया देवा असुराणा मोजो बलमिन्द्रियँ वीर्यम्।। 10।।❀ प्रजां पशू नवृञ्जत- तस्मा देताꣳ सँवर्ग इतीष्टि माहु,र्यो भ्रातृव्यवान्थ्स्या-थ्स स्पर्धमान एतयेष्ट्या यजे,ताग्नये सँवर्गाय पुरोडाश मष्टाकपाल न्निर्वपे-त्तꣳ श्रृत.मासन्न मेतेन यजुषाऽभि मृशे- दोज एव बल मिन्द्रियँ वीर्यं प्रजां पशू न्भ्रातृव्यस्य वृङ्क्ते- भवत्यात्मना- पराऽस्य भ्रातृव्यो भवति।। 11।। (बलमस्येतया देवा असुराणा मोजो बलमिन्द्रियँ वीर्यं पञ्चचत्वारिꣳशच्च। 3।)

❀ प्रजापतिः प्रजा असृजत- ता अस्माथ्सृष्टाः पराची राय-न्ता यत्रावस न्ततो गर्मु.दुदतिष्ठ-त्ता बृहस्पति श्चान्ववैताꣳ- सोऽब्रवी द्बृहस्पति- रनया त्वा प्रतिष्ठा-न्यथ त्वा प्रजा उपावर्थ्स्यन्तीति, तं प्रातिष्ठ- त्ततो वै प्रजापतिं प्रजा उपाऽऽवर्तन्त, यः प्रजाकाम स्स्या-त्तस्मा एतं प्राजापत्य ङ्गार्मुत ञ्चरु न्निर्वपे- त्प्रजापतिम्।। 12।।❀ एव स्वेन भागधेयेनोप धावति -स एवास्मै प्रजां प्र जनयति, प्रजापतिः पशू नसृजत- तेऽस्माथ्सृष्टाः पराञ्च आय-न्ते यत्रावस न्ततो गर्मु दुदतिष्ठ- त्तान्पूषा चान्ववैताꣳ- सोऽब्रवी त्पूषा-ऽनया मा प्रति-ष्ठाथ त्वा पशव उपावर्थ्स्यन्तीति, मां प्रतिष्ठेति

सोमोऽब्रवी- न्मम वै।। 13।।❀ अकृष्टपच्य मि-त्युभौ वां प्रतिष्ठानीत्यब्रवी,त्तौ प्रातिष्ठ- त्ततो वै प्रजापतिं पशव उपाऽऽवर्तन्त, यः पशुकाम स्स्या-त्तस्मा एतꣳ सोमापौष्ण ञ्चरुं निर्वपे-थ्सोमापूषणावेव स्वेन भागधेयेनोप धावति- तावेवास्मै पशू.न्प्रजनयत- स्सोमो वै रेतोधाः- पूषा पशूनां प्रजनयिता- सोम एवास्मै रेतो दधाति- पूषा पशून्प्र जनयति।। 14।। (वपे त्प्रजापतिँ वै दधाति पूषा त्रीणि च। 4।)

❀卐अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः। इन्द्रो धर्ता गृहेषु नः।।

卐 सविता यस्सहस्त्रिय स्स नो गृहेषु रारणत्। आ पूषा एत्वा वसु।।

卐 धाता ददातु नो रयि मीशानो जगतस्पतिः। स नः पूर्णेन वावनत्।।

卐 त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत्। सहस्त्रेणायुतेन च।।

卐 येन देवा अमृतम्।। 15।।❀ दीर्घꣳ श्रवो दिव्यैरयन्त। रायस्पोष त्वमस्मभ्य ङ्गवा ङ्कुल्मि ञ्जीवस आ युवस्व।।

卐 अग्निर्गृहपति स्सोमो विश्ववनि स्सविता सुमेधा स्स्वाहा।।

卐 अग्ने गृहपते यस्ते घृत्यो भाग स्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्या त्पथो मा योषं मूर्धा भूयासꣳ स्वाहा।। 16।। (अमृत मष्टात्रिꣳशच्च। 5।)

❀ चित्रया यजेत पशुकाम, इयँ वै चित्रा- यद्वा अस्याँ विश्वं भूत मधि प्रजायते- तेनेय ञ्चित्रा, य एवँ विद्वाꣳश्चित्रया पशुकामो यजते- प्र प्रजया पशुभि र्मिथुनै र्जायते, प्रैवाऽऽग्नेयेन वापयति- रेत स्सौम्येन दधाति- रेत एव हित न्त्वष्टा रूपाणि वि करोति, सारस्वतौ भवत, एतद्वै दैव्यं मिथुन- न्दैव्य मेवास्मै।। 17।।❀ मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय, सिनीवाल्यै चरु र्भवति- वाग्वै सिनीवाली- पुष्टिः खलु वै वा-क्पुष्टिमेव वाच मुपै,त्यैन्द्र उत्तमो भवति- तेनैव तन्मिथुनꣳ, सप्तैतानि हवीꣳषि भवन्ति- सप्त ग्राम्याः पशव- स्सप्ताऽऽरण्या- स्सप्त छन्दाꣳ-स्युभय.स्यावरुद्ध्या, अथैता आहुती र्जुहो-त्येते वै देवाः पुष्टिपतय- स्त एवास्मि न्पुष्टि न्दधति- पुष्यति प्रजया पशुभि, रथो यदेता आहुती र्जुहोति प्रतिष्ठित्यै।। 18।।(अस्मै त एव द्वादश च। 6।)

❀卐मारुत.मसि मरुता मोजोऽपा न्धारां भिन्धि 卐रमयत मरुत श्श्येनमायिनं मनोजवसँ वृषणꣳ सुवृक्तिम्। येन शर्ध उग्र मवसृष्ट.मेति तदश्विना परि धत्तꣳ स्वस्ति।।

卐पुरोवातो वर्षन्जिन्व रावृथ्स्वाहा 卐वाताव द्वर्ष न्नुग्र रावृथ्स्वाहा 卐स्तनयन्वर्ष न्भीम रावृ थ्स्वा 卐हाऽनश.न्यवस्फूर्ज न्दिद्यु द्वर्षन्त्वेष रावृथ्स्वा 卐हाऽतिरात्रँ वर्ष न्पूर्ति रावृत्।। 19।। ❀ स्वाहा 卐बहु हाय मवृषादिति श्रुत रावृथ्स्वा 卐हाऽऽतपति वर्षन्विरा डावृथ्स्वा 卐हाऽवस्फूर्ज न्दिद्युद्वर्ष न्भूत रावृथ्स्वाहा 卐मान्दा वाशा श्शुन्ध्यू रजिराः।

卐ज्योतिष्मती स्तमस्वरी रुन्दती स्सुफेनाः।

卐मित्रभृतः क्षत्रभृत स्सुराष्ट्रा इह माऽवत।

卐वृष्णो अश्वस्य सन्दानमसि वृष्ट्यै त्वोप नह्यामि।। 20।। (पूर्ति रावृ द्विचत्वारिꣳशच्च। 7।)

❀卐देवा वसव्या अग्ने सोम सूर्य। --

卐 देवा श्शर्मण्या मित्रावरुणाऽर्यमन्न्। --

卐देवा स्सपीतयोऽपा न्नपा दाशुहेमन्न्। उद्नो दत्तोदधिं भिन्त दिवः पर्जन्या दन्तरिक्षा त्पृथिव्या स्ततो नो वृष्ट्याऽवत।।

卐 दिवा चित्तमः कृण्वन्ति पर्जन्ये नोदवाहेन। पृथिवीँ यद्व्युन्दन्ति।।

卐आ यन्नर स्सुदानवो ददाशुषे दिवः कोश मचुच्यवुः। वि पर्जन्या स्सृजन्ति रोदसी अनु धन्वना यन्ति।। 21।। ❀ वृष्टयः।।

卐 उदीरयथा मरुत स्समुद्रतो यूयँ वृष्टिँ वर्षयथा पुरीषिणः। न वो दस्रा उप दस्यन्ति धेनव श्शुभँ याता मनु रथा अवृथ्सत।

卐सृजा वृष्टि न्दिव आऽद्भि स्समुद्रं पृण। 卐अब्जा असि प्रथमजा बलमसि समुद्रियम्।।

卐 उन्नम्भय पृथिवीं भिन्धीदं दिव्य न्नभः। उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम्।।

卐 ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः। त इमँ यज्ञ मवन्तु त इद ङ्क्षेत्रमा विशन्तु त इद ङ्क्षेत्रमनु वि विशन्तु।। 22।। (यन्ति देवा विꣳशतिश्च। 8।)

❀ मारुत.मसि मरुता.मोज इति कृष्णँ वासः कृष्णतूषं परि धत्त- एतद्वै वृष्ट्यै रूपꣳ- सरूप एव भूत्वा पर्जन्यँ वर्षयति, रमयत मरुत श्श्येन मायिनमिति पश्चाद्वातं प्रति मीवति- पुरोवातमेव जनयति- वर्षस्यावरुद्ध्यै, वातनामानि जुहोति- वायुर्वै वृष्ट्या ईशे- वायुमेव स्वेन भागधेयेनोप धावति- स एवास्मै पर्जन्यँ वर्षय,त्यष्टौ।। 23।। ❀ जुहोति- चतस्रो वै दिश- श्चतस्रोऽवान्तरदिशा- दिग्भ्य एव वृष्टिꣳ सं प्र च्यावयति, कृष्णाजिने सँ यौति- हविरेवाक,रन्तर्वेदि सँ यौ-त्यवरुद्ध्यै, यतीना मद्यमानानाꣳ

शीर्षाणि पराऽपत-न्ते खर्जूरा अभव- न्तेषा॰ रस ऊर्ध्वोऽपत-त्तानि करीराण्यभव-'2'न्थ्सौम्यानि वै करीराणि- सौम्या खलु वा आहुति र्दिवो वृष्टि ञ्च्यावयति- यत्करीराणि भवन्ति-।। 24।।❀ सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्धे, मधुषा सँ यौ-त्यपाँ वा एष ओषधीना॰ रसो- यन्म-ध्वद्भ्य एवौषधीभ्यो वर्‌ष-त्यथो अद्भ्य एवौषधीभ्यो वृष्टि न्निनयति, मान्दा वाशा इति सँ यौति- नामधेयै रेवैना अच्छै,त्यथो यथा ब्रूया- दसावेहीत्येव मेवैना नामधेयैरा।। 25।।❀ च्यावयति, वृष्णो अश्वस्य सन्दानमसि वृष्ट्यै त्वोप नह्यामीत्याह- वृषा वा अश्वो- वृषा पर्जन्य॰- कृष्ण इव खलु वै भूत्वा वर्‌षति- रूपेणैवैन॰ समर्धयति वर्‌षस्यावरुद्ध्यै।। 26।। (अष्टौ भवन्ति नामधेयै रैकान्नत्रि॰शच्च। 9।)

❀ देवा वसव्या- देवा श्शर्मण्या- देवा स्सपीतय- इत्या बध्नाति- देवताभि रेवान्वहँ वृष्टि.मिच्छति, यदि वर्‌षे- त्तावत्येव होतव्यँ, यदि न वर्‌षे-च्छ्वो भूते हवि र्निर्वपे, दहोरात्रे वै मित्रावरुणा- वहोरात्राभ्या ङ्खलु वै पर्जन्यो वर्‌षति, नक्तँ वा हि दिवा वा वर्‌षति- मित्रावरुणावेव स्वेन भागधेयेनोप धावति- तावेवास्मै।। 27।।❀ अहोरात्राभ्यां पर्जन्यँ वर्‌षयतोऽग्नये धामच्छदे पुरोडाश मष्टाकपाल न्निर्वपे- न्मारुत॰ सप्तकपाल॰- सौर्य मेककपाल, मग्निर्वा इतो वृष्टि मुदीरयति- मरुत स्सृष्टा न्नयन्ति, यदा खलु वा असा.वादित्यो न्यङ्ङ्रश्मिभि॰ पर्यावर्ततेऽथ वर्‌षति, धामच्छदिव खलु वै भूत्वा वर्‌ष,त्येता वै देवता वृष्ट्या ईशते- ता एव स्वेन भागधेयेनोप धावति- ताः।। 28।।❀ एवास्मै पर्जन्यँ वर्‌षय- न्त्युतावर्‌षिष्यन्‌वर्‌ष,त्येव सृजा वृष्टि न्दिव आऽद्भि स्समुद्रं पृणेत्या-हेमा श्चैवामू श्चाप स्समर्धय- त्यथो आभि रेवामू रच्छै,त्यब्जा असि प्रथमजा बलमसि समुद्रियमित्याह- यथायजु रेवैत,दुन्नम्भय पृथिवीमिति वर्‌षाह्वा ञ्जुहो-त्येषा वा ओषधीनाँ वृष्टिवनि- स्तयैव वृष्टिमा च्यावयति, ये देवा दिविभागा इति कृष्णाजिन मव धूनो-तीम एवास्मै लोका॰ प्रीता अभीष्टा भवन्ति।। 29।। (अस्मै धावति ता वा एकवि॰शतिश्च। 10।)

❀ सर्वाणि छन्दा॰स्येतस्या मिष्ट्या मनूच्यानीत्याह, स्त्रिष्टुभो वा एतद्वीर्यँ- यत्ककु-दुष्णिहा- जगत्यै, यदुष्णिहककुभा वन्वाह- तेनैव सर्वाणि छन्दा॰स्यव रुन्धे, गायत्री वा एषा- यदुष्णिहा, यानि चत्वार्यध्यक्षराणि- चतुष्पाद एव ते पशवो, यथा पुरोडाशे पुरोडाशोऽ-ध्येव मेव तद्यदृच्य.ध्यक्षराणि, यज्जगत्या।। 30।।❀ परिदध्या- दन्तँ यज्ञ ङ्गमये, त्त्रिष्टुभा परि दधा-तीन्द्रियँ वै वीर्य न्त्रिष्टु-गिन्द्रिय एव वीर्ये यज्ञं प्रतिष्ठापयति- नान्त ङ्गमय, ऽत्यग्ने त्रीते वाजिना- त्री षध.स्थेति त्रिवत्या परि दधाति सरूपत्वाय, सर्वो वा एष यज्ञो- यत्त्रैधातवीय, ङ्कामायकामाय प्र युज्यते- सर्वेभ्यो हि कामेभ्यो यज्ञ॰

प्रयुज्यते, त्रैधातवीयेन यजेताभिचर'2'-न्थ्सर्वो वै।। 31।।❀ एष यज्ञो- यत्त्रैधातवीय॰, सर्वेणैवैनँ
यज्ञेनाभि चरति- स्तृणुत एवैन, मेतयैव यजेताभिचर्यमाण- स्सर्वो वा एष यज्ञो- यत्त्रैधातवीय॰-
सर्वेणैव यज्ञेन यजते- नैन मभिचरन्थ्स्तृणुत, एतयैव यजेत- सहस्रेण यक्ष्यमाण॰- प्रजात मेवैन द्दा-
त्येतयैव यजेत सहस्रेणेजानो,ऽन्तँ वा एष पशूना ङ्गच्छति-।। 32।।❀ यस्सहस्रेण यजते, प्रजापति॰
खलु वै पशू नसृजत- ता॰स्त्रैधातवीयेनैवासृजत, य एव॰ विद्वा॰स्त्रैधातवीयेन पशुकामो यजते-
यस्मादेव योने॰ प्रजापति॰ पशू नसृजत- तस्मा.देवैना.न्थ्सृजत- उपैन मुत्तर॰ सहस्र न्नमति,
देवताभ्यो वा एष आ वृश्च्यते- यो यक्ष्य इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत- सर्वो वा एष यज्ञः-।।
33।।❀ यत्त्रैधातवीय॰- सर्वेणैव यज्ञेन यजते- न देवताभ्य आ वृश्च्यते, द्वादशकपाल॰ पुरोडाशो
भवति, ते त्रय श्चतुष्कपाला स्त्रिष्षमृद्धत्वाय, त्रय॰ पुरोडाशा भवन्ति- त्रय इमे लोका- एषाँ
लोकाना.माप्त्या, उत्तरउत्तरो ज्याया.न्भव- त्येवमिव हीमे लोका- यवमयो मध्य- एतद्वा अन्तरिक्षस्य
रूप॰ समृद्ध्यै, सर्वेषा मभिगमय न्नव द्य.त्यछम्बट्कार॰, हिरण्य न्ददाति- तेज एव।। 34।।❀ अव
रुन्धे, तार्प्य न्ददाति- पशू नेवाव रुन्धे, धेनु न्ददा-त्याशिष एवाव रुन्धे, साम्नो वा एष वर्णो यद्धिरण्यँ-
यजुषा न्तार्प्य- मुक्थामदाना न्धेनु- रेतानेव सर्वान् वर्णा नव रुन्धे।। 35।। (जगत्याऽभिचर'2'न्थ्सर्वो
वै गच्छति यज्ञ स्तेज एव त्रि॰शच्च। 11।)

❀‡ त्वष्टा हतपुत्त्रो वीन्द्र॰ सोम माऽहर- त्तस्मि.न्निन्द्र उपहव मैच्छत- तन्नोपाह्वयत- पुत्त्रं
मेऽवधीरिति, स यज्ञवेशस ङ्कृत्वा प्रासहा सोम मपिब- त्तस्य यदत्यशिष्यत- तत्त्वष्टाऽऽहवनीय मुप
प्रावर्तय ᳵथ्स्वाहेन्द्रशत्रु र्वर्ध- स्वेति, स यावदूर्ध्व॰ पराविध्यति- तावति स्वयमेव व्यरमत- यदि वा
ताव.त्प्रवणम्।। 36।।❀ आसी-द्यदि वा ताव दध्यग्ने रासी,थ्स सम्भव न्नग्नीषोमा वभि समभव,थ्स
इषुमात्र.मिषुमात्रँ विष्वङ्ङवर्धत, स इमा.न्लोका नवृणो, द्यदिमा न्लोका नवृणो- त्तद्वृत्रस्य वृत्रत्व, न्तस्मा
दिन्द्रोऽबिभे- दपि त्वष्टा, तस्मै त्वष्टा वज्र मसिञ्च,त्तपो वै स वज्र आसी, त्तमुद्यन्तु न्नाशक्नो,दथ वै तर्हि
विष्णुः।। 37।।❀ अन्या देवताऽऽसी,थ्सोऽब्रवी द्विष्णवेहीद मा हरिष्यावो- येनाय मिदमिति, स विष्णु
स्त्रेधाऽऽत्मानँ वि न्यधत्त- पृथिव्या न्तृतीय- मन्तरिक्षे तृतीय- न्दिवि तृतीय, मभिपर्यावर्ता द्ध्यबिभे,
द्यत्पृथिव्या न्तृतीय मासी- त्तेनेन्द्रो वज्र मुदयच्छ, द्विष्णवनुस्थित स्सोऽब्रवी-न्मा मे प्र हा- रस्ति वा
इदम्।। 38।।❀ मयि वीर्य- न्तत्ते प्र दास्यामीति- तदस्मै प्रायच्छ- त्तत्प्रत्यगृह्णा-दधा मेति-
तद्विष्णवेऽति प्रायच्छ- त्तद्विष्णु॰ प्रत्यगृह्णा- दस्मास्विन्द्र इन्द्रिय न्दधात्विति, यदन्तरिक्षे तृतीय मासी-

त्तेनेन्द्रो वज्र मुदयच्छ- द्विष्ण्वनुस्थित स्सोऽब्रवी-न्मा मे प्र हा-रस्ति वा इदम्।। 39।। ❀ मयि वीर्य-न्तत्ते प्रदास्यामीति- तदस्मै प्रायच्छ- त्तत्प्रत्य गृह्णा- द्विर्माऽधा इति- तद्विष्णवेऽति प्रायच्छ- त्तद्विष्णुः प्रत्यगृह्णा- दस्मास्विन्द्र इन्द्रिय न्दधात्विति, यद्दिवि तृतीय मासी- त्तेनेन्द्रो वज्र मुदयच्छ- द्विष्ण्वनुस्थित स्सोऽब्रवी-न्मा मे प्र हा-यैनाहम्।। 40।। ❀ इदमस्मि- तत्ते प्र दास्यामीति, त्वी3 इत्यब्रवी- थ्सन्धान्तु सन्दधावहै- त्वामेव प्र विशानीति- यन्मां प्रविशेः- किं मा भुञ्ज्या इत्यब्रवी- त्त्वामेवेन्धीय- तव भोगाय त्वां प्रविशेय मित्यब्रवी, त्तँ वृत्रः प्राविश- दुदरँ वै वृत्रः- क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो, यः।। 41।। ❀ एवँ वेद- हन्ति क्षुधं भ्रातृव्य, न्तदस्मै प्रायच्छ- त्तत्प्रत्यगृह्णा- त्त्रिर्माऽधा इति- तद्विष्णवेऽति प्रायच्छ- त्तद्विष्णुः प्रत्यगृह्णा- दस्मास्विन्द्र इन्द्रिय न्दधात्विति, यत्त्रिः प्रायच्छ- त्त्रिः प्रत्यगृह्णा- त्तत्त्रिधातो स्त्रिधातुत्वँ, यद्विष्णु रन्वतिष्ठत- विष्णवेऽति प्रायच्छ- त्तस्मा दैन्द्रावैष्णवꣳ हवि र्भवति, यद्वा इद ङ्किञ्च- तदस्मै तत्प्रायच्छ, दृच स्सामानि यजूꣳषि सहस्रँ वा अस्मै तत्प्रायच्छ- त्तस्मा थ्सहस्रदक्षिणम्।। 42।। (प्रवणँ विष्णुर्वा इदमिद महँ यो भव त्येकविꣳशतिश्च। 12।)

❀ देवा वै राजन्या ज्जायमाना दबिभयु- स्तमन्त रेव सन्तं दाम्नाऽपौम्भ,'2'न्थ्स वा एषोऽपोब्धो जायते- यद्राजन्यो, यद्वा एषोऽनपोब्धो जायेत- वृत्रान्घ्नꣳ श्चरे,द्य.ङ्कामयेत राजन्य मनपोब्धो जायेत- वृत्रान्घ्नꣳश्चरेदिति- तस्मा एत मैन्द्राबार्हस्पत्य ञ्चरु न्निर्वपे, दैन्द्रो वै राजन्यो- ब्रह्म बृहस्पति- र्ब्रह्मणैवैन न्दाम्नोऽपोम्भना न्मुञ्चति, हिरण्मय न्दाम दक्षिणा- साक्षादेवैन न्दाम्नोऽपोम्भना न्मुञ्चति।। 43।। (एन न्द्वादश च। 13।)

**वै।का।12 याज्या: 12 (एकोनुवाक: 1)**

❀卐नवोनवो भवति जायमानोऽह्ना ङ्केतु रुषसा मेत्यग्रे। भाग न्देवेभ्यो वि दधा त्यायन्प्र चन्द्रमा स्तिरति दीर्घमायुः।।

卐 यमादित्या अꣳशु माप्याययन्ति यमक्षित मक्षितयः पिबन्ति। तेन नो राजा वरुणो बृहस्पति राप्याययन्तु भुवनस्य गोपाः।।

卐 प्राच्या न्दिशि त्वमिन्द्रासि राजोतोदीच्याँ वृत्रहन्वृत्रहाऽसि। यत्र यन्ति स्रोत्या स्तत्।। 44।। ❀ जितन्ते दक्षिणतो वृषभ एधि हव्यः।।

卐 इन्द्रो जयाति न पराजयाता अधिराजो राजसु राजयाति। विश्वा हि भूयाः पृतना अभिष्टी रुपसद्यो नमस्यो यथाऽसत्।।

卐 अस्येदेव प्र रिरिचे महित्व न्दिवः पृथिव्याः पर्यन्तरिक्षात्। स्वराडिन्द्रो दम आ विश्वगूर्त स्स्वरि रमत्रो ववक्षे रणाय।।

卐 अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानम्।। 45।। ❀ अस्य जगत स्सुवर्दृश मीशान मिन्द्र तस्थुषः।।

卐 त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वाँ वृत्रेष्विन्द्र सत्पति न्नर स्त्वाङ्काष्ठा.स्वर्वतः।।

卐 यद्याव इन्द्र ते शतꣳ शतं भूमी रुतस्स्युः। न त्वा वज्रि'2'न्थ्सहस्रꣳ सूर्या अनु न जात मष्ट रोदसी।।

卐 पिबा सोम मिन्द्र मन्दतु त्वा यन्ते सुषाव हर्यश्वाद्रिः। 46।। ❀ सोतु र्बाहुभ्याꣳ सुयतो नार्वा।।

卐 रेवतीर्न स्सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभि र्मदेम।।

卐 उदग्ने शुचय स्तव[27]❀ 卐वि ज्योति[28]❀ 卐षो.दु त्य ञ्जातवेदसꣳ[29]❀ 卐सप्त त्वा हरितो रथे वहन्ति देव सूर्य। शोचिष्केशँ विचक्षण।।

卐 चित्र न्देवाना मुदगा दनीक ञ्चक्षु र्मित्रस्य वरुणस्याग्नेः। आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगत स्तस्थुषः।। 47।। ❀ च।।

卐 विश्वे देवा ऋतावृध ऋतुभिर् हवनश्रुतः। जुषन्ताँ युज्यं पयः।।

卐 विश्वे देवा श्शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यविष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मि न्बर्हिषि मादयध्वम्।। 48।। (तदीशान मद्रि स्तस्थुष स्त्रिꣳशच्च। 14।)

(देवा मनुष्या देवासुरा अब्रुव न्देवासुरा स्तेषा ङ्गायत्री प्रजापतिस्ता यत्राग्ने गोभि श्चित्रया मारुत न्देवा वसव्या अग्ने मारुतमिति देवा वसव्या देवा श्शर्मण्या स्सर्वाणि त्वष्टा हतपुत्रो देवा वै राजन्या न्नवोनव श्चतुर्दश। 14। देवा मनुष्याः प्रजां पशू न्देवा वसव्याः परिदध्या दिद मस्म्यष्टाचत्वारिꣳशत्। 48। देवा मनुष्या मादयध्वम्।)

27

28

29

## प्रा।का।1 पौरोडाशिक ब्राह्मणम् - 3 (षडनुवाका: 6)

❀ विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवाना मासी-थ्स्वस्त्रीयोऽसुराणा, न्तस्य त्रीणि शीर्षाण्यास-'2' न्थ्सोमपान सुरापान मन्नादन, स प्रत्यक्ष न्देवेभ्यो भाग मवद- त्परोऽक्ष मसुरेभ्य, स्सर्वस्मै वै प्रत्यक्षं भागँ वदन्ति- यस्मा एव परोक्षँ वदन्ति, तस्य भाग उदित- स्तस्मा दिन्द्रोऽबिभे- दीदृङ् वै राष्ट्रँ वि पर्यावर्तयतीति, तस्य वज्र मादाय शीर्षाण्यच्छिन,.द्यथ्सोमपानम्।। 1।।❀ आसी-थ्स कपिञ्जलोऽभव, .द्यथ्सुरापान- स कलविङ्को, यदन्नादन- स तित्तिरि, स्तस्याञ्जलिना ब्रह्महत्या मुपागृह्णा, त्ता सँवथ्सर मबिभ,स्तं भूता न्यभ्यक्रोश- न्ब्रह्मह न्निति, स पृथिवी मुपासीद- दस्यै ब्रह्महत्यायै तृतीयं प्रति गृहाणेति- साऽब्रवी द्वरँ वृणै- खाता त्पराभविष्यन्ती मन्ये- ततो मा परा भूवमिति- पुरा ते।। 2।।❀ सँवथ्सरादपि रोहादित्यब्रवी- त्तस्मात्पुरा सँवथ्सरा त्पृथिव्यै खातमपि रोहति- वारेवृतः ह्यस्यै- तृतीयं ब्रह्महत्यायै प्रत्यगृह्णा-त्तथ्स्वकृत मिरिण मभव- त्तस्मा दाहिताग्नि श्श्रद्धादेव स्स्वकृत इरिणे नाव स्ये-द्ब्रह्महत्यायै ह्येष वर्ण, स्स वनस्पती नुपासीद- दस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति- तेऽब्रुवन्वरँ वृणामहै- वृक्णात्।। 3।।❀ पराभविष्यन्तो मन्यामहे- ततो मा परा भूमे- त्याव्रश्चनाद्वो भूया‍ॅस उत्तिष्ठा नित्यब्रवी- त्तस्मा दाव्रश्चना द्वृक्षाणां भूया‍ॅस उत्तिष्ठन्ति- वारेवृतः ह्येषा- न्तृतीयं ब्रह्महत्यायै प्रत्यगृह्ण-'2'न्थ्स निर्यासोऽभव- त्तस्मा न्निर्यासस्य नाऽऽश्यं- ब्रह्महत्यायै ह्येष वर्णो-ऽथो~ खलु य एव लोहितो- यो वाऽऽव्रश्चना न्निर्येषति- तस्य नाऽऽश्यम्-।। 4।।❀ काम मन्यस्य, स स्त्रीष‍ॅसाद मुपासीद- दस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति- ता अब्रुवन्वरँ वृणामहा- ऋत्विया त्प्रजाँ विन्दामहै- काममा विजनितो स्सं भवामेति- तस्मा दृत्विया थ्स्त्रियः प्रजाँ विन्दन्ते- काममा विजनितो स्सं भवन्ति- वारेवृतः ह्यासा, न्तृतीयं ब्रह्महत्यायै प्रत्यगृह्ण-'2'न्थ्सा मलवद्वासा अभव- त्तस्मा न्मलवद्वाससा न सँ वदेत-।। 5।।❀ न सहाऽऽसीत- नास्या अन्न मद्या- द्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्ते,ऽथो~ खल्वाहु- रभ्यञ्जनँ वाव स्त्रिया अन्न- मभ्यञ्जन मेव न प्रतिगृह्य-ङ्काम मन्यदिति, यां मलवद्वासस‍ॅ सम्भवन्ति- यस्ततो जायते- सोऽभिशस्तो, यामरण्ये तस्यै स्तेनो, यां पराची न्तस्यै ह्रीतमुख्यपगल्भो, या स्नाति तस्या अप्सु मारुको, या।। 6।।❀ अभ्यङ्क्ते तस्यै दुश्चर्मा, या प्रलिखते तस्यै खलति रपमारी, याऽङ्क्ते तस्यै काणो, या दतो धावते तस्यै श्यावदन्, या नखानि निकृन्तते तस्यै कुनखी, या कृणत्ति तस्यै क्लीबो, या रज्जु‍ॅ सृजति तस्या उद्बन्धुको, या पर्णेन

पिबति तस्या उन्मादुको, या खर्वेण पिबति तस्यै खर्व, स्तिस्रो रात्री र्व्रत ञ्चरे- दञ्जलिना वा पिबे-दखर्वेण वा पात्रे-ण प्रजायै गोपीथाय।। 7।। (यथ्सोमपान न्ते वृक्णा त्तस्य नाऽऽश्यँ वदेत मारुको या खर्वेण वा त्रीणि च। 1।)

‡ त्वष्टा हतपुत्रो वीन्द्रꣳ सोम माऽहर- त्तस्मि न्निन्द्र उपहव मैच्छत- तन्नोपाह्वयत- पुत्त्रं मेऽवधी रिति, स यज्ञवेशस ङ्कृत्वा प्रासहा सोम मपिब- त्तस्य यदत्यशिष्यत- तत्त्वष्टाऽऽहवनीय मुप प्रावर्तय थ्स्वाहेन्द्रशत्रु र्वर्ध-स्वेति, यदवर्तय- त्तद्वृत्रस्य वृत्रत्वँ, यदब्रवी थ्स्वाहेन्द्रशत्रु र्वर्धस्वेति- तस्मादस्य।। 8।। इन्द्र श्शत्रु रभव,थ्स सम्भव न्नग्नीषोमा वभि समभव,थ्स इषुमात्रमिषुमात्रँ विष्वङ्ङवर्धत, स इमा न्लोका नवृणो, द्यदिमा न्लोका नवृणो- त्तद्वृत्रस्य वृत्रत्व, न्तस्मा दिन्द्रोऽबिभे,थ्स प्रजापति मुपाधाव-च्छत्रुर्मेऽजनीति, तस्मै वज्रꣳ सिक्त्वा प्रायच्छ- देतेन जहीति, तेनाभ्यायत, तावब्रूता- मग्नीषोमौ मा।। 9।। प्र हा- राव मन्त स्स्व इति, मम वै युवꣳ स्थ इत्यब्रवी, न्मामभ्येत.मिति- तौ भागधेय मैच्छेता, न्ताभ्या मेत मग्नीषोमीय मेकादशकपालं पूर्णमासे प्रायच्छ, त्तावब्रूता- मभि सन्दष्टौ वै स्वो- न शक्नुव ऐतु मिति, स इन्द्र आत्मन श्शीतरूरा वजनय- त्तच्छीतरूरयो र्जन्म, य एवꣳ शीतरूरयो र्जन्म वेद- ।। 10।। नैनꣳ शीतरूरौ हत, स्ताभ्या मेन मभ्यनय- त्तस्मा ज्जञ्झभ्यमाना दग्नीषोमौ निरक्रामतां, प्राणापानौ वा एन न्तदजहितां- प्राणो वै दक्षो-ऽपानः क्रतु,स्तस्मा ज्जञ्झभ्यमानो ब्रूया न्मयि दक्षक्रतू - इति, प्राणापाना वेवाऽऽत्म न्धत्ते- सर्व मायु रेति, स देवता वृत्रा न्निरूह्य वार्त्रघ्नꣳ हविः पूर्णमासे निरवप- द्घ्नन्ति वा एनं पूर्णमास- आ।। 11।। अमावास्यायां प्याययन्ति- तस्मा द्वार्त्रघ्नी पूर्णमासेऽनूच्येते- वृधन्वती अमावास्याया, न्तथ्सꣳस्थाप्य वार्त्रघ्नꣳ हवि र्वज्र मादाय पुन रभ्यायत, ते अब्रूता न्द्यावापृथिवी- मा प्र हा- रावयो र्वै श्रित इति, ते अब्रूताँ वरँ वृणावहै- नक्षत्रविहिताऽह मसानी त्यसा वब्रवी- च्चित्रविहिताऽह मितीय, न्तस्मा न्नक्षत्रविहिताऽसौ चित्रविहितेयँ, य एव न्द्यावापृथिव्योः।। 12।। वरँ वेदैनँ वरो गच्छति, स आभ्या मेव प्रसूत- इन्द्रो वृत्र मह,न्ते देवा वृत्रꣳ हत्वाऽग्नीषोमा वब्रुवन्- हव्यन्नो वहत मिति, तावब्रूता मपतेजसौ- वै त्यौ वृत्रे वै त्ययो स्तेज इति, तेऽब्रुव न्क इद मच्छैतीति- गौ रित्यब्रुव, न्गौ र्वाव सर्वस्य मित्र मिति, साऽब्रवीत्।। 13।। वरँ वृणै मय्येव सतोभयेन भुनजाध्वा इति, तद्गौ राऽहर- त्तस्मा द्गवि सतोभयेन भुञ्जत, एतद्वा अग्ने स्तेजो यद्घृत-मेतथ्सोमस्य यत्पयो, य एव मग्नीषोमयो स्तेजो वेद- तेजस्व्येव भवति, ब्रह्मवादिनो वदन्ति- किन्देवत्यं

पौर्णमासमिति- प्राजापत्य मिति ब्रूया, त्तेनेन्द्रञ्ज्येष्ठं पुत्र न्निरवासायय दिति- तस्माज्ज्येष्ठं पुत्र न्धनेन निरवसाययन्ति।। 14।। (अस्य मा वेदाऽऽ द्यावापृथिव्यो रब्रवीदिति तस्मा च्चत्वारि च। 2।)

❀ इन्द्रँ वृत्रञ्जघ्निवाꣳसं मृधोऽभि प्रावेपन्त- स एतँ वैमृधं पूर्णमासेऽनुनिर्वाप्य मपश्य-त्त न्निरवप-त्तेन वै स मृधोऽपाहत, यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति- मृध एव तेन यजमानोऽप हत, इन्द्रो वृत्रꣳ हत्वा- देवताभि श्चेन्द्रियेण च व्यार्ध्यत- स एत माग्नेय मष्टाकपाल ममावास्याया मपश्य- दैन्द्र न्दधि,।। 15।। ❀ त न्निरवप- त्तेन वै स देवता श्चेन्द्रिय ञ्चावारुन्ध- यदाग्नेयोऽष्टाकपालोऽमावास्यायां भव-त्यैन्द्र न्दधि देवता- श्चैव तेनेन्द्रियञ्च यजमानोऽव रुन्ध, इन्द्रस्य वृत्र ञ्जघ्नुष इन्द्रियँ वीर्यं पृथिवी मनु व्यार्छ- त्तदोषधयो वीरुधोऽभव'2'-न्थ्स प्रजापति मुपाधाव- द्वृत्रं मे जघ्नुष इन्द्रियँ वीर्यम्।। 16।। ❀ पृथिवीमनु व्यार- त्तदोषधयो वीरुधोऽभूव न्निति, स प्रजापतिः पशू नब्रवी- देत.दस्मै सन्नयतेति, तत्पशव ओषधीभ्योऽध्यात्म-'2'न्थ्समनय- न्तत्प्रत्यदुहन्, यथ्समनय- न्तथ्सान्नाय्यस्य सान्नाय्यत्वँ, यत्प्रत्यदुह- न्तत्प्रतिधुषः प्रतिधुक्त्वꣳ, समनैषुः- प्रत्यधुक्ष- न्न तु मयि श्रयत इत्यब्रवी,देतदस्मै।। 17।। ❀ शृत ङ्कुरुतेत्यब्रवी- त्तदस्मै शृत मकुर्व,न्निन्द्रियँ वावास्मिन्वीर्यं न्तदश्रय- न्तच्छृतस्य शृतत्वꣳ, समनैषुः- प्रत्यधुक्ष- न्छृत मक- न्न तु मा धिनोतीत्यब्रवी,देत दस्मै दधि कुरुते त्यब्रवी- त्तदस्मै दध्यकुर्व- न्तदेन मधिनो- त्तद्दध्नो दधित्वं, ब्रह्मवादिनो वदन्ति- दध्नः पूर्वस्यावदेयम्-।। 18।। ❀ दधि हि पूर्व ङ्क्रियत इ,त्यनादृत्य त-च्छृतस्यैव पूर्वस्यावद्ये- दिन्द्रिय मेवास्मिन्वीर्यꣳ श्रित्वा दध्नोपरिष्टा द्धिनोति- यथापूर्व मुपैति, यत्पूतीकैर्वा पर्णवल्कै र्वाऽऽतञ्च्या- थ्सौम्य न्त,द्यत्क्वलै- राक्षस न्त,द्यत्तण्डुलै- र्वैश्वदेव न्त,द्यदातञ्चनेन- मानुष न्त,द्यद्दध्ना- तथ्सेन्द्र, न्दध्नाऽऽतनक्ति।। 19।। ❀ सेन्द्रत्वा,याग्निहोत्रोच्छेषण मभ्यातनक्ति यज्ञस्य सन्तत्या, इन्द्रो वृत्रꣳ हत्वा- परां परावत मगच्छ-दपाराध मिति मन्यमान,स्त न्देवताः प्रैष मैच्छ-'2'न्थ्सोऽब्रवी त्प्रजापति- र्यः प्रथमोऽनुविन्दति- तस्य प्रथमं भागधेयमिति, तं पितरोऽन्वविन्द- न्तस्मात्पितृभ्यः पूर्वेद्युः क्रियते, सोऽमावास्यां प्रत्यागच्छ, त्तन्देवा अभि समगच्छ-न्तामा वै नः।। 20।। ❀ अद्य वसु वसती,तीन्द्रो हि देवानाँ वसु-तदमावास्याया अमावास्यत्वं, ब्रह्मवादिनो वदन्ति- किन्देवत्यꣳ सान्नाय्य मिति- वैश्वदेव मिति ब्रूया-द्विश्वे हि तद्देवा भागधेय मभि समगच्छन्ते,त्यथो~ खल्वैन्द्र मित्येव ब्रूया- दिन्द्रँ वाव ते तद्भिषज्यन्तोऽभि समगच्छन्तेति।। 21।। (दधि मे जघ्नुष इन्द्रियँ वीर्य मित्यब्रवी देतदस्मा अवदेय न्तनक्ति नो द्विचत्वारिꣳशच्च। 3।)

❀ ब्रह्मवादिनो वदन्ति- स त्वै दर्शपूर्णमासौ यजेत- य एनौ सेन्द्रौ यजेतेति, वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति- तेन पूर्णमास स्सेन्द्र, ऐन्द्र न्दध्यमावास्याया- न्तेनामावास्या सेन्द्रा, य एवँ विद्वा न्दर्शपूर्णमासौ यजते- सेन्द्रा वेवैनौ यजते- श्वश्श्वोऽस्मा ईजानाय वसीयो भवति, देवा वै यद्यज्ञेऽकुर्वत- तदसुरा अकुर्वत, ते देवा एताम्।। 22।।❀ इष्टि मपश्य- न्नाग्नावैष्णव मेकादशकपालꣳ- सरस्वत्यै चरुꣳ- सरस्वते चरु, न्तां पौर्णमासꣳ सꣳस्थाप्यानु निरवप,न्ततो देवा अभव- न्पराऽसुरा, यो भ्रातृव्यवा न्थ्स्या-थ्स पौर्णमासꣳ सꣳस्थाप्यैता मिष्टि मनु निर्वपे,त्पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्या-ऽऽग्नावैष्णवेन देवताश्च यज्ञञ्च भ्रातृव्यस्य वृङ्क्ते- मिथुना न्पशू न्थ्सारस्वताभ्याँ, यावदेवास्यास्ति- तत्।। 23।।❀ सर्वँ वृङ्क्ते, पौर्णमासी मेव यजेत भ्रातृव्यवा न्नामावास्याꣳ- हत्वा भ्रातृव्य- न्नाऽऽप्याययति, साकंप्रस्थायीयेन यजेत पशुकामो, यस्मै वा अल्पेनाऽऽहरन्ति- नाऽऽत्मना तृप्यति- नान्यस्मै ददाति- यस्मै महता तृप्य- त्यात्मना ददा- त्यन्यस्मै महता पूर्णꣳ होतव्य- न्तृप्त एवैन मिन्द्रः प्रजया पशुभि स्तर्पयति, दारुपात्रेण जुहोति- न हि मृन्मय माहुति मानश, औदुम्बरम्।। 24।।❀ भव-त्यूर्वा उदुम्बर- ऊर्क्पशव- ऊर्जैवास्मा ऊर्जं पशू नव रुन्धे, नागतश्री र्महेन्द्रँ यजेत, त्रयो वै गतश्श्रिय- श्शुश्रुवा न्ग्रामणी राजन्य- स्तेषां महेन्द्रो देवता, यो वै स्वा न्देवता मतियजते- प्र स्वायै देवतायै च्यवते- न परां प्राऽऽप्नोति- पापीया न्भवति, सँवथ्सर मिन्द्रँ यजेत, सँवथ्सरꣳ हि व्रत न्नाति- स्वा।। 25।।❀ एवैन न्देवतेज्यमाना भूत्या इन्धे- वसीया न्भवति, सँवथ्सरस्य परस्ता दग्नये व्रतपतये पुरोडाश मष्टाकपाल न्निर्वपे- थ्सँवथ्सर मेवैनँ वृत्र ञ्जघ्निवाꣳस मग्नि र्व्रतपति र्व्रतमा लम्भयति- ततोऽधि कामँ यजेत।। 26।। (एता न्तदौदुम्बरꣳ स्वात्रिꣳशच्च। 4।)

❀ नासोमयाजी सन्नये, दनागतँ वा एतस्य पयो- योऽसोमयाजी, यदसोमयाजी सन्नये- त्परिमोष एव सो-ऽनृत ङ्करो-त्यथो परैव सिच्यते, सोमयाज्येव सन्नये,त्पयो वै सोमः- पय स्साान्नाय्यं- पयसैव पय आत्म.न्धत्ते, वि वा एतं प्रजया पशुभि रर्धयति- वर्धयत्यस्य भ्रातृव्यँ- यस्य हवि र्निरुप्तं पुरस्ता च्चन्द्रमाः।। 27।।❀ अभ्युदेति, त्रेधा तण्डुलान् वि भजे,द्ये मध्यमा स्स्यु- स्तानग्नये दात्रे पुरोडाश मष्टाकपाल ङ्कुर्या,द्ये स्थविष्ठा- स्तानिन्द्राय प्रदात्रे दधꣳ श्चरुँ, येऽणिष्ठा-स्तान् विष्णवे शिपिविष्टाय शृते चरु, मग्नि रेवास्मै प्रजां प्रजनयति- वृद्धा.मिन्द्रः प्र यच्छति- यज्ञो वै विष्णुः- पशव श्शिपि- र्यज्ञ एव पशुषु प्रति तिष्ठति, न द्वे।। 28।।❀ यजेत, यत्पूर्वया सम्प्रति यजे-तोत्तरया छम्बट्कुर्या,द्यदुत्तरया सम्प्रति यजेत- पूर्वया छम्बट्कुर्या, न्नेष्टि र्भवति- न यज्ञ-स्तदनु ह्रीतमुख्यपगल्भो जायत, एकामेव यजेत-

प्रगल्भोऽस्य जायते,ऽनादृत्य त-द्वे एव यजेत, यज्ञमुखमेव पूर्वयाऽऽलभते- यजत उत्तरया- देवता एव पूर्वयाऽवरुन्ध- इन्द्रियमुत्तरया- देवलोकमेव।। 29।।❀ पूर्वयाऽभिजयति- मनुष्यलोक मुत्तरया, भूयसो यज्ञक्रतू नुपै,त्येषा वै सुमना नामेष्टि- र्यमद्येजानं पश्चा.च्चन्द्रमा अभ्युदे-त्यस्मि न्नेवास्मै लोकेऽर्धुकं भवति, दाक्षायणयज्ञेन सुवर्गकामो यजेत, पूर्णमासे सन्नये-न्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायाँ यजेत, पूर्णमासे वै देवाना॰ सुत- स्तेषा मेत.मर्धमासं प्रसुत-स्तेषां मैत्रावरुणी वशाऽमावास्याया मनूबन्ध्या, यत्।। 30।।❀ पूर्वेद्यु र्यजते- वेदिमेव तत्करोति, यद्वथ्सा.नपाकरोति- सदोहविर्धाने एव सं मिनोति, यद्यजते- देवै.रेव सुत्या॰ सं पादयति, स एत.मर्धमास॰ सधमाद न्देवै स्सोमं पिबति, यन्मैत्रावरुण्याऽऽमिक्षया ऽमावास्यायाँ यजते- यैवासौ देवानाँ वशाऽनूबन्ध्या- सो एवैषैतस्य साक्षाद्वा एष देवा नभ्यारोहति, य एषाँ यज्ञम्।। 31।।❀ अभ्यारोहति- यथा खलु वै श्रेया नभ्यारूढः कामयते- तथा करोति, यद्यवविध्यति- पापीयान्भवति, यदि नावविध्यति- सदृ,ङ्ङावृत्काम एतेन यज्ञेन यजेत, क्षुरपविर्ह्येष यज्ञ- स्ताजक्पुण्यो वा भवति- प्र वा मीयते, तस्यैतद्व्रत- न्नानृतँ वदे-न्न मा॰स मश्नीया-न्न स्त्रिय मुपेया- न्नास्य पल्पूलनेन वासः पल्पूलयेयु,रेतद्धि देवा स्सर्वन्न कुर्वन्ति।। 32।। (चन्द्रमा द्वे देवलोकमेव यद्यज्ञं पल्पूलयेयु ष्षट्च। 5।)

❀ एष वै देवरथो यद्दर्शपूर्णमासौ- यो दर्शपूर्णमासा विष्ट्वा सोमेन यजते- रथस्पष्ट एवावसाने वरे देवाना मवस्य,त्येतानि वा अङ्गापरू॰षि सँवथ्सरस्य यद्दर्शपूर्णमासौ- य एवँ विद्वा.न्दर्शपूर्णमासौ यजते-ऽङ्गापरू॰ष्येव सँवथ्सरस्य प्रति दधा,त्येते वै सँवथ्सरस्य चक्षुषी यद्दर्शपूर्णमासौ- य एवँ विद्वा.न्दर्शपूर्णमासौ यजते- ताभ्यामेव सुवर्गँ लोकमनु पश्यति,।। 33।।❀ एषा वै देवानाँ विक्रान्ति र्यद्दर्शपूर्णमासौ- य एवँ विद्वा न्दर्शपूर्णमासौ यजते- देवाना.मेव विक्रान्ति मनु वि क्रमत, एष वै देवयानः पन्था यद्दर्शपूर्णमासौ- य एवँ विद्वा.न्दर्शपूर्णमासौ यजते- य एव देवयानः पन्था- स्त॰ समारोह, त्येतौ वै देवाना॰ हरी यद्दर्शपूर्णमासौ- य एवँ विद्वा न्दर्शपूर्णमासौ यजते- यावेव देवाना॰ हरी ताभ्याम्।। 34।।❀ एवैभ्यो हव्यँ वह,त्येतद्वै देवाना.मास्यँ यद्दर्शपूर्णमासौ- य एवँ विद्वा न्दर्शपूर्णमासौ यजते, साक्षादेव देवाना.मास्ये जुहो,त्येष वै हविर्धानी- यो दर्शपूर्णमासयाजी सायंप्रात रग्निहोत्र ञ्जुहोति, यजते दर्शपूर्णमासा वहरहर्- हविर्धानिना॰ सुतो, य एवँ विद्वा न्दर्शपूर्णमासौ यजते- हविर्धान्यस्मीति- सर्व मेवास्य बर्हिष्य न्दत्तं भवति, देवा वा अहः।। 35।।❀ यज्ञिय न्नाविन्द-न्ते दर्शपूर्णमासा.वपुन-न्तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ- य एवँ विद्वा

न्दर्शपूर्णमासौ यजते- पूता.वेवैनौ मेध्यौ यजते, नामावास्यायाञ्च पौर्णमास्याञ्च स्त्रिय मुपेया, द्यदुपेया-न्निरिन्द्रिय स्स्या,थ्सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आस-न्तासा ममावास्याञ्च पौर्णमासीञ्च नोपैत्-।। 36।।❀ ते एन मभि समनह्येता- न्तँ यक्ष्म आर्छ,द्राजानँ यक्ष्म आरदिति- तद्राजयक्ष्मस्य जन्म, यत्पापीया नभव- त्तत्पापयक्ष्मस्य, यज्जायाभ्या मविन्द- त्तज्जायेन्यस्य, य एवमेतेषाँ यक्ष्माणाञ्जन्म वेद- नैन मेते यक्ष्मा विन्दन्ति, स एते एव नमस्य न्नुपाधाव-त्ते अब्रूताँ वरँ वृणावहा- आव न्देवानां भागधे असाव-।। 37।।❀ आवदधि देवा इज्यान्ता इति, तस्माथ्सदृशीनाꣳ रात्रीणा ममावास्यायाञ्च पौर्णमास्याञ्च देवा इज्यन्त, एते हि देवानां भागधे- भागधा अस्मै मनुष्या भवन्ति- यँ एवँ वेद, भूतानि क्षुध.मघ्न'2'-न्थ्सद्यो मनुष्या- अर्धमासे देवा- मासि पितर- स्सँवथ्सरे वनस्पतय,स्तस्मा दहरह र्मनुष्या अशन मिच्छन्ते-ऽर्धमासे देवा इज्यन्ते- मासि पितृभ्यः क्रियते- सँवथ्सरे वनस्पतयः फल ङ्गृह्णन्ति, यँ एवँ वेद हन्ति- क्षुधं भ्रातृव्यम्।। 38।। (पश्यति ताभ्या महरै दसाव फलꣳ सप्त च। 6।)

**प्रा।का।4 हौत्र ब्राह्मणम् – 1 (पञ्चानुवाका: 5)**

❀ देवा वै नर्चि न यजुष्यश्रयन्त- ते सामन्नेवाश्रयन्त, हिङ्करोति- सामैवाकर्, हिङ्करोति- यत्रैव देवा अश्रयन्त- तत एवैनान्प्र युङ्क्ते, हिङ्करोति- वाच एवैष योगो, हिङ्करोति- प्रजा एव तद्यजमान स्सृजते, त्रिः प्रथमा मन्वाह- त्रिरुत्तमाँ- यज्ञस्यैव तद्बर्सम्।। 39।।❀ नह्यत्यप्रस्रꣳसाय, सन्तत मन्वाह- प्राणाना मन्नाद्यस्य सन्तत्या- अथो रक्षसा मपहत्यै, राथन्तरीं प्रथमा.मन्वाह- राथन्तरो वा अयँ लोक- इम.मेव लोकमभि जयति, त्रिर्वि गृह्णाति- त्रय इमे लोका- इमा.नेव लोका.नभि जयति, बार्हती मुत्तमा मन्वाह- बार्हतो वा असौ लोको-ऽमुमेव लोकमभि जयति, प्र वः।। 40।।❀ वाजा इत्यनिरुक्तां प्राजापत्या मन्वाह- यज्ञो वै प्रजापति- र्यज्ञमेव प्रजापति मारभते, प्र वो वाजा इत्यन्वा-हान्नँ वै वाजो-ऽन्नमेवाव रुन्धे, प्र वो वाजा इत्यन्वाह- तस्मात्प्राचीनꣳ रेतो धीयते,ऽग्न आ याहि वीतय इत्याह- तस्मा.त्प्रतीचीः प्रजा जायन्ते, प्र वो वाजाः।। 41।।❀ इत्यन्वाह- मासा वै वाजा- अर्धमासा अभिद्यवो- देवा हविष्मन्तो- गौ र्घृताची- यज्ञो देवान्जिगाति- यजमान स्सुम्नयु,रिदमसीद मसीत्येव यज्ञस्य प्रिय न्धामाव रुन्धे, य.ङ्कामयेत सर्वमायु रियादिति- प्र वो वाजा इति तस्यानूच्याग्न आ याहि वीतय इति सन्तत मुत्तर मर्धर्च मालभेत,।। 42।।❀ प्राणेनैवास्यापान न्दाधार- सर्वमायु रेति, यो वा अरत्निꣳ सामिधेनीनाँ वेदारत्नावेव भ्रातृव्य ङ्कुरुते,ऽर्धर्चौ सन्दधा- त्येष वा अरत्नि स्सामिधेनीनाँ- यँ एवँ

वेदारत्नावेव भ्रातृव्य ङ्करुत, ऋषेर्ऋषेर्वा एता निर्मिता- यथ्सामिधेन्य,स्ता यदसँयुक्ता स्स्युः- प्रजया पशुभि र्यजमानस्य वि तिष्ठेर,न्नर्धर्चौ सन्दधाति- सँ युनक्त्येवैना, स्ता अस्मै सँयुक्ता अवरुद्धा स्सर्वा माशिष न्दुह्रे।। 43।। (बर्सँ वो जायन्ते प्र वो वाजा लभेत दधाति स न्दश च। 7।)

❀ अयज्ञो वा एष योऽसामा,ऽग्न आ याहि वीतय इत्याह- रथन्तरस्यैष वर्ण,स्तन्त्वा समिद्भि रङ्गिर इत्याह- वामदेव्यस्यैष वर्णो, बृहदग्ने सुवीर्य मित्याह- बृहत एष वर्णो, यदेत न्तृच मन्वाह- यज्ञ.मेव तथ्सामन्वन्त ङ्करो,त्यग्नि रमुष्मिन्लोक आसी- दादित्योऽस्मि- न्ताविमौ लोकावशान्तौ।। 44।। ❀ आस्ता-न्ते देवा अब्रुव-न्नेतेमौ वि पर्यूहामे,त्यग्न आ याहि वीतय इत्यस्मि न्लोकेऽग्नि मदधु- र्बृहदग्ने सुवीर्य मि-त्यमुष्मि न्लोक आदित्य, न्ततो वा इमौ लोका वशाम्यताँ, यदेव मन्वा-हानयो र्लोकयो श्शान्त्यै, शाम्यतोऽस्मा इमौ लोकौ- य एवँ वेद, पञ्चदश सामिधेनी रन्वाह- पञ्चदश।। 45।। ❀ वा अर्धमासस्य रात्रयो-ऽर्धमासश स्सँवथ्सर आप्यते, तासा न्त्रीणि च शतानि षष्टि श्चाक्षराणि- तावती स्सँवथ्सरस्य रात्रयो-ऽक्षरश एव सँवथ्सर माप्नोति, नृमेधश्च परुच्छेपश्च ब्रह्मवाद्य मवदेता- मस्मिन्दारा वार्द्रेऽग्नि ञ्जनयाव- यतरो नौ ब्रह्मीयानिति, नृमेधोऽभ्यवद-थ्स धूम मजनय,त्परुच्छेपोऽभ्यवद.थ्सोऽग्नि मजनय,दृष इत्यब्रवीत्-।। 46।। ❀ यथ्समाव.द्विद्व कथा त्वमग्नि मजीजनो- नाह.मिति, सामिधेनीना मेवाहँ वर्णँ वेदेत्यब्रवी,द्य.द्धृतव त्पदमनूच्यते- स आसाँ वर्ण,स्तन्त्वा समिद्भि रङ्गिर इत्याह- सामिधेनीष्वेव तज्ज्योति र्जनयति, स्त्रिय स्तेन यदृच- स्स्त्रिय स्तेन यद्गायत्रिय- स्स्त्रिय स्तेन यथ्सामिधेन्यो, वृषण्वती मन्वाह-।। 47।। ❀ तेन पुंस्वती-स्तेन सेन्द्रा-स्तेन मिथुना, अग्नि र्देवाना न्दूत आसी- दुशना काव्योऽसुराणा- न्तौ प्रजापतिं प्रश्न.मैता॰- स प्रजापति रग्नि न्दूतँ वृणीमह इत्यभि पर्यावर्तत, ततो देवा अभव- न्पराऽसुरा, यस्यैवँ विदुषोऽग्नि न्दूतँ वृणीमह इत्यन्वाह- भवत्यात्मना- पराऽस्य भ्रातृव्यो भव,त्यध्वरवती मन्वाह- भ्रातृव्य मेवैतया।। 48।। ❀ ध्वरति, शोचिष्केश स्तमीमह इत्याह- पवित्र मेवैतद्यजमान मेवैतया पवयति, समिद्धो अग्न आहुतेत्याह- परिधि मेवैतं परि दधात्यस्कन्दाय, यदत ऊर्ध्व मभ्यादध्या- द्यथा बहिःपरिधि स्कन्दति-तादृगेव त,त्त्रयो वा अग्नयो- हव्यवाहनो देवाना- ङ्कव्यवाहनः पितृणा॰- सहरक्षा असुराणा,न्त एतर्ह्या श॰सन्ते- माँ वरिष्यते माम्।। 49।। ❀ इति, वृणीध्व॰ हव्यवाहन मित्याह- य एव देवाना न्तँ वृणीत, आर्षेयँ वृणीते- बन्धोरेव नै-त्यथो सन्तत्यै, परस्ता दर्वाचो वृणीते- तस्मात्परस्ता दर्वाञ्चो मनुष्या

न्पितरोऽनु प्र पिपते।। 50।। (अशान्तावाह् पञ्चदशाब्रवी दन्वाहैतया वरिष्यते मामेकान्न त्रिꣳशच्च। 8।)

☸❀ अग्ने महाꣳ असीत्याह- महा.न्ह्येष यदग्नि, ब्राह्मणेत्याह- ब्राह्मणो ह्येष, भारतेत्या-हैष हि देवेभ्यो हव्यं भरति, देवेद्ध इत्याह- देवा ह्येत मैन्धत, मन्विद्ध इत्याह- मनुर्ह्येत मुत्तरो देवेभ्य ऐन्ध,रृषिष्टुत इत्या.हरृषयो ह्येत मस्तुवन्,विप्रानुमदित इत्याह-।। 51।।❀ विप्रा ह्येते यच्छुश्रुवाꣳसः, कविशस्त इत्याह- कवयो ह्येते यच्छुश्रुवाꣳसो, ब्रह्मसꣳशित इत्याह- ब्रह्मसꣳशितो ह्येष, घृताऽऽहवन इत्याह- घृताऽऽहुतिर्ह्यस्य प्रियतमा, प्रणी र्यज्ञाना.मित्याह- प्रणी र्ह्येष यज्ञानाꣳ, रथी.रध्वराणा मित्या-हैष हि देवरथो,ऽतूर्तो होतेत्याह- न ह्येत ङ्कश्चन।। 52।।❀ तरति, तूर्णिर् हव्यवा.डित्याह- सर्वꣳ ह्येष तर,त्यास्पात्र ञ्जुहू र्देवाना.मित्याह- जुहू.र्ह्येष देवाना,ञ्चमसो देवपान इत्याह- चमसो ह्येष देवपानो,ऽराꣳ इवाग्ने नेमि.र्देवाꣳस्त्वं परिभू रसीत्याह- देवान् ह्येष परिभू, र्यद्ब्रूया.दा वह देवा न्देवयते यजमानायेति- भ्रातृव्यमस्मै।। 53।।❀ जनयेदा वह देवान् यजमानायेत्याह यजमान मेवैतेन वर्धय, त्यग्नि.मग्न आ वह- सोममा वहेत्याह- देवता एव त.द्यथापूर्व.मुप ह्वयत, आ चाग्ने देवान् वह- सुयजा च यज जातवेद इत्या-हाग्निमेव तथ्सꣳ श्यति- सोऽस्य सꣳशितो देवेभ्यो हव्यँ वह,त्यग्निर् होता।। 54।।❀ इत्या-हाग्निर्वै देवानाꣳ होता- य एव देवानाꣳ होता- तँ वृणीते, स्मो वय मित्याहाऽऽत्मानमेव सत्त्व ङ्गमयति, साधु ते यजमान देवतेत्याहाऽऽशिष मेवैतामा शास्ते, यद्ब्रूया.द्योऽग्निꣳ होतार मवृथा इ-त्यग्निनोभयतो यजमानं परि गृह्णीया- त्प्रमायुक स्स्या,द्यजमानदेवत्या वै जुहू- र्भ्रातृव्यदेवत्योपभृत,।। 55।।❀ यद्वे इव ब्रूया- द्भ्रातृव्य.मस्मै जनये,द्घृतवती मध्वर्यो स्स्रुच.मा स्यस्वेत्याह- यजमान मेवैतेन वर्धयति, देवायुवमित्याह- देवान्ह्येषाऽवति, विश्ववारा.मित्याह- विश्वꣳ ह्येषाऽव,तीडामहै देवाꣳ ईडेन्या- न्नमस्याम नमस्यान्- यजाम यज्ञियानित्याह- मनुष्या वा ईडेन्याः- पितरो नमस्या- देवा यज्ञिया- देवता एव तद्यथाभागँ यजति।। 56।। (विप्रानुमदित इत्याह चनास्मै होतोपभृद्देवता एव त्रीणि च। 9।)

☸❀ त्रीꣳस्तृचा ननु ब्रूया द्राजन्यस्य, त्रयो वा अन्ये राजन्या त्पुरुषा- ब्राह्मणो वैश्य श्शूद्र-स्तानेवास्मा अनुका न्करोति, पञ्चदशानु ब्रूया द्राजन्यस्य- पञ्चदशो वै राजन्य- स्स्व एवैनꣳ स्तोमे प्रतिष्ठापयति, त्रिष्टुभा परि दध्या- दिन्द्रियँ वै त्रिष्टु- गिन्द्रियकामः खलु वै राजन्यो यजते- त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति, यदि कामयेत।। 57।।❀ ब्रह्मवर्चस मस्त्विति- गायत्रिया परि दध्या- द्ब्रह्मवर्चसँ

वै गायत्री- ब्रह्मवर्चसमेव भवति, सप्तदशानु ब्रूयाद्वैश्यस्य- सप्तदशो वै वैश्य- स्स्व एवैनꣳ स्तोमे प्रति.ष्ठापयति, जगत्या परि दध्या- ज्जागता वै पशव॒- पशुकाम॒ खलु वै वैश्यो यजते- जगत्यैवास्मै पशून्परि गृह्णा,त्येकवि॒ꣳशति मनु ब्रूया त्प्रतिष्ठाकाम-स्यैकवि॒ꣳश स्स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै,।। 58।।❀ चतुर्वि॒ꣳशति.मनु ब्रूया.द्ब्रह्मवर्चसकामस्य- चतुर्वि॒ꣳशत्यक्षरा गायत्री- गायत्री ब्रह्मवर्चस-ङ्गायत्रियैवास्मै ब्रह्मवर्चसमव रुन्धे, त्रि॒ꣳशत मनु ब्रूया दन्नकामस्य- त्रि॒ꣳशदक्षरा विरा-डन्नँ विरा-ड्विराजैवास्मा अन्नाद्यमव रुन्धे, द्वात्रि॒ꣳशत मनु ब्रूया.त्प्रतिष्ठाकामस्य- द्वात्रि॒ꣳशदक्षराऽनुष्टु-गनुष्टु.प्छन्दसां प्रतिष्ठा प्रतिष्ठित्यै, षड्वि॒ꣳशत मनु ब्रूया त्पशुकामस्य- षड्वि॒ꣳशदक्षरा बृहती- बार्हता॒ पशवो- बृहत्यैवास्मै पशून्।। 59।।❀ अव रुन्धे, चतुश्चत्वारि॒ꣳशत मनु ब्रूया दिन्द्रियकामस्य- चतुश्चत्वारि॒ꣳशदक्षरा त्रिष्टु.गिन्द्रिय न्त्रिष्टु.प्त्रिष्टुभैवास्मा इन्द्रिय.मव रुन्धे,ऽष्टाचत्वारि॒ꣳशतमनु ब्रूया.त्पशुकाम-स्याष्टाचत्वारि॒ꣳशदक्षरा जगती- जागता॒ पशवो- जगत्यैवास्मै पशू.नव रुन्धे, सर्वाणि छन्दा॒ꣳस्यनु ब्रूया.द्बहुयाजिन- स्सर्वाणि वा एतस्य छन्दा॒ꣳस्यवरुद्धानि- यो बहुयाज्यपरिमित मनु ब्रूया-दपरिमित स्यावरुद्ध्यै।। 60।। (कामयेत प्रतिष्ठित्यै पशून्थ्सप्त चत्वारि॒ꣳशच्च। 10।)

❀ निवीतं मनुष्याणां- प्राचीनाऽऽवीतं पितृणा-मुपवीत न्देवाना,मुप व्ययते देवलक्ष्ममेव तत्कुरुते, तिष्ठन्नन्वाह- तिष्ठन्न् ह्याश्रुततरँ वदति, तिष्ठन्नन्वाह- सुवर्गस्य लोकस्याभिजित्या, आसीनो यज-त्यस्मिन्नेव लोके प्रति तिष्ठति, यत्क्रौञ्च मन्वाहाऽऽसुर न्त,द्यन्मन्द्रं मानुष न्त,द्यदन्तरा तथ्सदेव,मन्तराऽनूच्य॒ꣳ सदेवत्वाय, विद्वा॒ꣳसो वै।। 61।।❀ पुरा होतारोऽभूव- न्तस्मा.द्विधृता अध्वानोऽभूव-न्न पन्थान स्समरुक्ष,न्नन्तर्वेद्यन्य॒ पादो भवति- बहिर्वेद्यन्यो-ऽथान्वाहाध्वनाँ विधृत्यै-पथामस॒ꣳरोहा,याथो भूत ञ्चैव भविष्यच्चाव रुन्धे-ऽथो परिमित ञ्चैवापरिमित ञ्चाव रुन्धे-ऽथो ग्राम्या॒ꣳश्चैव पशू नारण्या॒ꣳश्चाव रुन्धे-ऽथो।। 62।।❀ देवलोक ञ्चैव मनुष्यलोकञ्चाभि जयति-

**प्रा।का।1 पौरोडाशिक ब्राह्मणम् – 5 (अनुवाक शेषः)**

- देवा वै सामिधेनी रनूच्य- यज्ञ न्नान्वपश्य,'2'न्थ्स प्रजापति स्तूष्णी माघार माऽघारय,त्ततो वै देवा यज्ञमन्वपश्यन्, यत्तूष्णी माघार माघारयति- यज्ञस्यानुख्यात्या, अथो सामिधेनी रेवाभ्यन.क्त्यलूक्षो भवति- य एवँ वे-दाथो तर्पयत्येवैना- स्तृप्यति प्रजया पशुभिः।। 63।।❀ य एवँ वेद, यदेकयाऽऽघारये- देकां प्रीणीया, द्यद्वाभ्या- न्द्वे प्रीणीया, द्यत्तिसृभि- रति तद्रेचये, न्मनसाऽऽघारयति- मनसा ह्यनाप्त माप्यते, तिर्यञ्च.मा घारय त्यछम्बट्कारँ, वाक्च मनश्चाऽऽर्तीयेता- मह न्देवेभ्यो हव्यँ

वहामीति- वागब्रवी- दह न्देवेभ्य इति मन,स्तौ प्रजापतिं प्रश्न.मैता९, सोऽब्रवीत्।। 64।।❀ प्रजापति- र्दूतीरेव त्वं मनसोऽसि, यद्धि मनसा ध्यायति- तद्वाचा वदतीति, तत्खलु तुभ्य न्न वाचा जुहव न्नित्यब्रवी, त्तस्मा न्मनसा प्रजापतये जुह्वति, मन इव हि प्रजापतिः- प्रजापते.राप्त्यै, परिधीन्थ्सं मार्ष्टि- पुना.त्येवैना, न्त्रिर्मध्यम- न्त्रयो वै प्राणाः- प्राणा.नेवाभि जयति, त्रिर्दक्षिणार्ध्य- न्त्रयः।। 65।।❀ इमे लोका- इमा.नेव लोका.नभि जयति, त्रिरुत्तरार्ध्य- न्त्रयो वै देवयानाः पन्थान- स्तानेवाभि जयति, त्रिरुप वाजयति- त्रयो वै देवलोका- देवलोका.नेवाभि जयति, द्वादश सं पद्यन्ते- द्वादश मासा स्सँवथ्सर- स्सँवथ्सरमेव प्रीणा-त्यथो सँवथ्सर.मेवास्मा उप दधाति- सुवर्गस्य लोकस्य समष्ट्या, आघारमा घारयति- तिर इव।। 66।।❀ वै सुवर्गो लोक- स्सुवर्ग मेवास्मै लोकं प्र रोचय,त्यृजुमा घारय-त्यृजुरिव हि प्राण, स्सन्तत.मा घारयति- प्राणाना मन्नाद्यस्य सन्तत्या- अथो रक्षसा मपहत्यै, यङ्कामयेत प्रमायुक स्स्यादिति- जिह्म न्तस्या ऽऽघारये- त्प्राणमेवास्मा ज्जिह्म न्नयति- ताजक्प्र मीयते, शिरो वाँ एतद्यज्ञस्य यदाघार- आत्मा ध्रुवा,।। 67।।❀ आघार माघार्य ध्रुवा९ समन-क्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधा,त्यग्नि र्देवाना न्दूत आसी- द्दैव्योऽसुराणा, न्तौ प्रजापतिं प्रश्नमैता९- स प्रजापति र्ब्राह्मण मब्रवी, देतद्वि ब्रूही-त्या श्रावये-तीद न्देवा श्श्रणुतेति वाव तदब्रवी,दग्नि र्देवो होतेति- य एव देवाना- न्तमवृणीत, ततो देवाः।। 68।।❀ अभव- न्पराऽसुरा, यस्यैवँ विदुषः प्रवरं प्रवृणते- भवत्यात्मना- पराऽस्य भ्रातृव्यो भवति, यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्न मेयातां- ब्राह्मणायाधि ब्रूया, द्यद्ब्राह्मणा.याध्या.हाऽऽत्मनेऽध्याह, यद्ब्राह्मणं पराऽऽहाऽऽत्मानं पराऽऽह, तस्माद्ब्राह्मणो न परोच्यः।। 69।। (वा आरण्या९ श्चाव रुन्धेऽथो पशुभि स्सोऽब्रवी द्दक्षिणार्ध्य न्त्रय इव ध्रुवा देवा श्चत्वारि९शच्च। 11।)

**वै।का।12 याज्या: 13 (एकोऽनुवाकः 1)**

❀卐आयुष्ट[30] ❀ 卐आयुर्दा अग्न[31] ❀ 卐आ प्यायस्व[32] ❀ 卐स न्ते[33]❀ 卐ऽव ते हेड[34]❀ 卐उदुत्तमं[35]❀ 卐प्रणो दे[36]❀ 卐व्यानो दिवो[37]❀ 卐ऽग्नाविष्णू[38]❀ 卐अग्नाविष्णू[39] ❀ 卐इमं मे वरुण[40]❀ 卐तत्त्वा या[41]❀ 卐म्युदु त्य[42]❀ 卐श्चित्रम्[43]❀।।

30

31

32

33

34

卐 अपा न्नपादा ह्यस्था दुपस्थ ञ्जिह्मानां मूर्ध्वो विद्युतँ वसानः। तस्य ज्येष्ठं महिमानँ वहन्तीर् हिरण्यवर्णा॰ परि यन्ति यह्वीः।।

卐 सम्।। 70।।❀ अन्या यन्त्युप यन्त्यन्या स्समान मूर्वं न्नद्य॰ पृणन्ति। तमू शुचि॰ शुचयो दीदिवा॰स मपा न्नपातं परि तस्थु रापः।।

卐 तमस्मेरा युवतयो युवानं मर्मृज्यमाना॰ परि यन्त्यापः। स शुक्रेण शिक्वना रेवदग्नि र्दीदायानिध्मो घृतनिर्णिगप्सु।।

卐 इन्द्रावरुणयो रह॰ सम्राजो रव आ वृणे। ता नो मृडात ईदृशे।।

卐 इन्द्रावरुणा युव मध्वराय नः।। 71।।❀ विशे जनाय महि शर्म यच्छतम्। दीर्घप्रयज्यु मति यो वनुष्यति वय ञ्जयेम पृतनासु दूढ्यः।।

卐 आ नो मित्रावरुणा[44]❀ 卐 प्र बाहवा[45]❀।

卐 त्व न्नो अग्ने वरुणस्य विद्वा न्देवस्य हेडोऽव यासिसीष्ठाः। यजिष्ठो वह्नितम श्शोशुचानो विश्वा द्वेषा॰सि प्र मुमुग्ध्यस्मत्।।

卐 स त्व न्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अव यक्ष्व नो वरुणम्।। 72।।❀ रराणो वीहि मृडीक॰ सुहवो न एधि।।

卐 प्रप्राय मग्नि र्भरतस्य श्रृण्वे वि यत्सूर्यो न रोचते बृहद्भाः। अभि य॰ पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथि श्शिवो नः।।

卐 प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु। धन्वन्निव प्रपा~ असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन्।। 73।।

❀卐 वि पाजसा[46]❀ 卐 वि ज्योतिषा[47]❀।

---

35

36

37

38

39

40

41

42

43

44

45

卐 स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः। उरुक्षयेषु दीद्यत्।।
卐 तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्च मविद्वाꣳसो विदुष्टरꣳ सपेम। स यक्षद्विश्वा वयुनानि विद्वा न्प्र हव्यमग्नि रमृतेषु वोचत्।।
卐 अꣳहोमुचे[48]❁ 卐विवेष यन्मा[49]❁ 卐वि न इ[50]❁ 卐न्द्रेन्द्र क्षत्र[51]❁ 卐मिन्द्रियाणि शतक्रतो[52]❁ 卐ऽनु ते दायि[53]❁।। 74।। (यद्वी स्समध्वराय नो वरुणꣳ राजꣳ श्चतुश्चत्वारिꣳशच्च। 12।)
(विश्वरूप स्त्वष्टेन्द्रँ वृत्रं ब्रह्मवादिन स्स त्वै नासोमयाज्येष वै देवरथो देवा वै नर्चि नायज्ञोऽग्ने महान्त्री न्निवीत मायुष्टे द्वादश। 12। विश्वरूपो नैनꣳ शीतरूरा वद्य वसु पूर्वेद्यु र्वाजा इत्यग्ने महा न्निवीत मन्या यन्ति चतुस्सप्ततिः। 74। विश्वरूपोऽनु ते दायि।)

## ≤0≥ ≤0≥द्वितीयकाण्डे षष्ठः प्रपाठकः

### प्रा।का।1 पौरोडाशिक ब्राह्मणम् - 4 (षडनुवाकाः 6)

❀ समिधो यजति- वसन्त मेवर्तूना मव रुन्धे, तनूनपातँ यजति- ग्रीष्म.मेवाव रुन्ध, इडो यजति- वर्षा एवाव रुन्धे, बर्हि र्यजति- शरद मेवाव रुन्धे, स्वाहाकारँ यजति- हेमन्त मेवाव रुन्धे- तस्माथ्स्वाहाकृता हेम न्पशवोऽव सीदन्ति, समिधो यज- त्युषस एव देवताना मव रुन्धे, तनूनपातँ यजति- यज्ञ मेवाव रुन्धे,।। 1।। ❀ इडो यजति- पशू नेवाव रुन्धे, बर्हि र्यजति- प्रजा मेवाव रुन्धे, समानयत उपभृत- स्तेजो वा आज्यं- प्रजा बर्हिः- प्रजास्वेव तेजो दधाति, स्वाहाकारँ यजति- वाच मेवाव रुन्धे, दश सं पद्यन्ते- दशाक्षरा विरा-डन्नँ विरा- ड्विराजैवान्नाद्य मव रुन्धे, समिधो यज- त्यस्मिन्नेव लोके प्रति तिष्ठति, तनूनपातँ यजति-।। 2।। ❀ यज्ञ एवान्तरिक्षे प्रति तिष्ठ,तीडो यजति- पशुष्वेव प्रति तिष्ठति, बर्हि र्यजति- य एव देवयानाः पन्थान- स्तेष्वेव प्रति तिष्ठति, स्वाहाकारँ यजति- सुवर्ग एव लोके प्रति तिष्ठ,त्येतावन्तो वै देवलोका- स्तेष्वेव यथापूर्वं प्रति तिष्ठति, देवासुरा एषु लोकेष्वस्पर्धन्त- ते देवाः प्रयाजै रेभ्यो लोकेभ्योऽसुरा न्प्राणुदन्त- तत्प्रयाजानाम्।। 3।। ❀ प्रयाजत्वँ,

46
47
48
49
50
51
52
53

यस्यैवँ विदुषः प्रयाजा इज्यन्ते- प्रैभ्यो लोकेभ्यो भ्रातृव्या न्नुदते,ऽभिक्राम न्जुहो त्यभिजित्यै, यो वै प्रयाजानां मिथुनँ वेद- प्र प्रजया पशुभि र्मिथुनै र्जायते, समिधो बर्ही रिव यजति- तनूनपात मेकमिव मिथुन- न्तदिडो बर्हीरिव यजति- बर्हि रेकमिव मिथुन, न्तदेतद्वै प्रयाजानां मिथुनँ- य एवँ वेद- प्र।। 4।। ❀ प्रजया पशुभि र्मिथुनै र्जायते, देवानाँ वा अनिष्टा देवता आस- न्नथासुरा यज्ञ मजिघाꣳस,न्ते देवा गायत्रीं व्यौह- न्पञ्चाक्षराणि प्राचीनानि- त्रीणि प्रतीचीनानि- ततो वर्म यज्ञायाभव- द्वर्म यजमानाय, यत्प्रयाजानूयाजा इज्यन्ते- वर्मैव तद्यज्ञाय क्रियते- वर्म यजमानाय भ्रातृव्याभिभूत्यै, तस्माद्वरूथं पुरस्ताद्वर्षीयः- पश्चाद्ध्रसीयो, देवा वै पुरा रक्षोभ्यः।। 5।। ❀ इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थ्याप्य मपश्य,न्तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन्, वि वा एतद्यज्ञ ञ्छिन्दन्ति- यथ्स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति, प्रयाजा निष्ट्वा हवीꣳष्यभि घारयति- यज्ञस्य सन्तत्या- अथो हवि रेवाक- रथो यथापूर्व मुपैति, पिता वै प्रयाजाः- प्रजाऽनूयाजा- यत्प्रयाजा निष्ट्वा हवीꣳष्यभिघारयति- पितैव तत्पुत्रेण साधारणम्।। 6।। ❀ कुरुते, तस्मादाहु- र्यश्चैवँ वेद- यश्च न, कथा पुत्रस्य केवल- ङ्कथा साधारणं पितु रि-त्यस्कन्न मेव त,द्यत्प्रयाजेष्विष्टेषु स्कन्दति- गायत्र्येव तेन गर्भ न्धत्ते- सा प्रजां पशून् यजमानाय प्र जनयति।। 7।। (यजति यज्ञमेवाव रुन्धे तनूनपातँ यजति प्रयाजाना मेवँ वेद प्र रक्षोभ्य स्साधारणं पञ्चत्रिꣳशच्च। 1।)

❀ चक्षुषी वा एते यज्ञस्य- यदाज्यभागौ, यदाज्यभागौ यजति- चक्षुषी एव तद्यज्ञस्य प्रति दधाति, पूर्वार्धे जुहोति- तस्मा त्पूर्वार्धे चक्षुषी, प्रबाहु.ग्जुहोति- तस्मात्प्रबाहु.क्चक्षुषी, देवलोकँ वा अग्निना यजमानोऽनु पश्यति- पितृलोकꣳ सोमे,नोत्तरार्धेऽग्नये जुहोति- दक्षिणार्धे सोमा-यैव मिव हीमौ लोका.वनयो र्लोकयो रनुख्यात्यै, राजानौ वा एतौ देवतानाम्-।। 8।। ❀ यदग्नीषोमा,वन्तरा देवता इज्येते- देवतानाँ विधृत्यै- तस्माद्राज्ञा मनुष्या विधृता, ब्रह्मवादिनो वदन्ति- कि न्तद्यज्ञे यजमानः कुरुते- येनान्यतोदतश्च पशू न्दाधा-रोभयतोदत श्चे,त्यृच मनूच्याज्यभागस्य जुषाणेन यजति- तेनान्यतोदतो दाधा-रर्च मनूच्य हविष ऋचा यजति- तेनोभयतोदतो दाधार, मूर्धन्वती पुरोऽनुवाक्या भवति- मूर्धान मेवैनꣳ समानाना ङ्करोति,।। 9।। ❀ नियुत्वत्या यजति- भ्रातृव्यस्यैव पशून्नि युवते, केशिनꣳ ह दार्भ्य.ङ्केशी सात्यकामि रुवाच, सप्तपदा.न्ते शक्करीꣳ श्वो यज्ञे प्रयोक्तासे- यस्यै वीर्येण प्र जाता न्भ्रातृव्या न्नुदते- प्रति जनिष्यमाणान्- यस्यै वीर्येणोभयो र्लोकयो र्ज्योति र्धत्ते- यस्यै वीर्येण पूर्वार्धेनानड्वा न्भुनक्ति- जघनार्धेन धेनुरिति, पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति- जातानेव भ्रातृव्या

न्प्रणुदत, उपरिष्टाल्लक्ष्मा।। 10।।❀ याज्या- जनिष्यमाणानेव प्रति नुदते, पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भव- त्यस्मिन्नेव लोके ज्योति र्धत्त, उपरिष्टाल्लक्ष्मा याज्या-ऽमुष्मिन्नेव लोके ज्योति र्धत्ते, ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो- य एवँ वेद, पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति- तस्मा त्पूर्वार्धेनानड्वा न्भुन,क्त्युपरिष्टाल्लक्ष्मा याज्या- तस्मा ज्जघनार्धेन धेनु, र्य एवँ वेद- भुङ्क्त एन मेतौ, वज्र आज्यँ- वज्र आज्यभागौ-।। 11।।❀ वज्रो वषट्कार- स्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्रहर त्यछम्बट्कार, मपगूर्य वषट्करोति स्तृत्यै, गायत्री पुरोऽनुवाक्या भवति- त्रिष्टुग्याज्या, ब्रह्मन्नेव क्षत्र मन्वारम्भयति- तस्माद्ब्राह्मणो मुख्यो, मुख्यो भवति- य एवँ वेद, प्रैवैनं पुरोऽनुवाक्यया ऽऽह- प्रणयति याज्यया- गमयति वषट्कारे,णैवैनं पुरोऽनुवाक्यया दत्ते- प्र यच्छति याज्यया- प्रति।। 12।।❀ वषट्कारेण स्थापयति, त्रिपदा पुरोऽनुवाक्या भवति- त्रय इमे लोका- एष्वेव लोकेषु प्रति तिष्ठति, चतुष्पदा याज्या- चतुष्पद एव पशूनव रुन्धे, द्व्यक्षरो वषट्कारो- द्विपा द्यजमानः- पशुष्वेवोपरिष्टा त्प्रति तिष्ठति, गायत्री पुरोऽनुवाक्या भवति- त्रिष्टुग्या.ज्यैषा वै सप्तपदा शक्करी, यद्वा एतया देवा अशिक्ष- न्तदशक्नुवन्, य एवँ वेद- शक्नोत्येव- यच्छिक्षति।। 13।। (देवताना ङ्करो त्युपरिष्टाल्लक्ष्मा ऽऽज्यभागौ प्रति शक्नोत्येव द्वे च। 2।)

❀ प्रजापति र्देवेभ्यो यज्ञा न्व्यादिश-थ्स आत्मन्नाज्य मधत्त, तन्देवा अब्रुव- न्नेष वाव यज्ञो यदाज्य- मप्येव नोऽत्रास्त्विति, सोब्रवी-द्यजान् व आज्यभागा- वुप स्तृणा- नभि घारयानिति, तस्मा द्यजन्त्याज्यभागा- वुप स्तृण-न्त्यभि घारयन्ति, ब्रह्मवादिनो वदन्ति- कस्माथ्सत्या- द्यातयामा न्यन्यानि हवीꣳ-ष्ययातयाम माज्यमिति, प्राजापत्यम्।। 14।।❀ इति ब्रूया- दयातयामा हि देवानां प्रजापति रिति, छन्दाꣳसि देवेभ्योऽपाक्राम- न्न वोऽभागानि हव्यँ वक्ष्याम इति, तेभ्य एत च्चतुरवत्त मधारय- न्पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय, यच्चतुरवत्त ञ्जुहोति- छन्दाꣳस्येव तत्प्रीणाति- तान्यस्य प्रीतानि देवेभ्यो हव्यँ वह,न्त्यङ्गिरसो वा इत उत्तमा स्सुवर्गँ लोक माय- न्तद्दषयो यज्ञवास्त्वभ्यवाय- न्ते।। 15।।❀ अपश्य न्पुरोडाश ङ्कूर्मं भूतꣳ सर्पन्त, न्तमब्रुव- न्निन्द्राय ध्रियस्व- बृहस्पतये ध्रियस्व- विश्वेभ्यो देवेभ्यो ध्रियस्वेति- स नाध्रियत, तमब्रुव- न्नग्नये ध्रियस्वेति- सोग्नयेऽध्रियत, यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्या ञ्चाच्युतो भवति- सुवर्गस्य लोकस्याभिजित्यै, तमब्रुव- न्कथाऽहास्था इ-त्यनुपाक्तोऽभूव मित्यब्रवी,द्यथाऽक्षोऽनुपाक्तः।। 16।।❀ अवाच्छं -त्येव मवार मि,त्युपरिष्टा दभ्यज्याधस्ता दुपानक्ति- सुवर्गस्य लोकस्य समष्ट्यै,

सर्वाणि कपाला न्यभि प्रथयति, तावतः पुरोडाशा नमुष्मि न्लोकेऽभि जयति, यो विदग्ध- स्स नैर्ऋतो, योऽश्रृत- स्स रौद्रो, यश्शृत- स्स सदेव,स्तस्मा दविदहता श्रृतङ्कृत्य स्सदेवत्वाय, भस्मनाऽभि वासयति- तस्मान्मा॰सेनास्थि छन्नँ, वेदेनाभि वासयति- तस्मात्।। 17।।❀ केशै श्शिर श्छन्नं, प्रच्युतँ वा एत दस्मा ल्लोका- दगत न्देवलोकँ- यच्छृत॰ हवि-रनभिघारित, मभिघार्योद्वासयति- देवत्रैवैन द्गमयति, यद्येक ङ्कपाल न्नश्ये- देको मास स्सँवथ्सर स्यानवेत स्स्या-दथ यजमानः प्र मीयेत, यद्वे नश्येता- न्द्वौ मासौ सँवथ्सरस्यानवेतौ स्याता- मथ यजमानः प्र मीयेत, सङ्ख्यायोद्वासयति- यजमानस्य।। 18।।❀ गोपीथाय, यदि नश्ये- दाश्विन न्द्विकपाल न्निर्वपे- द्यावापृथिव्य मेककपाल,मश्विनौ वै देवानां भिषजौ- ताभ्या मेवास्मै भेषज ङ्करोति, द्यावापृथिव्य एककपालो भव- त्यनयो र्वा एत न्नश्यति, यन्नश्य-त्यनयो रेवैन द्विन्दति प्रतिष्ठित्यै।। 19।। (प्राजापत्य न्तेऽऽक्षोऽनुपाक्तो वेदेनाभि वासयति तस्मा द्यजमानस्य द्वात्रि॰शच्च। 3।)

❀ देवस्य त्वा सवितुः प्रसव इति स्फ्य मा दत्ते प्रसूत्या, अश्विनो र्बाहुभ्या मित्याहाश्विनौ हि देवाना मध्वर्यू आस्तां, पूष्णो हस्ताभ्या मित्याह यत्यै, शतभृष्टिरसि वानस्पत्यो द्विषतो वध- इत्याह, वज्र मेव तथ्स॰श्यति, भ्रातृव्याय प्रहरिष्य'2'न्थ्स्तम्बयजुर् हर, त्येतावती वै पृथिवी- यावती वेदि,स्तस्या एतावत एव भ्रातृव्य न्निर्भजति,।। 20।।❀ तस्मा न्नाभाग न्निर्भजन्ति, त्रिर्हरति- त्रय इमे लोका- एभ्य एवैनँ लोकेभ्यो नि र्भजति, तूष्णी ञ्चतुर्थ॰ हर- त्यपरिमिता देवैन न्निर्भज,त्युद्धन्ति यदेवास्या अमेध्य- न्तदप ह,न्त्युद्धन्ति- तस्मादोषधयः परा भवन्ति, मूल.ञ्छिनत्ति- भ्रातृव्यस्यैव मूल.ञ्छिनत्ति, पितृदेवत्याऽतिखा,तेयती ङ्खनति- प्रजापतिना।। 21।।❀ यज्ञमुखेन संमिता,मा प्रतिष्ठायै खनति- यजमानमेव प्रतिष्ठा ङ्गमयति, दक्षिणतो वर्षीयसी ङ्करोति- देवयजनस्यैव रूप मकः, पुरीषवती ङ्करोति- प्रजा वै पशवः पुरीषं- प्रजयैवैनं पशुभिः पुरीषवन्त ङ्करो,त्युत्तरं परिग्राहं परि गृह्णा- त्येतावती वै पृथिवी- यावती वेदि- स्तस्या एतावत एव भ्रातृव्य न्निर्भज्या-ऽऽत्मन उत्तरं परिग्राहं परि गृह्णाति, क्रूर मिव वै।। 22।।❀ एत त्करोति- यद्वेदि ङ्करोति, धा असि स्वधा~ असीति योयुप्यते शान्त्यै, प्रोक्षणी रा सादय- त्यापो वै रक्षोघ्नी- रक्षसा मपहत्यै, स्फ्यस्य वर्त्म न्थ्सादयति- यज्ञस्य सन्तत्यै, यन्द्विष्या- त्तन्ध्याये- च्छुचैवैन मर्पयति।। 23।। (भजति प्रजापतिनेव वै त्रयस्त्रि॰शच्च। 4।)

❀ ब्रह्मवादिनो वद-न्त्यद्भिर् हवी॰षि प्रौक्षीः- केनाप इति, ब्रह्मणेति ब्रूया,दद्भि र्ह्येव हवी॰षि प्रोक्षति- ब्रह्मणाऽप, इध्माबर्हिः प्रोक्षति- मेध्य मेवैन.त्करोति, वेदिं प्रोक्ष,त्यृक्षा वा

एषाऽलोमकाऽमेध्या यद्वेदि- र्मेध्या मेवैना ङ्करोति, दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति- बर्हि रासाद्य प्र।। 24।।❀ उक्ष- त्येभ्य एवैन ल्लोकेभ्यः प्रोक्षति, क्रूरमिव वा एतत्करोति यत्खन,त्यपो नि नयति शान्त्यै, पुरस्ता त्प्रस्तर ङ्गृह्णाति- मुख्य मेवैन ङ्करो,तीयन्त ङ्गृह्णाति- प्रजापतिना यज्ञमुखेन संमितं, बर्हि स्स्तृणाति- प्रजा वै बर्हिः- पृथिवी वेदिः- प्रजा एव पृथिव्यां प्रतिष्ठापय,त्यनतिद्दश्ञ्ज स्तृणाति- प्रजयैवैनं पशुभि रनतिद्दश्ञ्ज.ङ्करोति,।। 25।।❀ उत्तरं बर्हिषः प्रस्तर॰ सादयति- प्रजा वै बर्हि- र्यजमानः प्रस्तरो- यजमान मेवायजमाना दुत्तरङ्करोति- तस्मा द्यजमानोऽयजमाना दुत्तरो,ऽन्त र्दधाति व्यावृत्या, अनक्ति हविष्कृत मेवैन॰ सुवर्गँ लोक ङ्गमयति, त्रेधाऽनक्ति- त्रय इमे लोका- एभ्य एवैनँ लोकेभ्योऽनक्ति, न प्रति शृणाति- यत्प्रतिशृणीया- दनूर्ध्वंभावुकँ यजमानस्य स्या,दुपरीव प्र हरति-।। 26।।❀ उपरीव हि सुवर्गो लोको नि यच्छति- वृष्टि मेवास्मै नि यच्छति, नात्यग्रं प्र हरे- द्यदत्यग्रं प्रहरे- दत्यासारि.ण्यध्वर्यो र्नाशुका स्या,न्न पुरस्ता त्प्रत्यस्ये-द्य.त्पुरस्ता त्प्रत्यस्ये- थ्सुवर्गा ल्लोका द्यजमानं प्रति नुदे, त्प्राञ्चं प्र हरति- यजमान मेव सुवर्गँ लोक ङ्गमयति, न विष्वञ्चँ वि युया- द्यद्विष्वञ्चँ वियुयात्-।। 27।।❀ स्त्र्यस्य जाये,तोर्ध्व मुद्यौ- त्यूर्ध्व मिव हि पु॰सः- पुमा नेवास्य जायते, यथ्स्फ्येन वोपवेषेण वा योयुप्येत- स्तृति रेवास्य सा, हस्तेन योयुप्यते- यजमानस्य गोपीथाय, ब्रह्मवादिनो वदन्ति- किँ यज्ञस्य यजमान इति- प्रस्तर इति, तस्य क्व सुवर्गो लोक इ-त्याहवनीय इति ब्रूया,द्यत्प्रस्तर माहवनीये प्रहरति- यजमानमेव।। 28।।❀ सुवर्गँ लोक ङ्गमयति, वि वा एत.द्यजमानो लिशते- यत्प्रस्तरँ योयुप्यन्ते, बर्हि रनु प्र हरति- शान्त्या, अनारम्भण इव वा एतर्ह्यध्वर्यु- स्स ईश्वरो वेपनो भवितो, ध्रुवाऽसी.तीमा मभि मृश.तीयँ वै ध्रुवाऽस्यामेव प्रति तिष्ठति- न वेपनो भव, ॠत्यगा3 नग्नी - दित्याह, यद्ब्रूया दग न्नग्नि रि-त्यग्ना वग्नि.ङ्गमये- न्निर्यजमान॰ सुवर्गा ल्लोका द्भजे, ॠदग- न्नित्येव ब्रूया- द्यजमान मेव सुवर्गँ लोक ङ्गमयति।। 29।। (आसाद्य प्रानतिद्दश्ञ्ज ङ्करोति हरति वियुया द्यजमान मेवाग्नि रिति सप्तदश च। 5।)

❀ अग्ने स्त्रयो ज्याया॰सो भ्रातर आस-न्ते देवेभ्यो हव्यँ वहन्तः प्रामीयन्त, सोऽग्नि रबिभे- दित्थँ वाव स्य आर्ति मारिष्यतीति, स निलायत- सोऽपः प्राविश,त्त न्देवताः प्रैष मैच्छ- न्तं मथ्स्यः प्राब्रवी, त्तमशप- द्धियाधिया त्वा वध्यासु- र्यो मा प्रावोच इति, तस्मा न्मथ्स्य न्धियाधिया घ्नन्ति, शप्तः।। 30।।❀ हि तमन्वविन्द, न्तमब्रुव- न्नुप न आ वर्तस्व- हव्यन्नो वहेति, सोऽब्रवी-द्वरँ वृणै- यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दा- त्तन्मे भ्रातृणां भागधेय मसदिति, तस्मा द्यद्गृहीतस्याहुतस्य

बहिः॒परि॑धि स्कन्द॑ति, तेषा॒ न्तद्भा॒ग॒धेय॒- न्तानेव॑ तेन॑ प्रीणाति, परि॒धी न्परि॑ द॒धाति॒- रक्ष॑सा॒ मप॑हत्यै॒, स॒ꣳस्पर्॑शयति-।। 31।।❀ रक्ष॑सा॒ मन॑न्ववचाराय, न पु॒रस्ता॒ त्परि॑ द॒धा- त्यादि॒त्यो ह्ये॑वोद्य न्पु॒रस्ता॒ द्रक्षा॒ꣳस्यप॒ह,न्त्यू॒र्ध्वे स॒मिधा॒ वा द॑धा- त्युप॒रिष्टा॑देव॒ रक्षा॒ꣳस्यप॑ हन्ति॒, यजु॑षा॒ऽन्या- न्तू॒ष्णी मन्यां॑ मिथु॒न॒त्वाय॒, द्वे आ द॑धाति- द्वि॒पाद्यज॑मानः॒ प्रति॑ष्ठित्यै, ब्रह्मवा॒दिनो॑ वदन्ति॒- स त्वै॑ यजे॒त- यो य॒ज्ञस्या॒ऽऽर्त्यां॑ वसी॑या॒ न्थ्स्यादि॒ति॒, ꖸभूप॑तये॒ स्वाहा॒ ꖸभुव॑नपतये॒ स्वाहा॑ ꖸभू॒ताना॑म्।। 32।।❀ पत॑ये॒ स्वाहे॒-ति॒ स्क॒न्न मनु॑ मन्त्रयेत, य॒ज्ञस्यै॒व त॒दार्त्यां॑ यज॑मानो॒ वसी॑या॒ न्भव॑ति॒- भूय॑सीर्॒हि दे॒वताः॒ प्रीणा॑ति, जा॒मि वा॑ ए॒त द्य॒ज्ञस्य॑ क्रियते॒- यद॒न्वञ्चौ॑ पु॒रोडा॒शा,वु॑पा॒ꣳशुया॒ज मन्त॒रा यज॑ त्यजा॑मित्वा॒.याथो॑ मिथु॒न॒त्वा,या॒ग्नि र॒मुष्मि॒ न्लो॒क आसी॑- द्य॒मो॑ऽस्मि॒,न्ते दे॒वा॑ अ॑ब्रुव- न्ने॒तेमौ॒ वि पर्यू॑हा॒मे- त्यन्नाद्ये॑न दे॒वा॑ अ॒ग्निम्।। 33।।❀ उपाम॑न्त्रयन्त- रा॒ज्येन॑ पि॒तरो॑ य॒म, न्तस्मा॑ द॒ग्नि र्दे॒वाना॑ मन्ना॒दो॒- य॒मः॒ पि॑तृ॒णा॒ꣳ राजा॒, य ए॒वं वेद॑- प्र रा॒ज्य म॒न्नाद्य॑ माप्नोति, तस्मा॑ ए॒तद्भा॒ग॒धेयं॑ प्राय॑च्छन्- यद॒ग्नये॑ स्विष्ट॒कृते॑ऽव॒द्यन्ति॒, यद॒ग्नये॑ स्विष्ट॒कृते॑ऽव॒द्यति॒- भा॒ग॒धेये॑नै॒व त॒द्रु॒द्रꣳ सम॑र्धयति, स॒कृ॒थ्सकृ॑द॒व द्य॑ति- स॒कृ॑दिव॒ हि रु॒द्र, उ॑त्तरा॒र्धा द॒व द्य॒-त्येषा वै रु॒द्रस्य॑।। 34।।❀ दि-ख्स्वाया॑ मे॒व दि॒शि रु॒द्र न्नि॑रव॒दय॑ते, द्वि॒रभि घा॑रयति- चतुरवत्तस्या॒ऽऽप्त्यै, प॒शवो॒ वै पूर्वा॒ आहु॑तय- ए॒ष रु॒द्रो य॒द॒ग्नि, र्यत्पूर्वा॒ आहु॑ती र॒भि जु॒हु॒या- द्रु॒द्राय॑ प॒शू न॑पि द॒ध्या- द॒प॒शु र्यज॑मान॒.स्स्या,द॑ति॒हाय॒ पूर्वा॒ आहु॑ती र्जु॒होति- प॒शू॒ना.ङ्गोपी॑थाय।। 35।। (शप्तस्स्पर्॒शयति भू॒ताना॑मग्नि॒ꣳ रु॒द्रस्य॑ स॒प्तत्रि॑ꣳशच्च। 6।)

**प्रा।का।4 हौत्र ब्राह्मणम् – 4 (चत्वारो॑ऽनुवाकाः 4)**

❀ मनुः॒ पृथि॒व्या य॒ज्ञिय॑ मैच्छ-थ्स घृ॒त न्निषि॑क्त मविन्द॒-थ्सो॑ऽब्रवी॒ त्को॑ऽस्येश्व॒रो य॒ज्ञे॑ऽपि क॒र्तो रि॑ति॒, ताव॑ब्रूतां मि॒त्रावरु॑णौ- गोरे॒वा॒ऽऽव मी॑श्व॒रौ क॒र्तो॑स्स्व इति॑, तौ ततो॒ गाꣳ समै॑रयता॒ꣳ, सा यत्र॑यत्र न्य॒क्राम॒-त्ततो॑ घृ॒त म॑पीड्यत, तस्मा॑द्घृ॒तप॑द्युच्यते॒- तद॑स्यै॒ ज॒,न्मोप॑हूत॒ꣳ रथ॑न्तर॒ꣳ स॒ह पृ॑थि॒व्येत्या॑ह-।। 36।।❀ इ॒यँ वै र॑थन्तर- मि॒मा मे॒व स॒हान्नाद्ये॑नोप॑ ह्वयत, उप॑हू॒तँ वा॑मदे॒व्यꣳ स॒हान्तरि॑क्षे॒णेत्या॑ह- प॒शवो॒ वै वा॑मदे॒व्यं- प॒शूने॒व स॒हान्तरि॑क्षे॒णोप॑ ह्वयत, उप॑हूतं बृ॒हथ्सह दि॒वेत्या॑-हैरं वै बृ॒ह-दि॒रा मे॒व स॒ह दि॒वोप॑ ह्वयत, उप॑हूता॒ स्सप्त होत्रा॒ इत्या॑ह- होत्रा॑ ए॒वोप॑ ह्वयत, उप॑हूता धे॒नुः।। 37।।❀ स॒हर्॑षभेत्या॑ह- मिथु॒न मे॒वोप॑ ह्वयत, उप॑हूतो भ॒क्ष स्सखेत्या॑ह- सो॒मपी॒थ मे॒वोप॑ ह्वयत, उप॑हूताँ‘4’ हो इत्या॑हा॒-ऽऽत्मान मे॒वोप॑ ह्वयत- आ॒त्मा ह्यु॑पहू॒ताना॒ँ वसि॑ष्ठ, इडा॒ मुप॑ ह्वयते- प॒शवो॒ वा इडा॑- प॒शूने॒वोप॑ ह्वयते, चतु॒ रुप॑ ह्वयते॒- चतु॑ष्पादो॒ हि प॒शवो॑,मान॒वीत्या॑ह॒- मनु॒.र्ह्येता॑म्।। 38।।❀

अग्रेऽपश्य,द्धृतपदीत्याह -यदेवास्यै पदाद्धृत मपीड्यत- तस्मा देवमाह, मैत्रावरुणीत्याह- मित्रावरुणौ ह्येना॰ समैरयतां, ब्रह्म देवकृत मुपहूत मित्याह- ब्रह्मैवोप ह्वयते, दैव्या अध्वर्यव उपहूता- उपहूता मनुष्या इत्याह- देवमनुष्या नेवोप ह्वयते, य इमँ यज्ञ.मवान्- ये यज्ञपतिँ वर्धा नित्याह-।। 39।। ❀ यज्ञाय चैव यजमानाय चाऽऽशिषमा शास्त, उपहूते द्यावापृथिवी इत्याह- द्यावापृथिवी एवोप ह्वयते, पूर्वजे ऋतावरी इत्याह- पूर्वजे ह्येते ऋतावरी, देवी देवपुत्रे इत्याह- देवी ह्येते देवपुत्रे, उपहूतोऽयँ यजमान इत्याह- यजमान मेवोप ह्वयत, उत्तरस्या न्देवयज्याया मुपहूतो- भूयसि हविष्करण उपहूतो- दिव्ये धामन्नुपहूतः।। 40।। ❀ इत्याह- प्रजा वा उत्तरा देवयज्या- पशवो भूयो हविष्करण॰- सुवर्गो लोको दिव्य न्धा,मेद मसीद मसी-त्येव यज्ञस्य प्रिय न्धामोप ह्वयते, विश्वमस्य प्रिय मुपहूत मित्या- हाछम्बट्कार मेवोप ह्वयते।। 41।। (आह धेनु रेताँ वर्धानित्याह धाम न्नुपहूत श्चतुस्त्रि॰शच्च। 7।)

❀ पशवो वा इडा स्वय मा दत्ते, काम मेवाऽऽत्मना पशूना मा दत्ते, न ह्यन्यः कामं पशूनां प्रयच्छति, वाचस्पतये त्वा हुतं प्राश्ञामी- त्याह- वाचमेव भागधेयेन प्रीणाति, सदसस्पतये त्वा हुतं प्राश्ञामी-त्याह स्वगाकृत्यै, चतुरवत्तं भवति- हविर्वै चतुरवत्तं- पशव श्चतुरवत्तँ, यद्धोता प्राश्ञीया- द्धोता।। 42।। ❀ आर्ति माच्छे,द्यदग्नौ जुहुया- द्रुद्राय पशू नपि दध्या-दपशु र्यजमान स्स्या,द्वाचस्पतये त्वा हुतं प्राश्ञामीत्याह- परोऽक्ष मेवैन ज्जुहोति, सदसस्पतये त्वा हुतं प्राश्ञामीत्याह स्वगाकृत्यै, प्राश्ञन्ति- तीर्थ एव प्राश्ञन्ति, दक्षिणा न्ददाति- तीर्थ एव दक्षिणा न्ददाति, वि वा एतद्यज्ञम्।। 43।। ❀ छिन्दन्ति- यन्मध्यतः प्राश्ञ,न्त्यद्भि र्मार्जयन्त- आपो वै सर्वा देवता- देवताभि रेव यज्ञ॰ सन्तन्वन्ति, देवा वै यज्ञा द्रुद्र मन्त राय'2'-न्थ्स यज्ञ मविध्य- त्त न्देवा अभि समगच्छन्त- कल्पतान्न इद मिति, तेऽब्रुव'2'-न्थ्स्विष्टँ वै न इदं भविष्यति- यदिम॰ राधयिष्याम इति, तथ्स्विष्टकृत स्स्विष्टकृत्त्व, न्तस्याविद्ध न्निः।। 44।। ❀ अकृन्तन्, यवेन संमित,न्तस्मा द्यवमात्र मव द्ये,द्यज्ज्यायोऽवद्ये द्रोपये त्त,द्यज्ञस्य यदुप च स्तृणीया- दभि च घारये- दुभयतस्सँश्वायि कुर्या,दवदायाभि घारयति, द्विस्सं पद्यते- द्विपाद्यजमानः प्रतिष्ठित्यै, यत्तिरश्चीन मतिहरे- दनभिविद्धँ यज्ञस्याभि विध्ये,दग्रेण परि हरति- तीर्थेनैव परि हरति, तत्पूष्णे पर्यहर,न्तत्।। 45।। ❀ पूषा प्राश्य दतोऽरुण- त्तस्मा त्पूषा प्रपिष्टभागो-ऽदन्तको हि तन्देवा अब्रुवन्,वि वा अय मा-र्ध्यप्राशित्रियो वा अय मभूदिति, तद्बृहस्पतये पर्यहर'2'-न्थ्सोऽबिभे द्बृहस्पति- रित्थँ वाव स्य आर्ति मारिष्यतीति, स एतं मन्त्र मपश्य थ्सूर्यस्य त्वा चक्षुषा प्रति पश्यामी- त्यब्रवी, न्न हि सूर्यस्य चक्षुः।। 46।। ❀ किञ्चन

हिनस्ति, सोऽबिभे-त्प्रतिगृह्णन्तं मा हि॑सिष्यतीति, ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनो बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्णा- मीत्यब्रवी,थ्सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णा,थ्सोऽबिभे- त्प्राश्ञन्तं मा हि॑सिष्यती, ॐत्यग्ने स्त्वाऽऽस्येन प्राश्ञा-मीत्यब्रवी, न्न ह्यग्ने.रास्य ङ्किञ्चन हिनस्ति, सोऽबिभेत्-।। 47।।❀ प्राशितं मा हि॑सिष्यतीति, ॐब्राह्मण स्योदरे....णेत्यब्रवी,न्न हि ब्राह्मणस्योदर ङ्किञ्चन हिनस्ति, --बृहस्पते ब्रह्मणे-ति, स हि ब्रह्मिष्ठो,ऽप वा एतस्मात्प्राणाः क्रामन्ति- यः प्राशित्रं प्राश्ञा,त्यद्भि र्मार्जयित्वा प्राणान्थ्सं मृशते,ऽमृतँ वै प्राणा- अमृत मापः- प्राणा नेव यथास्थान मुप ह्वयते।। 48।। (प्राश्ञीया द्धोता यज्ञ न्निरहर न्तच्चक्षु रास्य ङ्किञ्चन हिनस्ति सोबिभे च्चतुश्चत्वारि॑शच्च। 8।)

❀ अग्नीध आ दधा- त्यग्निमुखा नेवर्तू न्प्रीणाति, समिध मादधा -त्युत्तरासा माहुतीनां प्रतिष्ठित्या, अथो समिद्धत्येव जुहोति, परिधीन्थ्संमार्ष्टि- पुनात्येवैना,न्थ्सकृथ्सकृथ्संमार्ष्टि, पराङिव ह्येतर्हि यज्ञ,श्चतु स्सं पद्यते- चतुष्पादः पशवः- पशू नेवाव रुन्धे, ॐब्रह्म न्प्र स्थास्याम- इत्याहात्र वा एतर्हि यज्ञ श्श्रितः-।। 49।।❀ यत्र ब्रह्मा- यत्रैव यज्ञ श्श्रित- स्तत एवैन मारभते, यद्धस्तेन प्रमीवे- द्वेपन स्स्या, द्यच्छीर्ष्णा- शीर्षक्तिमान्थ्स्या,द्यत्तूष्णी मासीतासम्प्रत्तो यज्ञस्स्या, ॐत्प्रतिष्ठे-त्येव ब्रूया,द्वाचि वै यज्ञ श्श्रितो- यत्रैव यज्ञ श्श्रित-स्तत एवैन॑ सं प्र यच्छति, ॐदेव सवित रेतत्ते प्र।। 50।।❀ आ-हेत्याह प्रसूत्यै, ॐबृहस्पति र्ब्रह्मे-- त्याह, स हि ब्रह्मिष्ठ ॐ--स्स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाही-त्याह, यज्ञाय यजमानायाऽऽत्मने- तेभ्य एवाऽऽशिषमा शास्तेऽनार्त्या, आश्राव्याऽऽह ॐदेवान् यजे-ति, ब्रह्मवादिनो वद-न्तीष्टा देवता- अथ कतम एते देवा इति, छन्दा॑सीति ब्रूया,द्गायत्री न्त्रिष्टुभम्।। 51।।❀ जगती मि,त्यथो~ खल्वाहु- र्ब्राह्मणा वै छन्दा॑सीति- तानेव तद्यजति, देवानाँ वा इष्टा देवता आस- न्नथाग्नि र्नोदज्वल, त्तन्देवा आहुतीभि रनूयाजे.ष्वन्वविन्दन्, यदनूयाजान् यज- त्यग्निमेव तथ्समिन्ध, एतदु वै नामाऽऽसुर आसी-थ्स एतर्हि यज्ञस्याऽऽशिष मवृङ्क्त, यद्ब्रूया- देतत्।। 52।।❀ उ द्यावापृथिवी भद्र मभू दि-त्येतदु मेवाऽऽसुरँ यज्ञस्याऽऽशिष ङ्गमये,दिद न्द्यावापृथिवी भद्र मभू दित्येव ब्रूया- द्यजमान मेव यज्ञस्याऽऽशिष ङ्गमय,त्यार्ध्म सूक्तवाक मुत नमोवाक मित्या-हेद मराथ्स्मेति वावैत दा,होपश्रितो दिवः पृथिव्यो रित्याह- द्यावापृथिव्योर् हि यज्ञ उपश्रित, ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी।। 53।।❀ स्ता मित्याहा-ऽऽशिष मेवैता मा शास्ते, यद्ब्रूया.थ्सूपावसाना च स्वध्यवसाना चेति- प्रमायुको यजमान स्स्या,द्यदा हि प्रमीयतेऽथेमा मुपावस्यति, सूपचरणा च

स्वधिचरणा चेत्येव ब्रूया- द्वरीयसी मेवास्मै गव्यूति माशास्ते- न प्रमायुको भवति, तयो राविःद्यग्नि रिद॰ हवि रजुषतेत्याह- या अयाक्ष्म।। 54।। देवता- स्ता अरीरधामेति वावैतदाह, यन्न निर्दिशे- त्प्रतिवेशँ यज्ञस्याऽऽशी गच्छे,दा शास्तेयँ यजमानोऽसा. वित्याह- निर्दिश्यैवैन॰ सुवर्गं लोक ङ्गमय,त्यायु रा शास्ते- सुप्रजास्त्व मा शास्त- इत्याहाऽऽशिष मेवैतामा शास्ते, सजातवनस्या मा शास्त इत्याह- प्राणा वै सजाताः- प्राणा नेव।। 55।। नान्तरेति, तदग्नि र्देवो देवेभ्यो वनते- वय मग्ने मानुषा इत्या-हाग्नि र्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदा,हेह गति र्वामस्येदञ्च नमो देवेभ्य इत्याह- याश्चैव देवता यजति- याश्च न- ताभ्य एवोभयीभ्यो नमस्करो- त्यात्मनोऽनार्त्यै।। 56।। (श्रितस्ते प्र त्रिष्टुभ मेतद्यावापृथिवी या अयाक्ष्म प्राणानेव षड्चत्वारि॰शच्च। 9।)

देवा वै यज्ञस्य स्वगाकर्तार न्नाविन्द-न्ते शँयुं बार्हस्पत्य मब्रुव- न्निम न्नो यज्ञ॰ स्वगा कुर्विति, सोऽब्रवी.द्वरँ वृणै, यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै- सा मे यज्ञस्याऽऽशी रसदिति, तस्माद्य दब्राह्मणोक्तोऽश्रद्दधानो यजते- शँयु मेव तस्य बार्हस्पत्यँ यज्ञस्याऽऽशी र्गच्छ,त्येत न्ममेत्यब्रवी-त्किं मे प्रजायाः।। 57।। इति- योऽपगुरातै शतेन यातया-द्यो निहन थ्सहस्रेण यातया- द्यो लोहित ङ्करव-द्यावतः प्रस्कद्य पा॰सू न्थ्सङ्गृह्णा- त्तावत सँवथ्सरा न्पितृलोकन्न प्र जानादिति, तस्माद्ब्राह्मणाय नाप गुरेत- न नि हन्या- न्न लोहित.ङ्कुर्या-देतावता हैनसा भवति, तच्छँयो रा वृणीमह इत्याह- यज्ञ.मेव तथ्स्वगा करोति, तत्।। 58।। शँयो रावृणीमह इत्याह- शँयु मेव बार्हस्पत्यं भागधेयेन समर्धयति, गातुँ यज्ञाय गातुँ यज्ञपतय इत्याहा-ऽऽशिष मेवैता मा शास्ते, सोमँ यजति- रेत एव तद्दधाति, त्वष्टारँ यजति- रेत एव हित न्त्वष्टा रूपाणि वि करोति, देवानां पत्नी र्यजति- मिथुनत्वा,याग्नि.ङ्गृहपतिँ यजति प्रतिष्ठित्यै, जामि वा एत द्यज्ञस्य क्रियते-।। 59।। यदाज्येन प्रयाजा इज्यन्त- आज्येन पत्नीसँयाजा, ऋच मनूच्य पत्नीसँयाजाना मृचा यज.त्यजामित्वा.याथो मिथुनत्वाय, पङ्क्तिप्रायणो वै यज्ञः- पङ्क्त्युदयनः, पञ्च प्रयाजा इज्यन्ते- चत्वारः पत्नीसँयाजा- स्समिष्टयजुः पञ्चमं, पङ्क्ति मेवानु प्रयन्ति- पङ्क्ति मनूद्यन्ति।। 60।। (प्रजायाः करोति तत्क्रियते त्रयस्त्रि॰शच्च। 10।)

**वै।का।12 याज्या: 14 (एकोऽनुवाक: 1)**

युक्ष्वा हि देवहूतमा॰ अश्वा॰ अग्ने रथीरिव। नि होता पूर्व्यस्सदः।।

उत नो देव देवा॰ अच्छा वोचो विदुष्टरः। श्रद्विश्वा वार्या कृधि।।

卐 त्वꣳ ह यद्यविष्ठ्य सहस स्सूनवाहुत। ऋतावा यज्ञियो भुवः।।

卐 अय मग्नि स्सहस्त्रिणो वाजस्य शतिनस्पतिः। मूर्धा कवी रयीणाम्।।

卐 तन्नेमि मृभवो यथाऽऽनमस्व सहूतिभिः। नेदीयो यज्ञम्।। 61।। ❀ अङ्गिरः।।

卐 तस्मै नून मभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिम्।।

卐 कमुष्विदस्य सेनयाऽग्ने रपाकचक्षसः। पणि ङ्गोषु स्तरामहे।।

卐 मा नो देवानाँ विशꣳ प्रस्नाती रिवोस्त्राः। कृश न्न हासु रघ्नियाः।।

卐 मा न स्समस्य दूढ्यꣳ परिद्वेषसो अꣳहतिः। ऊर्मि र्न नाव माऽवधीत्।।

卐 नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः। अमैः।। 62।। ❀ अमित्र मर्दय।।

卐 कुविथ्सु नो गविष्टयेऽग्ने सँवेषिषो रयिम्। उरुकृ दुरुण स्स्कृधि।।

卐 मा नो अस्मि न्महाधने परा वर्ग्भारभृद्यथा। सँवर्गꣳ सꣳ रयिञ्जय।।

卐 अन्य मस्म द्भिया इयमग्ने सिषक्तु दुच्छुना। वर्धा नो अमवच्छवः।।

卐 यस्याजुष न्नमस्विन श्शमी मदुर्मखस्य वा। तङ्घेदग्नि र्वृधाऽवति।।

卐 परस्या अधि।। 63।। ❀ सँवतोऽवराꣳ अभ्या तर। यत्राहमस्मि ताꣳ अव।।

卐 विद्मा हि ते पुरा वय मग्ने पितु र्यथाऽवसः। अधा ते सुम्नमीमहे।।

卐 य उग्र इव शर्यहा तिग्मश्शृङ्गो न वꣳसगः। अग्ने पुरो रुरोजिथ।।

卐 सखाय स्सँ व स्सम्यञ्च मिषꣳ स्तोम ञ्चाग्नये। वर्षिष्ठाय क्षितीना मूर्जो नप्त्रे सहस्वते।।

卐 सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ। इडस्पदे समिध्यसे स नो वसून्या भर।।

卐 प्रजापते[54]❀ 卐स वेद[55]❀ 卐सोमापूष[56]❀ 卐णेमौ देवौ[57]❀।। 64।। (यज्ञ ममै रधि वृष न्नेकान्न विꣳशतिश्च। 11।)

**वै।का।12 याज्या: 15 (एकोऽनुवाक: 1)**

❀卐उशन्तस्त्वा हवामह उशन्त स्समिधीमहि। उशन्नुशत आ वह पितृन् हविषे अत्तवे।।

卐 त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठ मनु नेषि पन्थाम्। तव प्रणीती पितरो न इन्दो देवेषु रत्न मभजन्त धीराः।।

---

54

55

56

57

卐 त्वया हि नः पितर स्सोम पूर्वे कर्माणि चक्रुः पवमान धीराः। वन्व न्नवातः परिधी१ रपोर्णु वीरेभि रश्वै र्मघवा भव।। 65।। ❀ नः।

卐 त्व१ सोम पितृभि स्सँविदानोऽनु द्यावापृथिवी आ ततन्थ। तस्मै त इन्दो हविषा विधेम वय१ स्याम पतयो रयीणाम्।।

卐 अग्निष्वात्ताः पितर एह गच्छत सदस्सद स्सदत सुप्रणीतयः। अत्ता हवी१षि प्रयतानि बर्हिष्यथा रयि१ सर्ववीर न्दधातन।।

卐 बर्हिषदः पितर ऊत्यर्वा गिमा वो हव्या चकृमा जुषध्वम्। त आ गतावसा शन्तमेना.थास्मभ्यम्।। 66।। ❀ शँ यो ररपो दधात।।

卐 आऽहं पितृ न्थ्सुविदत्रा१ अवित्सि नपातञ्च विक्रमणञ्च विष्णोः। बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः।।

卐 उपहूताः पितर स्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु। त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान्।।

卐 उदीरता मवर उत्परास उन्मध्यमाः पितर स्सोम्यासः। असुम्।। 67।। ❀ य ईयु रवृका ऋतज्ञा स्ते नोऽवन्तु पितरो हवेषु।।

卐 इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्या निषत्ता ये वा नून१ सुवृजनासु विक्षु।।

卐 अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋत माशुषाणाः। शुचीदय न्दीधिति मुक्थशासः क्षामा भिन्दन्तो अरुणी रप व्रन्न्।।

卐 यदग्ने।। 68।। ❀ कव्यवाहन पितृन् यक्ष्यृतावृधः। प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ।।

卐 त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा। प्रादाः पितृभ्य स्स्वधया ते अक्ष न्नद्धि त्व न्देव प्रयता हवी१षि।।

卐 मातली कव्यै र्यमो अङ्गिरोभि र्बृहस्पतिर् ऋक्वभि र्वावृधानः। या१श्च देवा वावृधु र्ये च देवा न्थ्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति।। 69।।

❀卐इमँ यम प्रस्तर मा हि सीदाङ्गिरोभिः पितृभि स्सँविदानः। आ त्वा मन्त्राः कविशस्ता वह न्त्वेना राजन् हविषा मादयस्व।।

卐 अङ्गिरोभि रा गहि यज्ञियेभि र्यम वैरूपै रिह मादयस्व। विवस्वन्त९ हुवे य॰ पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य।।

卐 अङ्गिरसो न॰ पितरो नवग्वा अथर्वाणो भृगव स्सोम्यासः। तेषाँ वय९ सुमतौ यज्ञियाना मपि भद्रे सौमनसे स्याम।। 70।। (भवास्मभ्य मसुँ यदग्ने मदन्ति सौमनस एकञ्च। 12।)

(समिध श्चक्षुषी प्रजापति राज्य न्देवस्य स्फ्यं ब्रह्मवादिनोऽद्भि रग्ने स्त्रयो मनु॰ पृथिव्या॰ पशवोऽग्नीधे देवा वै यज्ञस्य युक्ष्वोशन्तस्त्वा द्वादश। 12। समिधो याज्या तस्मान्नाभाग९ हि तमन्वित्याह प्रजा वा आहेत्याह युक्ष्वा हि सप्ततिः। 70। समिध स्सौमनसे स्याम।)

## ॐ तृतीयकाण्डम्

## ॐ ॐतृतीयकाण्डे प्रथम॰ प्रपाठकः

### वै।का।11 औपानुवाक्य ब्राह्मणम्,मन्त्राश्च 1 (दशानुवाकाः 10)

❀ प्रजापति रकामयत- प्रजा स्सृजेयेति- स तपो ऽतप्यत- स सर्पा नसृजत, सोऽकामयत- प्रजा स्सृजेयेति- स द्वितीय मतप्यत- स वया९स्यसृजत, सोऽकामयत- प्रजा स्सृजेयेति- स तृतीय मतप्यत- स एत न्दीक्षितवाद मपश्य,त्तमवद- त्ततो वै स प्रजा असृजत, यत्तप.स्तप्त्वा दीक्षितवादँ वदति- प्रजा एव तद्यजमानः।। 1।। ❀ सृजते, यद्वै दीक्षितोऽमेध्यं पश्य-त्यपास्मा द्दीक्षा क्रामति- नीलमस्य हरो व्ये, 卐त्यबद्धं मनो- दरिद्र.ञ्चक्षु- स्सूर्यो ज्योतिषा९ श्रेष्ठो दीक्षे मा मा हासी- रित्याह, नास्मा द्दीक्षाऽप क्रामति- नास्य नीलन्न हरो व्येति, यद्वै दीक्षित.मभिवर्षति- दिव्या आपोऽशान्ता ओजो बल न्दीक्षाम्।। 2।। ❀ तपोऽस्य निर्घ्न, 卐न्त्युन्दती र्बल न्ध.त्तौजो धत्त- बल न्धत्त- मा मे दीक्षां मा तपो निर्वधिष्टे- त्या,हैतदेव सर्व.मात्म न्धत्ते- नास्यौजो बल-न्न दीक्षा-न्न तपो निर्घ्न,न्त्यग्निर्वै दीक्षितस्य देवता- सोऽस्मा.देतर्हि तिर इव यर्हि याति, तमीश्वर९ रक्षा९सि हन्तोः,।। 3।। ❀ भद्रा.दभि श्रेय॰ प्रेहि बृहस्पति॰ पुरएता ते अस्त्वित्याह- ब्रह्म वै देवानां बृहस्पति- स्तमेवान्वा रभते, स एन९ सं पारय,त्येद.मगन्म देवयजनं पृथिव्या इत्याह- देवयजन३ ह्येष पृथिव्या आगच्छति- यो यजते, विश्वे देवा यदजुषन्त पूर्व इत्याह- विश्वे ह्येत.द्देवा जोषयन्ते यद्ब्राह्मणा, ऋख्सामाभ्याँ यजुषा सन्तरन्त इत्या.हर्ख्सामाभ्या९ ह्येष यजुषा सन्तरति- यो यजते, राय.स्पोषेण समिषा मदेमेत्या- हाऽऽशिष.मेवैता.मा शास्ते।। 4।। (यजमानो दीक्षा९ हन्तो र्ब्राह्मणा श्चतुर्वि९शतिश्च।1।)

🕉❀卐एष ते गायत्रँ भाग इति मे सोमाय ब्रूता卐देष ते त्रैष्टुभो- 卐--जागतँ भाग इति मे सोमाय ब्रूता 卐च्छन्दोमाना॰ साम्राज्य.ङ्गच्छेति मे सोमाय ब्रूता,-द्यो वै सोम॰ राजान॰ साम्राज्यँ लोक ङ्गमयित्वा क्रीणाति गच्छति स्वाना॰ साम्राज्य,ञ्छन्दा॰सि खलु वै सोमस्य राज्ञ स्साम्राज्यो लोकः, पुरस्ता.थ्सोमस्य क्रयादेव मभि मन्त्रयेत, साम्राज्य.मेव।। 5।।❀ एनँ लोक ङ्गमयित्वा क्रीणाति गच्छति स्वाना॰ साम्राज्यँ, यो वै तानूनप्त्रस्य प्रतिष्ठाँ वेद- प्रत्येव तिष्ठति, ब्रह्मवादिनो वदन्ति- न प्राश्ञन्ति- न जुह्व-त्यथ क्व तानूनप्त्रं प्रति तिष्ठतीति, प्रजापतौ मनसीति ब्रूया,त्त्रि रव जिघ्रे, 卐त्प्रजापतौ त्वा मनसि जुहोमी- त्येषा वै तानूनप्त्रस्य प्रतिष्ठा- यँ एवँ वेद- प्रत्येव तिष्ठति, यः।। 6।।❀ वा अध्वर्योः प्रतिष्ठाँ वेद- प्रत्येव तिष्ठति, यतो मन्ये.तानभिक्रम्य होष्यामीति- तत्तिष्ठन्ना श्रावये,देषा वा अध्वर्योः प्रतिष्ठा- यँ एवँ वेद- प्रत्येव तिष्ठति, यदभिक्रम्य जुहुया- त्प्रतिष्ठाया इया- त्तस्मा थ्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै, यो वा अध्वर्यो स्स्वँ वेद- स्ववा.नेव भवति, स्रुग्वा अस्य स्वँ- वायव्य.मस्य।। 7।।❀ स्व-ञ्चमसोऽस्य स्वँ, यद्वायव्यँ वा चमसँ वाऽनन्वारभ्याऽऽश्रावये- थ्स्वादिया,त्तस्मा दन्वारभ्याऽऽश्राव्यङ्- स्वा.देव नैति, यो वै सोम मप्रतिष्ठाप्य स्तोत्र मुपाऽऽकरो- त्यप्रतिष्ठित स्सोमो भव-त्यप्रतिष्ठित स्स्तोमो-ऽप्रतिष्ठिता न्युक्था-न्यप्रतिष्ठितो यजमानो- ऽप्रतिष्ठितोऽध्वर्यु, र्वायव्यँ वै सोमस्य प्रतिष्ठा- चमसोऽस्य प्रतिष्ठा, सोम स्स्तोमस्य स्तोम- उक्थाना ङ्ग्रहँ वा गृहीत्वा- चमसँ वोन्नीय- स्तोत्र मुपाऽऽकुर्या,त्प्रत्येव सोमङ् स्थापयति- प्रति स्तोमं- प्रत्युक्थानि- प्रति यजमान स्तिष्ठति- प्रत्यध्वर्युः।। 8।। (एव तिष्ठति यो वायव्यमस्य ग्रहँ वैकान्नविं॰शतिश्च। 2।)

🕉❀ यज्ञँ वा एत.थ्सम्भरन्ति- यथ्सोमक्रयण्यै पदँ यज्ञमुख॰ हविर्धाने, यर्हि हविर्धाने प्राची प्रवर्तयेयु- स्तर्हि तेनाक्ष मुपाञ्ज्या-द्यज्ञमुख एव यज्ञ.मनु सन्तनोति, प्राञ्च.मग्निं प्र हर-न्त्युत्पत्नी मा नय- न्त्यन्वना॰सि प्र वर्तय,न्त्यथ वा अस्यैष धिष्णियो हीयते- सोऽनु ध्यायति- स ईश्वरो रुद्रो भूत्वा।। 9।।❀ प्रजां पशून् यजमानस्य शमयितो,र्यर्हि पशु माप्रीत मुदञ्च न्नयन्ति- तर्हि तस्य पशुश्रपण॰ हरे-त्तेनैवैनं भागिन ङ्करोति, यजमानो वा आहवनीयो- यजमानँ वा एत.द्विकर्षन्ते, यदाहवनीया त्पशुश्रपण॰ हरन्ति- स वैव स्या,न्निर्मन्थ्यँ वा कुर्या- द्यजमानस्य साऽऽत्मत्वाय, यदि पशो रवदान न्नश्ये- दाज्यस्य प्रत्याख्याय मवद्ये-थ्सैव ततः प्रायश्चित्ति, यें पशुँ विमथ्नीरन्- यस्ता.न्कामयेता-ऽऽर्ति

माच्र्छेयु.रिति- ॥कुविदङ्गे[58]॥ति नमोवृक्तिवत्यर्चा ऽऽग्नीध्रे जुहुया- न्नमोवृक्ति मेवैषाँ वृङ्क्ते- ताज.गार्ति माच्र्छन्ति।। 10।।(भूत्वा तत षड्विँशतिश्च। 3।)

॥ प्रजापते र्जायमाना॰ प्रजा जाताश्च या इमाः। तस्मै प्रति प्र वेदय चिकित्वाँ अनु मन्यताम्।।

॥ इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये। अनु मन्यस्व सुयजा यजाम जुष्ट न्देवाना मिदमस्तु हव्यम्।।

॥ प्रजानन्त॰ प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्य॰ पर्याचरन्तम्। सुवर्गँ याहि पथिभि र्देवयानै रोषधीषु प्रति तिष्ठा शरीरैः।।

॥ येषामीशे।। 11।। ॥ पशुपति॰ पशूना ञ्चतुष्पदा मुत च द्विपदाम्। निष्क्रीतोऽयँ यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु।।

॥ ये बध्यमान मनु बध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च। अग्निस्ताँ अग्रे प्र मुमोक्तु देव॰ प्रजापति॰ प्रजया सँविदानः।।

॥ य आरण्या॰ पशवो विश्वरूपा विरूपा स्सन्तो बहुधैकरूपाः। वायुस्ताँ अग्रे प्र मुमोक्तु देव॰ प्रजापति॰ प्रजया सँविदानः।।

॥ प्रमुञ्चमानाः।। 12।। ॥ भुवनस्य रेतो गातुन्धत्त यजमानाय देवाः। उपाऽऽकृतँ शशमानँ यदस्था ज्जीव न्देवाना मप्येतु पाथः।।

॥ नाना प्राणो यजमानस्य पशुना यज्ञो देवेभि स्सह देवयानः। जीवन्देवाना मप्येतु पाथ स्सत्या स्सन्तु यजमानस्य कामाः।।

॥ यत्पशुर्मायु मकृतोरो वा पद्भिराहते। अग्निर्मा तस्मादेनसो विश्वान्मुञ्च त्वँहसः।।

॥ शमितार उपेतन यज्ञम्।। 13।। ॥ देवेभिरिन्वितम्। पाशात्पशुं प्र मुञ्चत बन्धाद्यज्ञपतिं परि।।

॥ अदिति॰ पाशं प्र मुमो क्त्वेत न्नम॰ पशुभ्य॰ पशुपतये करोमि।।

॥ अरातीयन्त मधरङ्कृणोमि य न्द्विष्म स्तस्मिन्प्रति मुञ्चामि पाशम्।।

॥ त्वामु ते दधिरे हव्यवाहँ श्रतङ्कर्तार मुत यज्ञियञ्च। अग्ने सदक्ष स्सतनुर्हि भूत्वाऽथ हव्या जातवेदो जुषस्व।।

58

卐 जातवेदो वपया गच्छ देवान्त्व९ हि होता प्रथमो बभूथ। घृतेन त्व न्तनुवो वर्धयस्व स्वाहाकृत९ हविरदन्तु देवाः।।

卐 स्वाहा देवेभ्यो 卐देवेभ्य स्स्वाहा।। 14।। (ईशो प्रमुञ्चमाना यज्ञ न्त्व९ षोडश च। 4।)

❀ प्राजापत्या वै पशव- स्तेषा९ रुद्रोऽधिपति, र्यदेताभ्या मुपाऽऽकरोति- ताभ्या.मेवैनं प्रतिप्रोच्याऽऽलभत- आत्मनोऽनाव्रस्काय, द्वाभ्या मुपाऽऽकरोति- द्विपाद्यजमानः प्रतिष्ठित्या, उपाऽऽकृत्य पञ्च जुहोति- पाङ्क्ताः पशवः- पशू.नेवाव रुन्धे, मृत्यवे वा एष नीयते- यत्पशु,स्तँ यदन्वारभेत- प्रमायुको यजमान स्स्या,न्नाना प्राणो यजमानस्य पशुनेत्याह- व्यावृत्त्यै,।। 15।।❀ यत्पशु.र्मायु मकृतेति जुहोति- शान्त्यै, शमितार उपेतनेत्याह- यथायजु.रेवैत, द्वपायाँ वा आह्रियमाणाया मग्ने र्मेधोऽप क्रामति, त्वामु ते दधिरे हव्यवाह मिति- वपा मभि जुहो-त्यग्नेरेव मेध मव रुन्धे,ऽथो श्रृतत्वाय, पुरस्ताथ्स्वाहाकृतयो वा अन्ये देवा- उपरिष्टाथ्स्वाहाकृतयोऽन्ये, स्वाहा देवेभ्यो- देवेभ्य स्स्वाहे-त्यभितो वपा ञ्जुहोति, तानेवोभया.न्प्रीणाति।। 16।। (व्यावृत्त्या अभितो वपां पञ्च च। 5।)

❀ यो वा अयथादेवतँ यज्ञ मुपचर-त्या देवताभ्यो वृश्च्यते- पापीया.न्भवति, यो यथादेवत-न्न देवताभ्य आ वृश्च्यते- वसीया न्भव, 卐त्याग्नेय्यर्चा[59]❀ऽऽग्नीध्र मभि मृशे 卐द्वैष्णव्या[60]❀ हविर्धान 卐माग्नेय्या[61]❀स्रुचो 卐वायव्यया[62]❀वायव्या 卐न्यैन्द्रिया[63]❀ सदो, यथादेवत.मेव यज्ञ मुप चरति- न देवताभ्य आ वृश्च्यते- वसीया.न्भवति, 卐युनज्मि ते पृथिवी ञ्ज्योतिषा सह 卐युनज्मि वायु मन्तरिक्षेण।। 17।।❀ ते सह 卐युनज्मि वाच९ सह सूर्येण ते 卐युनज्मि तिस्रो विपृच स्सूर्यस्य ते। 卐अग्नि र्देवता गायत्री छन्द उपा९शोः पात्रमसि 卐सोमो देवता त्रिष्टु प्छन्दोऽन्तर्यामस्य पात्रम 卐सीन्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि 卐बृहस्पति र्देवताऽनुष्टुप्छन्दो मित्रावरुणयोः पात्रम 卐स्यश्विनौ देवता पङ्क्ति श्छन्दोऽश्विनोः पात्रमसि 卐सूर्यो देवता बृहती।। 18।।❀ छन्द श्शुक्रस्य पात्रमसि 卐चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि 卐विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य

59

60

61

62

63

पात्रम् ॐसीन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि ॐपृथिवी देवता विराड्छन्दो ध्रुवस्य पात्रमसि।। 19।। (अन्तरिक्षेण बृहती त्रयस्त्रिꣳशच्च। 7।)

❀ इष्टर्गो वा अध्वर्यु र्यजमान-स्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत, ॐआसन्यान्मा मन्त्रा.त्पाहि कस्याश्चि दभिशस्त्या- इति पुरा प्रातरनुवाका ज्जुहुया,दात्मन एव तदध्वर्युः पुरस्ता च्छर्म नह्यतेऽनार्त्यै, ॐसँवेशाय त्वोपवेशाय त्वा गायत्रिया- ॐ--स्त्रिष्टुभो- ॐ-- जगत्या- अभिभूत्यै स्वाहा ॐप्राणापानौ मृत्योर्मा पातं ॐप्राणापानौ मा मा हासिष्ट- न्देवतासु वा एते प्राणापानयोः।। 20।। ❀ व्यायच्छन्ते-येषाꣳ सोम स्समृच्छते, सँवेशाय त्वोपवेशाय त्वेत्याह- छन्दाꣳसि वै सँवेश उपवेश-श्छन्दोभि रेवास्य छन्दाꣳसि वृङ्क्ते, प्रेतिव.न्त्याज्यानि भव-न्त्यभिजित्यै, मरुत्वतीः प्रतिपदो विजित्या, -उभे बृहद्रथन्तरे भवत- इयँ वाव रथन्तर- मसौ बृह-दाभ्या.मेवैन मन्तरे,त्यद्य वाव रथन्तरꣳ- श्वो बृह-दद्याश्वा देवैन मन्तरेति, भूतम्।।21।। ❀ वाव रथन्तरं- भविष्य द्बृह-द्भूता.च्चैवैनं भविष्यत श्चान्त.रेति, परिमितँ वाव रथन्तर- मपरिमितं बृह-त्परिमिता च्चैवैन मपरिमिता च्चान्तरेति, विश्वामित्र.जमदग्नी वसिष्ठेनास्पर्धेताꣳ-स एत ज्जमदग्नि र्विहव्य मपश्य- त्तेन वै स वसिष्ठस्येन्द्रियँ वीर्य मवृङ्क्त, यद्विहव्यꣳ शस्यत- इन्द्रिय.मेव तद्वीर्यँ यजमानो भ्रातृव्यस्य वृङ्क्ते, यस्य भूयाꣳसो यज्ञक्रतव इत्याहु- स्स देवता वृङ्क्त इति, यद्यग्निष्टोम स्सोमः परस्ता.थ्स्या- दुक्थ्य ङ्कुर्वीत, यद्युक्थ्य स्स्या-दतिरात्र ङ्कुर्वीत- यज्ञक्रतुभि रेवास्य देवता वृङ्क्ते-वसीया न्भवति।। 22।। (प्राणापानयो र्भूतँ वृङ्क्तेऽष्टाविꣳशतिश्च। 7।)

❀ॐनिग्राभ्यास्स्थ देवश्रुत- आयुर्मे तर्पयत- प्राणं मे तर्पयाता-ऽपानं मे तर्पयत- व्यानं मे तर्पयत-चक्षु.र्मे तर्पयत- श्रोत्रं मे तर्पयत- मनो मे तर्पयत- वाचं मे तर्पयता-ऽऽत्मानं मे तर्पयता-ऽङ्गानि मे तर्पयत- प्रजां मे तर्पयत- पशून्मे तर्पयत- गृहान्मे तर्पयत- गणान्मे तर्पयत- सर्वगणं मा तर्पयत-तर्पयत मा,।। 23।। ❀ गणा मे मा वि तृष,-न्नोषधयो वै सोमस्य विशो- विशः खलु वै राज्ञः प्रदातो रीश्वरा- ऐन्द्र स्सोमो ॐऽवीवृधँ वो मनसा सुजाता- ऋतप्रजाता भग इद्वस्स्याम। इन्द्रेण देवी र्वीरुध स्सँविदाना अनु मन्यन्ताꣳ सवनाय सोम- मित्या,हौषधीभ्य एवैनꣳ स्वायै विश.स्वायै देवतायै निर्याच्याभिषुणोति, यो वै सोमस्याभिषूयमाणस्य।। 24।। ❀ प्रथमोऽꣳशु स्स्कन्दति- स ईश्वर इन्द्रियँ वीर्यं प्रजां पशून् यजमानस्य निर्हन्तो- स्त मभि मन्त्रयेता, ॐऽऽमा स्कान्थ्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधी- रित्याशिष मेवैता माशास्त- इन्द्रियस्य वीर्यस्य प्रजायै पशूना मनिर्घाताय,

卐 द्रफ्स श्चस्कन्द पृथिवी मनु द्या मिमञ्च योनि मनु यश्च पूर्वः। तृतीयँ योनि मनु सञ्चरन्त न्द्रफ्स ञ्जुहोम्यनु सप्त होत्राः।। 25।। (तर्पयत माऽभिषूयमाणस्य यश्च दश च। 8।)

❀ यो वै देवा न्देवयशसे.नार्पयति- मनुष्या न्मनुष्ययशसेन- देवयशस्येव देवेषु भवति- मनुष्ययशसी मनुष्येषु, यान्प्राचीन माग्रयणा द्ग्रहा न्गृह्णीया- त्तानुपाꣳशु गृह्णीया,द्यानूर्ध्वाꣳ- स्तानुपब्दिमतो, देवा.नेव तद्देवयशसे.नार्पयति- मनुष्या न्मनुष्ययशसेन, देवयशस्येव देवेषु भवति- मनुष्ययशसी मनुष्ये, 卐ष्वग्निः प्रातस्सवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः। स नः पावको द्रविण न्दधातु।। 26।।❀ आयुष्मन्त स्सहभक्षा स्स्याम।।

卐 विश्वे देवा मरुत इन्द्रो अस्मा नस्मि न्द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषाँ वदन्तो वय न्देवानाꣳ सुमतौ स्याम।।

卐 इद न्तृतीयꣳ सवन ङ्कवीना मृतेन ये चमस मैरयन्त। ते सौधन्वना स्सुव रानशाना स्स्विष्टिन्नो अभि वसीयो नयन्तु।।

आयतनवती र्वा अन्या आहुतयो हूयन्ते-ऽनायतना अन्या, या आघारवती-स्ता आयतनवती,र्याः।। 27।।❀ सौम्या- स्ता अनायतना, ऐन्द्रवायव मादायाऽऽघार मा घारये, 卐दध्वरो यज्ञोऽय.मस्तु देवा- ओषधीभ्यः पशवे नो जनाय- विश्वस्मै भूतायाध्वरोऽसि- स पिन्वस्व घृतव.द्देव सोमे-ति, सौम्या एव तदाहुती रायतनवतीः करो-त्यायतनवा.न्भवति- यँ एवँ वेदा,ऽथो द्यावापृथिवी एव घृतेन व्युनत्ति- ते व्युत्ते उपजीवनीये भवत, उपजीवनीयो भवति-।। 28।।❀ यँ एवँ वे, 卐दैष ते रुद्र भागो- य.न्निरयाचथा- स्तञ्जुषस्व, विदे गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ सँवथ्सरीणाꣳ स्वस्तिम्।।

मनुः पुत्रेभ्यो दायँ व्यभज-थ्स नाभानेदिष्ठं ब्रह्मचर्यँ वसन्त न्निरभज,थ्स आऽगच्छ- थ्सोऽब्रवी-त्कथा मा निरभा.गिति- न त्वा निरभाक्ष मित्यब्रवी,दङ्गिरस इमे सत्र मासते- ते।। 29।।❀ सुवर्गँ लोक न्न प्र जानन्ति- तेभ्य इदं ब्राह्मणं ब्रूहि, ते सुवर्गँ लोकँ यन्तो- य एषां पशव- स्ताꣳ स्ते दास्यन्तीति, तदेभ्योऽब्रवी- त्ते सुवर्गँ लोकँ यन्तो- य एषां पशव आस-न्ता.नस्मा अददु,स्तं पशुभि श्चरन्तँ यज्ञवास्तौ रुद्र आऽगच्छ,थ्सोऽब्रवी- न्मम वा इमे पशव इत्यदुर्वै,।। 30।।❀ मह्य मिमा नि.त्यब्रवी,न्न वै तस्य त ईशत इत्यब्रवी,द्यद्यज्ञवास्तौ हीयते- मम वै त.दिति, तस्मा.द्यज्ञवास्तु नाभ्यवेत्यꣳ, सोऽब्रवी- द्यज्ञे माऽऽभजा-ऽथ ते पशू.न्नाभि मꣳस्य इति, तस्मा एतं मन्थिन स्सꣳस्राव मजुहो-त्ततो वै तस्य रुद्रः पशू

न्नाभ्यमन्यत, यत्रैत मेवँ विद्वा न्मन्थिन स्सꣳस्राव.ञ्जुहोति- न तत्र रुद्रः पशू नभि मन्यते।। 31।। (दधात्वायतनवतीर्या उपजीवनीयो भवति तेऽदुर्वै यत्रैत मेकादश च। 9।)

❀卐 जुष्टो वाचो भूयास ञ्जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुम त्तस्मिन्मा धास्स्वाहा सरस्वत्यै।।

卐 ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम्। बृह द्गायत्रवर्तनि।।

卐 यस्ते द्रप्स स्स्कन्दति यस्ते अꣳशु र्बाहुच्युतो धिषणयो रुपस्थात्। अध्वर्यो र्वा परि यस्ते पवित्रा थ्स्वाहाकृत मिन्द्राय तञ्जुहोमि।।

卐 यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात्।। 32।।❀ पुरोडाशा त्करम्भात्। धानासोमा न्मन्थिन इन्द्र शुक्रा थ्स्वाहाकृत मिन्द्राय तञ्जुहोमि।।

卐 यस्ते द्रप्सो मधुमाꣳ इन्द्रियावा न्थ्स्वाहाकृतः पुनरप्येति देवान्। दिवः पृथिव्याः पर्यन्तरिक्षा थ्स्वाहाकृत मिन्द्राय तञ्जुहोमि।।

अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते- तेन स्तोमो योक्तव्य इत्याहु, 卐वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणा न्पशुषु प्रजां मयि।। 3।।❀ च यजमाने चे-त्याह, वाच.मेव तद्यज्ञमुखे युनक्ति, वास्तु वा एत.द्यज्ञस्य क्रियते- यद्ग्रहा न्गृहीत्वा बहिष्पवमानꣳ सर्पन्ति, पराञ्चो हि यन्ति- पराचीभि स्स्तुवते, वैष्णव्यर्चा पुन.रेत्योप तिष्ठते- यज्ञो वै विष्णु- र्यज्ञ मेवाक-

卐र्विष्णो त्वन्नो अन्तम श्शर्म यच्छ सहन्त्य। प्र ते धारा मधुश्चुत उथ्स न्दुह्रते अक्षित - मित्याह, यदेवास्य शयान.स्योपशुष्यति- तदेवास्यैतेना ऽऽप्याययति।। 34।। (परिवापा त्प्रजां मयि दुह्रते चतुर्दश च। 10।)

### वै।का।12 याज्या: 16 (एकोनुवाक: 1)

❀卐अग्निना रयि मश्नव त्पोषमेव दिवेदिवे। यशसँ वीरवत्तमम्।।

卐 गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवथ्सखा सदमि दप्रमृष्यः। इडावाꣳ एषो असुर प्रजावा न्दीर्घो रयिः पृथुबुध्न स्सभावान्।।

卐 आ प्यायस्व[64]❀ 卐सन्ते[65]❀।।

卐 इह त्वष्टार मग्रियँ विश्वरूप मुप ह्वये। अस्माक मस्तु केवलः।।

64

65

卐 तन्न स्तुरीप मध पोषयित्नु देव त्वष्ट विं रराण स्स्यस्व। यतो वीरः।। 35।। ❀ कर्मण्य स्सुदक्षो युक्तग्रावा जायते देवकामः।।

卐 शिव स्त्वष्ट रिहाऽऽगहि विभुः पोष उत त्मना। यज्ञेयज्ञे न उदव।।

卐 पिशङ्गरूप स्सुभरो वयोधा श्श्रुष्टी वीरो जायते देवकामः। प्रजा न्त्वष्टा विष्यतु नाभि मस्मे अथा देवाना मप्येतु पाथः।।

卐 प्रणो दे[66]❀ 卐व्या नो दिवः[67]❀।

卐 पीपिवाꣳसꣳ सरस्वत स्स्तनँ यो विश्वदर्शतः। धुक्षीमहि प्रजामिषम्।। 36।।

❀卐ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः। तेषान्ते सुम्नमीमहे।।

卐 यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रत मुपतिष्ठन्त आपः। यस्य व्रते पुष्टिपति र्निविष्ट स्तꣳ सरस्वन्त मवसे हुवेम।।

卐 दिव्यꣳ सुपर्णँ वयसं बृहन्त मपा ङ्गर्भँ वृषभ मोषधीनाम्। अभीपतो वृष्ट्या तर्पयन्त न्तꣳ सरस्वन्त मवसे हुवेम।।

卐 सिनीवालि पृथुष्टुके या देवाना मसि स्वसा। जुषस्व हव्यम्।। 37।। ❀ आहुतं प्रजा न्देवि दिदिड्ढि नः।।

卐 या सुपाणि स्स्वङ्गुरि स्सुषूमा बहुसूवरी। तस्यै विश्पत्नियै हवि स्सिनीवाल्यै जुहोतन।।

卐 इन्द्रँ वो विश्वतस्प[68]❀ 卐रीन्द्रन्नरः[69]❀।

卐 असितवर्णा हरय स्सुपर्णा मिहो वसाना दिव मुत्पतन्ति। त आऽववृत्र'2' न्थ्सदनानि कृत्वाऽऽदि त्पृथिवी घृतै र्व्युद्यते।।

卐 हिरण्यकेशो रजसो विसारेऽहि र्धुनि र्वात इव ध्रजीमान्। शुचिभ्राजा उषसः।। 38।। ❀ नवेदा यशस्वती रपस्युवो न सत्याः।।

卐 आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम्। शिवाभिर्न स्मयमानाभि राऽगा त्पतन्ति मिह स्स्तनयन्त्यभ्रा।।

卐 वाश्रेव विद्युन्मिमाति वथ्सन्न माता सिषक्ति। यदेषाँ वृष्टि रसर्जि।।

66

67

68

69

卐 पर्वत श्चिन्महि वृद्धो बिभाय दिव श्चिथ्सानु रेजत स्वने वः। यत्क्रीडथ मरुतः।। 39।। ❀ ऋष्टिमन्त आप इव सध्रियञ्चो धवध्वे।।

卐 अभि क्रन्द स्तनय गर्भ मा धा उदन्वता परि दीया रथेन। दृति॰ सु कर्ष विषित न्यञ्च॰ समा भवन्तूद्वता निपादाः।।

卐 त्वन्त्या चिदच्युताऽग्ने पशुर्न यवसे। धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः।।

卐 अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम। याश्च।। 40।। ❀ माया मायिनाँ विश्वमिन्व त्वे पूर्वी स्सन्दधुः पृष्टबन्धो।।

卐 दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः। अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्च न्नसुरः पिता नः।।

卐 पिन्वन्त्यपो मरुत स्सुदानवः पयो घृतव द्विदथे ष्वाभुवः। अत्यन्न मिहे वि नयन्ति वाजिन मुथ्स न्दुहन्ति स्तनयन्त मक्षितम्।।

卐 उदप्रुतो मरुत स्ता॰ इयर्त वृष्टिम्।। 41।। ❀ ये विश्वे मरुतो जुनन्ति। क्रोशाति गर्दा कन्येव तुन्ना पेरु न्तुञ्जाना पत्येव जाया।।

卐 घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणुताऽऽप ओषधीः। ऊर्जञ्च तत्र सुमतिञ्च पिन्वथ यत्रा नरो मरुत स्सिञ्चथा मधु।।

卐 उदु त्य[70] ❁ 卐 चित्रम्[71] ❁।

卐 और्वभृगुव च्छुचि मप्नवानवदा हुवे। अग्नि॰ समुद्र वाससम्।।

卐 आ सव॰ सवितुर्यथा भगस्येव भुजि॰ हुवे। अग्नि॰ समुद्रवाससम्।।

卐 हुवे वातस्वनि ङ्कविं पर्जन्यक्रन्द्य॰ सहः। अग्नि॰ समुद्रवाससम्।।

(वीर इष॰ हव्य मुषसो मरुतश्च वृष्टिं भगस्य द्वादश च। 11।)

(प्रजापतिरकामयतैष ते गायत्रो यज्ञँ वै प्रजापते र्जायमानाः प्राजापत्या यो वा अयथादेवत मिष्टर्गो निग्राभ्यास्स्थ यो वै देवा न्जुष्टोऽग्निना रयि मेकादश। प्रजापति रकामयत प्रजापते र्जायमाना व्यायच्छन्ते मह्य मिमा न्माया मायिना न्द्विचत्वारि॰शत्। प्रजापति रकामयताग्नि॰ समुद्रवाससम्।)

70

71

**वै।का।11 औपानुवाक्य ब्राह्मणम्,मन्त्राश्च 2 (दशानुवाकाः 10)**

❀ यो वै पवमानाना मन्वारोहान् विद्वान् यजते-ऽनु पवमाना नारोहति- न पवमानेभ्योऽव च्छिद्यते, श्येनोऽसि गायत्रछन्दा अनु त्वाऽऽ रभे स्वस्ति मा सं पारय सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वा ऽऽरभे स्वस्ति मा सं पारय सघाऽसि जगतीछन्दा अनु त्वाऽऽरभे स्वस्ति मा सं पारये- त्या,हैते।। 1।। ❀ वै पवमानाना मन्वारोहा- स्तान् य एवँ विद्वान् यजते-ऽनु पवमाना नारोहति- न पवमानेभ्योऽवच्छिद्यते, यो वै पवमानस्य सन्ततिँ वेद- सर्व.मायु.रेति न पुराऽऽयुषः प्र मीयते- पशुमा.न्भवति- विन्दते प्रजां, पवमानस्य ग्रहा गृह्यन्ते,ऽथ वा अस्यैतेऽगृहीता- द्रोणकलश आधवनीयः पूतभृ-त्तान् यदगृहीत्वोपाऽऽकुर्या- त्पवमानँ वि।। 2।। ❀ छिन्द्या,त्तँ विच्छिद्यमान- मध्वर्योः प्राणोऽनु वि च्छिद्ये, उपयामगृहीतोऽसि प्रजापतये त्वे-ति द्रोणकलश मभि मृशे --दिन्द्राय त्वे- त्याधवनीयँ --विश्वेभ्यस्त्वा देवेभ्य- इति पूतभृतं, पवमान मेव तथ्स.न्तनोति- सर्व.मायु.रेति- न पुराऽऽयुषः प्र मीयते- पशुमा.न्भवति- विन्दते प्रजाम्।। 3।। (एते वि द्विचत्वारिँशच्च। 1।)

❀ त्रीणि वाव सवना,न्यथ तृतीयँ सवन मव लुम्प-न्त्यनँशु कुर्वन्त, उपाँशुँ हु.त्वोपाँशुपात्रेऽँशु मवास्य- तन्तृतीयसवने ऽपिसृज्याभिषुणुया,द्य.दाप्याययति- तेनाँशुम,द्यदभिषुणोति- तेनर्जीषि, सर्वाण्येव तथ्सवना.न्यँशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोति,

द्वौ समुद्रौ वितता वजूर्यौ पर्यवर्तेते जठरेव पादाः। तयोः पश्यन्तो अति यन्त्यन्य मपश्यन्तः।। 4।। ❀ सेतुनाऽति यन्त्यन्यम्।।

द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान्। तिरोधायैत्यसितँ वसान श्शुक्रमा दत्ते अनुहाय जार्यै।।

देवा वै यद्यज्ञेऽकुर्वत- तदसुरा अकुर्वत, ते देवा एतं महायज्ञ मपश्य- न्तमतन्वता-ऽग्निहोत्रँ व्रत मकुर्वत, तस्मा.द्विव्रत स्स्या,द्विर्ह्यग्निहोत्र ञ्जुह्वति, पौर्णमासँ यज्ञ- मग्नीषोमीयम्।। 5।। ❀ पशु मकुर्वत, दार्श्यँ यज्ञ- माग्नेयं पशु मकुर्वत- वैश्वदेवं प्रातस्सवन मकुर्वत, वरुणप्रघासा न्माध्यन्दिनँ सवनँ, साकमेधा न्पितृयज्ञ न्त्र्यम्बकाँ स्तृतीयसवन मकुर्वत, तमेषा मसुरा यज्ञ मन्ववाजिगाँस-

न्तन्नान्वविाय, न्तेऽब्रुव- न्नध्वर्तव्या वा इमे देवा अभूव.न्निति, तदध्वरस्याध्वरत्व, न्ततो देवा अभव-न्पराऽसुरा, य एवँ विद्वा.न्थ्सोमेन यजते- भव.त्यात्मना- पराऽस्य भ्रातृव्यो भवति।। 6।। (अपश्यन्तोऽग्नीषोमीय मात्मना परा त्रीणि च। 2।)

❀卐परिभू रग्निं- परिभू रिन्द्रं- परिभू र्विश्वा न्देवा- न्परिभू र्मा॰ सह ब्रह्मवर्चसेन, स नः पवस्व- शङ्गवे- शञ्जनाय- शमर्वते- श॰ राज न्नोषधीभ्यो-ऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितार स्स्याम। तस्य मे रास्व- तस्य ते भक्षीय- तस्य त इद मुन्मृजे,। 卐प्राणाय मँ वर्चोदा वर्चसे पव 卐स्वापानाय- 卐व्यानाय- 卐 वाचे--।। 7।।❀卐दक्षक्रतुभ्या- 卐ञ्चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथा॰ 卐श्रोत्रा- 卐याऽऽत्मने- 卐ऽङ्गेभ्य 卐--आयुषे[72]- 卐वीर्याय--

卐विष्णो- 卐रिन्द्रस्य- 卐विश्वेषा न्देवाना- ञ्जठर मसि वर्चोदा मे वर्चसे पवस्व 卐कोऽसि को नाम कस्मै त्वा काय त्वा यन्त्वा सोमेनातीतृपँ यन्त्वा सोमेनामीमद॰ सुप्रजाः प्रजया भूयास॰ सुवीरो वीरै स्सुवर्चा वर्चसा सुपोषः पोषै 卐र्विश्वेभ्यो मे रूपेभ्यो वर्चोदाः।। 8।।❀ वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इद मुन्मृजे।

बुभूष न्नवेक्षे-तैष वै पात्रियः प्रजापति र्यज्ञः- प्रजापति स्तमेव तर्पयति- स एन न्तृप्तो भूत्याऽभि पवते, ब्रह्मवर्चसकामोऽवेक्षे-तैष वै पात्रियः प्रजापति र्यज्ञः- प्रजापति स्तमेव तर्पयति- स एन.न्तृप्तो ब्रह्मवर्चसेनाभि पवत, आमयावी।। 9।।❀ अवेक्षे-तैष वै पात्रियः प्रजापति र्यज्ञः- प्रजापति स्तमेव तर्पयति- स एन न्तृप्त आयुषाऽभि पवते,ऽभिचर न्नवेक्षे-तैष वै पात्रियः प्रजापति र्यज्ञः- प्रजापति स्तमेव तर्पयति- स एन.न्तृप्तः प्राणापानाभ्याँ वाचो दक्षक्रतुभ्या ञ्चक्षुर्भ्या॰ श्रोत्राभ्या मात्मनोऽङ्गेभ्य आयुषोऽन्तरेति, ताजक्प्र धन्वति।। 10।। (वाचे रूपेभ्यो वर्चोदा आमयावी पञ्चचत्वारि॰शच्च। 3।)

❀卐स्फ्य स्स्वस्ति र्विघन स्स्वस्तिः पर्शु र्वेदिः परशुर्न स्स्वस्तिः। यज्ञिया यज्ञकृत स्स्थ ते माऽस्मिन् यज्ञ उप ह्वयध्व 卐मुप मा द्यावापृथिवी ह्वयेता 卐मुपाऽऽस्तावः- 卐--कलश- 卐--स्सोमो- 卐--अग्नि- 卐--रुप देवा- 卐उप यज्ञ- 卐उप- माँ होत्रा उपहवे ह्वयन्ता 卐न्नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्या- दित्याहवनीय मुप तिष्ठते, यज्ञो वै मखः-।। 11।।❀ यज्ञँ वाव स तदह- न्तस्मा एव नमस्कृत्य सदः प्र सर्प-त्यात्मनोऽनार्त्यै, 卐नमो रुद्राय मखघ्ने नमस्कृत्या मा पाही-त्याग्नीध्र, न्तस्मा एव नमस्कृत्य सदः प्र सर्प-त्यात्मनोऽनार्त्यै, 卐नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधी- रिति

[72] प्रतिष्ठायै

होत्रीय माशिष मेवैतामा शास्त- इन्द्रियस्य वीर्यस्यानिर्घाताय, या वै।। 12।।❀ देवता स्सदस्यार्ति
माऽर्पयन्ति- यस्ता विद्वा न्प्रसर्पति- न सदस्यार्ति मार्च्छति, नमोऽग्नये मखघ्न इत्या-हैता वै देवता
स्सदस्यार्ति माऽर्पयन्ति- ता य एवँ विद्वा न्प्रसर्पति- न सदस्यार्ति मार्च्छति, ꖛदृढे स्थ शिथिरे समीची
माऽꣳहस.स्पातꣳ ꖛसूर्यो मा देवो दिव्या दꣳहस स्पातु ꖛवायु रन्तरिक्षात्।। 13।।❀ꖛअग्निः
पृथिव्या- ꖛयमः पितृभ्य- ꖛस्सरस्वती मनुष्येभ्यो- ꖛदेवी द्वारौ मा मा सन्ताप्त ꖛन्नम स्सदसे ꖛनम
स्सदस स्पतये ꖛनम स्सखीनां पुरोगाणा ञ्चक्षुषे ꖛनमो दिवे ꖛनमः पृथिव्या ꖛअहे दैधिषव्योदत
स्तिष्ठान्यस्य सदने सीद योऽस्म त्पाकतर ꖛउन्निवत उदुद्वतश्च गेषं ꖛपातं मा द्यावापृथिवी अद्याह्न,-
स्सदो वै प्रसर्पन्तम्।। 14।।❀ पितरोऽनु प्र सर्पन्ति- त एन मीश्वरा हिꣳसितो, स्सदः प्रसृप्य
दक्षिणार्धं परेक्षेता ꖛऽऽगन्त पितरः पितृमा.नहँ युष्माभि र्भूयासꣳ- सुप्रजसो मया यूयं भूयास्ते-ति,
तेभ्य एव नमस्कृत्य सदः प्र सर्प-त्यात्मनोऽनार्त्यै।। 15।। (मखो वा अन्तरिक्षा त्प्रसर्पन्त
न्त्रयस्त्रिꣳशच्च। 4।)

❀ꖛभक्षेऽऽहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वा,येहि वसो पुरोवसो
प्रियो मे हृदो ꖛऽस्यश्विनोस्त्वा बाहुभ्याꣳ सघ्यास ꖛन्नृचक्षसन्त्वा देव सोम सुचक्षा अव ख्येषं
ꖛमन्द्राऽभिभूतिः केतु र्यज्ञानाँ वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदिति रनाहतशीर्ष्णी
वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे।। 16।।❀ शम्भू र्मयोभू स्स्वस्ति मा हरिवर्ण प्र चर क्रत्वे
दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन्विबीभिषो मा मे हार्दि त्विषा वधीः। वृषणे शुष्मायाऽऽयुषे
वर्चसे। वसुमद्गणस्य सोम देव ते मतिविदः प्रातस्सवनस्य गायत्रछन्दस इन्द्रपीतस्य- ꖛ--
नराशꣳसपीतस्य- पितृपीतस्य मधुमत उपहूत स्योपहूतो भक्षयामि (2) ꖛ--रुद्रवद्गणस्य सोम देव ते
मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य ꖛ--नराशꣳसपीतस्य।। 17।।❀
पितृपीतस्य मधुमत उपहूत स्योपहूतो भक्षया(2) ꖛ--म्यादित्यवद्गणस्य सोम देव ते मतिविद
स्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य- ꖛ-- नराशꣳसपीतस्य- पितृपीतस्य मधुमत उपहूत
स्योपहूतो भक्षयामि।। (2)

ꖛ आ प्यायस्व समेतु ते विश्वत स्सोम वृष्णियम्। भवा वाजस्य सङ्गथे।।

ꖛ हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृषः। शिवो मे सप्तर्षी नुप तिष्ठस्व मा मेऽवाङ्नाभि मति।।
18।।❀ गाः।।

卐 अपाम सोम ममृता अभूमादश्मं ज्योति रविदाम देवान्। किमस्मा न्कृणव दराति॰ किमु धूर्ति रमृत मर्त्यस्य।।

卐 यन्म आत्मनो मिन्दाऽभू दग्नि स्तत्पुन राऽहा जातवेदा विचर्षणिः।।

卐 पुन रग्नि श्चक्षु रदात्पुन रिन्द्रो बृहस्पतिः। पुनर्मे अश्विना युव ञ्चक्षु रा धत्त मक्ष्योः।।

卐 इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य।। 19।।❀ शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि।

卐आपूर्या स्थाऽऽमा पूरयत प्रजया च धनेन च।।

卐 एतत्ते- तत- ये च त्वा म 卐न्वे तत्ते पितामह- 卐--प्रपितामह- ये च त्वाम 卐न्वत्र पितरो यथाभागं मन्दध्व 卐न्नमो व॰ पितरो रसाय- 卐नमो व॰ पितर श्शुष्माय- 卐नमो व॰ पितरो जीवाय- 卐नमो व॰ पितरः।। 20।।❀ स्वधायै- 卐नमो व॰ पितरो मन्यवे- 卐नमो व॰ पितरो घोराय-- पितरो नमो वो, य एतस्मि न्लोके स्थ- युष्मा॰ स्तेऽनु, येऽस्मिन्लोके- मान्तेऽनु, य एतस्मिन्लोके स्थ- यूय न्तेषाँ वसिष्ठा भूयास्त, येऽस्मिन्लोके-ऽह न्तेषाँ वसिष्ठो भूयासं,

卐 प्रजापते न त्वदेता न्यन्यो विश्वा जातानि परि ता बभूव।। 21।।❀ यत्कामास्ते जुहुम स्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्।।

卐 देवकृत.स्यैनसोऽवयजन मसि 卐मनुष्यकृत.स्यैनसोऽवयजन मसि 卐पितृकृतस्यैनसोऽवयजन म 卐स्यप्सु धौतस्य सोम देव ते नृभि स्सुतस्येष्टयजुष स्स्तुतस्तोमस्य शस्तोक्थस्य, यो भक्षो अश्वसनि र्यो गोसनि- स्तस्य ते पितृभि र्भक्षङ्कृतस्योपहूत स्योपहूतो भक्षयामि।। 22।। (विश्वचर्षणे त्रिष्टुप्छन्दस इन्द्रपीतस्य नराश॰सपीतस्याति स्तुतस्तोमस्य जीवाय नमो व॰ पितरो बभूव चतुश्चत्वारि॰शच्च। 5।)

❀卐महीनां पयोऽसि- विश्वेषा न्देवाना न्तनूर्- ऋध्यास मद्य- पृषतीना ङ्ग्रहं- पृषतीना ङ्ग्रहोऽसि- विष्णोर् हृदय म-स्येक मिष विष्णुस्त्वाऽनु वि चक्रमे- भूति र्दध्ना घृतेन वर्धता- न्तस्य मेष्टस्य वीतस्य द्रविण मा गम्या- ज्ज्योतिरसि वैश्वानरं- पृश्न्यियै दुग्धँ

卐यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः। तावन्त मिन्द्र ते।। 23।।❀ ग्रह॰ सहोर्जा गृह्णा म्यस्तृतम्।

यत्कृष्णशकुन॰ पृषदाज्य मवमृशे- च्छूद्रा अस्य प्रमायुकास्स्यु, र्यच्छ्वाऽवमृशे- च्चतुष्पादोऽस्य पशव॰ प्रमायुका स्स्यु, र्यथ्स्कन्दे- द्यजमान॰ प्रमायुकस्स्या,त्पशवो वै पृषदाज्यं- पशवो वा एतस्य स्कन्दन्ति-

यस्य पृषदाज्यꣳ स्कन्दति, यत्पृषदाज्यं पुन.र्गृह्णाति- पशू.नेवास्मै पुन.र्गृह्णाति, प्राणो वै पृषदाज्यं- प्राणो वै।। 24।। ❀ एतस्य स्कन्दति- यस्य पृषदाज्यꣳ स्कन्दति, यत्पृषदाज्यं पुन.र्गृह्णाति- प्राण मेवास्मै पुन.र्गृह्णाति, हिरण्य मवधाय गृह्णा-त्यमृतँ वै हिरण्यं- प्राणꣳ पृषदाज्य- ममृत मेवास्य प्राणे दधाति, शतमानं भवति- शताऽयुꣳ पुरुष श्शतेन्द्रिय- आयुष्येवेन्द्रिये प्रति तिष्ठ,त्यश्व मव घ्रापयति- प्राजापत्यो वा अश्वꣳ- प्राजापत्यꣳ प्राण- स्स्वा देवास्मै योनेꣳ प्राण न्निर्मिमीते, वि वा एतस्य यज्ञ श्छिद्यते- यस्य पृषदाज्यꣳ स्कन्दति, 卐वैष्णव्यर्चा[73]❀ पुन.र्गृह्णाति- यज्ञो वै विष्णु- र्यज्ञेनैव यज्ञꣳ सन्तनोति।। 25।। (ते पृषदाज्यं प्राणो वै योनेꣳ प्राण न्द्वाविꣳशतिश्च। 6।)

❀❀卐देव सवित रेतत्ते प्राऽह- तत्प्र च सुव- प्र च यज, बृहस्पति र्ब्रह्माऽयुष्मत्या ऋचो मा गात- तनूपा थ्साम्न, स्सत्या व आशिष स्सन्तु- सत्या आकूतय, ऋतञ्च सत्यञ्च वदत, स्तुत देवस्य सवितुꣳ प्रसवे,

卐स्तुतस्य स्तुत म-स्यूर्जं मह्यꣳ स्तुत न्दुहा- मा मा स्तुतस्य स्तुत ङ्गम्या--

卐च्छस्त्रस्य शस्त्रम्।। 26।। ❀ अ-स्यूर्जं मह्यꣳ शस्त्रन्दुहा-मा मा शस्त्रस्य शस्त्र.ङ्गम्या- दिन्द्रियावन्तो वनामहे धुक्षीमहि प्रजा.मिषम्। सा मे सत्याऽशी र्देवेषु भूया द्ब्रह्मवर्चसं मा गम्यात्।।

यज्ञो बभूव- स आ बभूव- स प्र जज्ञे- स वावृधे। स देवाना मधिपति र्बभूव- सो अस्माꣳ अधिपती न्करोतु- वयꣳ स्याम पतयो रयीणाम्।।

यज्ञो वा वै।। 27।। ❀ यज्ञपति न्दुहे- यज्ञपति र्वा यज्ञ.न्दुहे- स य स्स्तुतशस्त्रयो र्दोह मविद्वान् यजते- तँ यज्ञो दुहे- स इष्ट्वा पापीया.न्भवति, य एनयो र्दोहँ विद्वान् यजते- स यज्ञ न्दुहे- स इष्ट्वा वसीया.न्भवति, स्तुतस्य स्तुत म-स्यूर्जं मह्यꣳ स्तुतन्दुहा-मा मा स्तुतस्य स्तुत ङ्गम्या,च्छस्त्रस्य शस्त्र म-स्यूर्जं मह्यꣳ शस्त्र.न्दुहा-मा मा शस्त्रस्य शस्त्रङ्गम्या दित्या,हैष वै स्तुतशस्त्रयो र्दोह- स्तँ य एवँ विद्वान् यजते- दुह एव यज्ञ मिष्ट्वा वसीया.न्भवति।। 28।। (शस्त्रँ वै शस्त्र.न्दुहा न्द्वाविꣳशतिश्च। 7।)

❀❀卐श्येनाय पत्वने स्वाहा 卐वट्थ्स्वयमभिगूर्ताय नमो 卐विष्टम्भाय धर्मणे स्वाहा 卐वट्थ्स्वयमभिगूर्ताय नमꣳ 卐परिधये जनप्रथनाय स्वाहा 卐वट्थ्स्वयमभिगूर्ताय नम 卐ऊर्जे होत्राणाꣳ स्वाहा 卐वट्थ्स्वयमभिगूर्ताय नमꣳ 卐पयसे होत्राणाꣳ स्वाहा 卐वट्थ्स्वयमभिगूर्ताय नमꣳ

73

卐प्रजापतये मनवे स्वाहा 卐वट्थ्स्वय मभिगूर्ताय नम 卐ऋत मृतपा स्सुववाट्थ्स्वाहा 卐वट्थ्स्वयमभिगूर्ताय नम 卐स्तृम्पन्ता॰ होत्रा मधो घृतस्य

卐यज्ञपति मृषय एनसा।। 29।।❀ आहुः। प्रजा निर्भक्ता अनुतप्यमाना- मधव्यौ स्तोका वप तौ रराध। सन्न स्ताभ्या॰ सृजतु विश्वकर्मा

卐घोरा ऋषयो नमो अस्त्वेभ्यः। चक्षुष एषां मनसश्च सन्धौ- बृहस्पतये महिषद्यु मन्नमः। नमो विश्वकर्मणे स उ पात्वस्मा-

卐ननन्यान्थ्सोम पान्मन्यमानः। प्राणस्य विद्वान्थ्समरे न धीर एन श्चकृवान्महि बद्ध एषाम्। तँ विश्वकर्मन्न्।। 30।।❀ प्र मुञ्चा स्वस्तये

卐ये भक्षयन्तो न वसून्यानृहुः। यानग्नयोऽन्वतप्यन्त धिष्णिया इयन्तेषा मवया दुरिष्ट्यै स्विष्टिन्न स्ताङ्कृणोतु विश्वकर्मा।।

卐 नमः पितृभ्यो अभि ये नो अख्यन् यज्ञकृतो यज्ञकामा स्सुदेवा अकामा वो दक्षिणा न्न नीनिम मा न स्तस्मा देनसः पापयिष्ट।।

यावन्तो वै सदस्या- स्ते सर्वे दक्षिण्या, स्तेभ्यो यो दक्षिणा.न्न।। 31।।❀ नये-दैभ्यो वृश्च्येत, यद्वैश्वकर्मणानि जुहोति- सदस्या.नेव तत्प्रीणा-

卐त्यस्मे देवासो वपुषे चिकित्थ्सत यमाशिरा दम्पती वाम मश्नुतः। पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः।।

卐 आशीर्दाया दम्पती वाम मश्नुता मरिष्टो राय स्सचता॰ समोकसा। य आऽसिच थ्सन्दुग्ध ङ्कुम्भ्या सहेष्टेन यामन्नमति ञ्जहातु सः।।

卐 सर्पिर्ग्रीवी।। 32।।❀ पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य। सहजानि र्य स्सुमखस्यमान इन्द्रायाऽऽशिर॰ सह कुम्भ्याऽदात्।।

卐 आशीर्म ऊर्ज मुत सुप्रजास्त्व मिष न्दधातु द्रविण॰ सवर्चसम्। सञ्जयन्क्षेत्राणि सहसाऽह मिन्द्र कृण्वानो अन्या॰ अधरा न्थ्सपत्नान्।।

卐 भूतमसि भूते मा धा मुखमसि मुखं भूयास

卐न्द्यावापृथिवीभ्यान्त्वा परि गृह्णामि 卐विश्वे त्वा देवा वैश्वानराः।। 33।।❀ प्र च्यावयन्तु दिवि देवा न्दृ॰हान्तरिक्षे वया॰सि पृथिव्यां पार्थिवा

फ्रन्ध्रुव न्ध्रुवेण हविषाऽव सोम न्नयामसि। यथा न स्सर्व मिज्जगद यक्ष्म॰ सुमना असत्। यथा न इन्द्र इद्विश॰ केवली स्सर्वा स्समनसः करत्। यथा न स्सर्वा इद्दिशोऽस्माकङ्केवली रसन्न्।। 34।। (एनसा विश्वकर्मन् यो दक्षिणान्न सर्पिर्ग्रीवी वैश्वानरा श्चत्वारि॰शच्च। 8।)

❀ यद्वै होताऽध्वर्यु मभ्याह्वयते- वज्र.मेन मभि प्र वर्तय- फ्रत्युक्थशा - इत्याह- प्रातस्सवनं प्रतिगीर्य- त्रीण्येता.न्यक्षराणि- त्रिपदा गायत्री- गायत्रं प्रातस्सवन-ङ्गायत्रियैव प्रातस्सवने वज्र मन्त.र्धत्त, फ्रउक्थँ वाची.त्याह- माध्यन्दिन॰ सवनं प्रतिगीर्य, चत्वार्येता.न्यक्षराणि- चतुष्पदा त्रिष्टु-ब्त्रैष्टुभं माध्यन्दिन॰ सवन- न्त्रिष्टुभैव माध्यन्दिने सवने वज्र मन्त.र्धत्ते,।। 35।। ❀फ्रउक्थँ वाचीन्द्राये.त्याह- तृतीयसवनं प्रतिगीर्य, सप्तैता.न्यक्षराणि- सप्तपदा शक्वरी- शाक्वरो वज्रो- वज्रेणैव तृतीयसवने वज्र मन्त.र्धत्ते, ब्रह्मवादिनो वदन्ति- स त्वा अध्वर्यु.स्स्या- द्यो यथासवनं प्रतिगरे छन्दा॰सि सम्पादये- त्तेज॰ प्रातस्सवन आत्म न्दधी-तेन्द्रियं माध्यन्दिने सवने- पशू॰ स्तृतीयसवन इ,त्युक्थशा इत्याह प्रातस्सवनं प्रतिगीर्य, त्रीण्येता.न्यक्षराणि-।। 36।। ❀ त्रिपदा गायत्री- गायत्रं प्रातस्सवनं- प्रातस्सवन एव प्रतिगरे छन्दा॰सि सं पादय,त्यथो तेजो वै गायत्री- तेज॰ प्रातस्सवन- न्तेज एव प्रातस्सवन आत्म न्धत्त, -उक्थँ वाचीत्याह माध्यन्दिन॰ सवनं प्रतिगीर्य, चत्वार्येता.न्यक्षराणि- चतुष्पदा त्रिष्टु-ब्त्रैष्टुभं माध्यन्दिन॰ सवनं- माध्यन्दिन एव सवने प्रतिगरे छन्दा॰सि सं पादय,त्यथो इन्द्रियँ वै त्रिष्टु- गिन्द्रियं माध्यन्दिन॰ सवनम्-।। 37।। ❀ इन्द्रियमेव माध्यन्दिने सवन आत्म न्धत्त, -उक्थँ वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य, सप्तैता.न्यक्षराणि- सप्तपदा शक्वरी- शाक्वरा॰ पशवो- जागत न्तृतीयसवन- न्तृतीयसवन एव प्रतिगरे छन्दा॰सि सं पादय,त्यथो पशवो वै जगती- पशव स्तृतीयसवनं- पशू.नेव तृतीयसवन आत्म न्धत्ते, यद्वै होताऽध्वर्यु मभ्याह्वयत- आव्य मस्मि न्दधाति, तद्यन्न।। 38।। ❀ अपहनीत- पुराऽस्य सँवथ्सरा द्गृह आ वेवीर, फ्रञ्छो॰सा मोद इवे- ति प्रत्याह्वयते- तेनैव तदप हते, यथा वा आयतां प्रतीक्षत- एव मध्वर्यु॰ प्रतिगरं प्रतीक्षते, यदभिप्रतिगृणीया- द्यथाऽऽयतया समृच्छते- तादृगेव त,द्यदर्धर्चा ल्लुप्येत- यथा धावद्भ्यो हीयते- तादृगेव त,त्प्रबाहुग्वा ऋत्विजा मुद्गीथा- उद्गीथ एवोद्गातृणाम्-।। 39।। ❀ ऋच॰ प्रणव उक्थश॰सिनां- प्रतिगरोऽध्वर्यूणाँ, य एवँ विद्वा न्प्रतिगृणा- त्यन्नाद एव भव-त्याऽस्य प्रजायाँ वाजी जायत, इयँ वै होताऽसा.वध्वर्यु,र्यदासीन श्श॰स- त्यस्या एव तद्धोता नै-त्यास्त इव हीय-मथो इमा मेव तेन यजमानो दुहे, यत्तिष्ठ न्प्रतिगृणा- त्यमुष्या एव तदध्वर्यु.र्नैति,।। 40।। ❀ तिष्ठतीव ह्यसा-वथो अमूमेव तेन यजमानो दुहे, यदासीन श्श॰सति- तस्मा

दि॒तः॒प्रदा॑न न्दे॒वा उप॑ जीवन्ति॒, यत्तिष्ठ॑ न्प्रतिगृ॒णाति॒- तस्मा॑ द॒मुतः॒प्रदा॑नं मनु॒ष्या॑ उप॑ जीवन्ति॒, यत्प्राङासी॑न॒ श्शꣳस॑ति- प्र॒त्य ङ्ति॑ष्ठ न्प्रतिगृ॒णाति॒- तस्मा॑त्प्रा॒चीन॒ꣳ॒ रेतो॑ धीयते- प्र॒तीची॑ः प्र॒जा जाय॑न्ते, यद्वै होता॑ऽध्व॒र्यु म॒भ्याह्वय॑ते- वज्र॒.मेन म॒भि प्र व॑र्तयति, परा.ङाव॑र्तते- वज्र॑मे॒व तन्नि क॑रोति।। 41।। (सव॑ने॒ वज्र म॒न्तर्ध॑त्ते॒ त्रीण्ये॒तान्य॒क्षरा॑णीन्द्रि॒यं माध्य॑न्दिन॒ꣳ॒ सव॑न॒ न्नोद्गा॒तृणा॑ म॒ध्वर्यु नै॑ति॒ वर्त॑य त्य॒ष्टौ च॑। 9।)

🕉❀卐उप॒या॒मगृ॑हीतोऽसि॒ वाक्ष॒स.द॑सि- वा॒क्पाभ्या॑न्त्वा क्र॒तु॒पाभ्या॑ म॒स्य य॒ज्ञस्य॑ ध्रु॒वस्या॒ध्य॑क्षाभ्या ङ्गृह्णा, 卐म्युपया॒मगृ॑हीतोऽस्यृत॒सद॑सि चक्षु॒ष्पाभ्या॑न्त्वा क्रतु॒पाभ्या॑ म॒स्य य॒ज्ञस्य॑ ध्रु॒वस्या॒ध्य॑क्षाभ्या.ङ्गृह्णा, 卐म्युपया॒मगृ॑हीतोऽसि श्रु॒त॒सद॑सि श्रोत्र॒पाभ्या॑न्त्वा क्रतु॒पाभ्या॑ म॒स्य य॒ज्ञस्य॑ ध्रु॒वस्या॒ध्य॑क्षाभ्या ङ्गृह्णामि, 卐दे॒वेभ्य॑स्त्वा 卐वि॒श्वदे॑वेभ्य स्त्वा॒ 卐विश्वे॑भ्यस्त्वा दे॒वेभ्यो॒ 卐विष्ण॑ वुरुक्रमै॒ष ते॒ सोम॒ स्तꣳ॒ रक्ष॑स्व।। 42।।❀ तन्ते॑ दु॒श्चक्षा॑ मा॒ऽव ख्य॑ 卐न्मयि॒ वसुः॒ पु॒रोवसु॒ र्वाक्पा वा॒चं मे पाहि॒ 卐मयि॒ वसु॒ र्वि॒दद्व॑सु श्च॒क्षु॒ष्पा श्च॒क्षुर्मे पाहि॒ 卐मयि॒ वसु॒ स्सँय॒द्व॑सु श्श्रोत्र॒पा श्श्रोत्रं॑ मे पाहि॒ 卐भूर॑सि॒ श्रेष्ठो॑ र॒श्मीनां॑ प्राण॒पाः॒ प्रा॒णं मे॑ पाहि॒ 卐धूर॑सि॒ श्रेष्ठो॑ र॒श्मीना॑ मपान॒पा अ॒पानं॑ मे पाहि॒ 卐यो न- इन्द्रवायू- 卐--मित्रावरुणा- 卐--वश्विना- ॒वभि॒दास॑ति॒ भ्रातृ॑व्य उ॒त्पिपी॑ते शुभस्पती इ॒द॒ म॒ह न्त॑मध॒रं पा॑दयामि॒ यथे॑न्द्रा॒ह मु॑त्त॒म श्चेत॑यानि।। 43।। (रक्ष॑स्व॒ भ्रातृ॑व्य॒ स्त्रयो॑दश च। 10।)

**वै।का।12 याज्या: 17 (एकोऽनुवाक: 1)**

🕉❀卐प्र सो अ॑ग्ने॒ तवो॒तिभि॑ स्सु॒वीरा॑भि स्तरति॒ वाज॑कर्मभिः। यस्य॒ त्वꣳ॒ स॒ख्य मावि॑थ।।

卐 प्र होत्रे॑ पू॒र्व्यँ वचो॒ऽग्नये॑ भरता बृ॒हत्। वि॒पा ज्योती॑ꣳषि॒ बिभ्र॑ते॒ न वे॒धसे॑।।

卐 अग्ने॒ त्री ते॒ वाजि॑ना॒ त्री ष॒धस्था॒ ति॒स्रस्ते॑ जि॒ह्वा ऋ॑तजात पू॒र्वीः। ति॒स्र उ॑ ते त॒नुवो॑ दे॒ववा॑ता॒ स्ताभि॑र्नः पाहि॒ गिरो॒ अप्र॑युच्छन्न्।।

卐 सँ वा॒ ङ्कर्म॑णा॒ समि॒षा।। 44।।❀ हि॒नोमीन्द्रा॑विष्णू॒ अप॑स॒ स्पा॒रे अ॒स्य। जु॒षेथाँ॑ य॒ज्ञ न्द्रवि॑णञ्च धत्त॒ मरि॑ष्टैर्नः प॒थिभिः॒ पा॒रय॑न्ता।।

卐 उ॒भा जि॑ग्यथु॒ र्न परा॑ जयेथे॒ न परा॑ जिग्ये कत॒रश्च॒ नैनोः॑। इन्द्र॑श्च विष्णो॒ यद॑पस्पृधेथा॒ न्त्रे॒धा स॒ह॒स्रँ॒ वि तदै॑रयेथाम्।।

卐 त्रीण्यायू॑ꣳषि॒ तव॑ जातवेद स्ति॒स्र आ॒जानी॑ रु॒षस॑स्ते अग्ने। ताभि॑ र्दे॒वाना॒ मवो॑ यक्षि वि॒द्वा न॑थ।। 45।।❀ भ॒व॒ यजमानाय॒ शँ योः।।

卐 अग्नि स्त्रीणि त्रिधातून्या क्षेति विदथा कविः। स त्रीꣳ रेकादशाꣳ इह।।

卐 यक्षच्च पिप्रयच्च नो विप्रो दूतꣳ परिष्कृतः। नभन्ता मन्यके समे।।

卐 इन्द्राविष्णू दृꣳहिता श्शम्बरस्य नव पुरो नवतिञ्च श्ञथिष्टम्। शतँ वर्चिन स्सहस्रञ्च साकꣳ हथो अप्रत्यसुरस्य वीरान्।।

卐 उत माता महिष मन्ववेन दमी त्वा जहति पुत्र देवाः। अथाब्रवीद्वृत्र मिन्द्रो हनिष्य '2' न्थ्सखे विष्णो वितरँ वि क्रमस्व।। 46।। (इषाऽथ त्वा त्रयोदश च। 11।)

(यो वै पवमानाना न्त्रीणि परिभू स्स्फ्य स्स्वस्ति र्भक्षेहि महीनां पयोऽसि देव सवित रेतत्ते श्येनाय यद्वै होतोपयामगृहीतोऽसि वाक्षसदसि प्र सो अग्न एकादश। यो वै स्फ्य स्स्वस्ति स्स्वधायै नमꣳ प्र मुञ्च तिष्ठतीव षड्चत्वारिꣳशत्। यो वै पवमानानाँ वि क्रमस्व।)

## ॐ ॐतृतीय काण्डे तृतीयꣳ प्रपाठकः

### वै.का.11 औपानुवाक्य ब्राह्मणम्,मन्त्राश्च 3 (दशानुवाका: 10)

卐 अग्ने तेजस्वि- न्तेजस्वी त्वन्देवेषु भूया- स्तेजस्वन्तं मा.मायुष्मन्तँ वर्चस्वन्तं मनुष्येषु कुरु, दीक्षायै च त्वा तपसश्च तेजसे जुहोमि, 卐तेजोविदसि- तेजो मा मा हासी- न्माऽहन्तेजो हासिषं- मामा न्तेजो हासी, 卐दिन्द्रौजस्वि- न्नोजस्वी त्वन्देवेषु भूया- ओजस्वन्तं मा.मायुष्मन्तँ वर्चस्वन्तं मनुष्येषु कुरु, ब्रह्मणश्चत्वा क्षत्रस्य च।। 1।। ओजसे जुहो 卐म्योजोविदस्योजो मा मा हासी-न्माऽह मोजो हासिषं- मा मामोजो हासी, 卐थ्सूर्य भ्राजस्वि- न्भ्राजस्वी त्वन्देवेषु भूया- भ्राजस्वन्तं मा.मायुष्मन्तँ वर्चस्वन्तं मनुष्येषु कुरु, वायोश्च त्वाऽपाञ्च भ्राजसे जुहोमि, सुव.र्विदसि- सुवर्मा मा हासी-न्माऽहꣳ सुवर् हासिषं- मा माꣳ सुवर् हासी, 卐न्मयि मेधां मयि प्रजां मय्यग्नि स्तेजो दधातु, 卐मयि मेधां मयि प्रजां मयीन्द्र इन्द्रिय न्दधातु, 卐मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु।। 2।। (क्षत्रस्य च मयि त्रयोविꣳशतिश्च। 1।)

卐वायुर्हिङ्कर्ता-ऽग्निꣳ प्रस्तोता- प्रजापति स्साम- बृहस्पति रुद्गाता- विश्वे देवा उपगातारो- मरुतꣳ प्रतिहर्तार- इन्द्रो निधन-न्ते देवाꣳ प्राणभृतꣳ प्राणं मयि दध,-त्वेतद्वै सर्व मध्वर्यु रुपाऽऽकुर्व न्नुद्गातृभ्य उपाऽऽकरोति, ते देवाꣳ प्राणभृतꣳ प्राणं मयि दध-त्वित्याहैत.देव सर्व मात्म न्धत्त, 卐इडा देवहू- र्मनु र्यज्ञनी- र्बृहस्पति रुक्थामदानि शꣳसिष- द्विश्वे देवाः।। 3।। सूक्तवाचꣳ- पृथिवि मात र्मा मा हिꣳसी,र्मधु मनिष्ये- मधु जनिष्ये- मधु वक्ष्यामि- मधु वदिष्यामि- मधुमती न्देवेभ्यो वाच मुद्यासꣳ-

शुश्रूषेण्यां मनुष्येभ्य- स्तं मा देवा अवन्तु- शोभायै पितरोऽनु मदन्तु।। 4।।(श९सिषद्विश्वे देवा अष्टाविं९शतिश्च। 2।)

ॐ❀卐वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसाऽग्नेः प्रियं पाथ उपेहि 卐रुद्रास्त्वा प्र वृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपे 卐ह्यादित्यास्त्वा प्र वृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि 卐मान्दासु- ते शुक्र शुक्र मा धूनोमि 卐भन्दनासु - 卐कोतनासु - 卐नूतनासु - 卐रेशीषु - 卐मेषीषु- 卐वाशीषु 卐-- विश्वभृथ्सु- 卐माध्वीषु- 卐ककुहासु- 卐शक्करीषु--।। 5।।❀卐शुक्रासु ते शुक्र शुक्र मा धूनोमि 卐शुक्रन्ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः।।

卐आऽस्मिन्नुग्रा अचुच्यवु र्दिवो धारा असश्चत।।

卐ककुह९ रूपँ वृषभस्य रोचते बृहथ्सोम स्सोमस्य पुरोगा श्शुक्र श्शुक्रस्य पुरोगाः।

卐यत्ते सोमादाभ्य न्नाम जागृवि तस्मै ते सोम सोमाय स्वा 卐होशित्त्वन्देव सोम गायत्रेण छन्दसाऽग्नेः।। 6।।❀ प्रियं पाथो अपीहि 卐वशी त्वन्देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मथ्सखा त्वन्देव सोम जागतेन छन्दसा विश्वेषा न्देवानां प्रियं पाथो अपी 卐ह्यानः प्राण एतु परावत आऽन्तरिक्षा द्दिव स्परि। आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा।

卐 इन्द्राग्नी मे वर्चः कृणुताँ वर्च स्सोमो बृहस्पतिः। वर्चो मे विश्वे देवा वर्चो मे धत्त मश्विना।।

卐 दधन्वेवा यदीमनु वोच द्ब्रह्माणि वेरु तत्। परि विश्वानि काव्या नेमि श्चक्र मिवाभवत्।। 7।। (शक्करीष्वग्ने बृहस्पतिः पञ्चविं९शतिश्च। 3।)

ॐ❀ एतद्वा अपा न्नामधेय ङ्गुह्यँ- यदाधावा, मान्दासु ते शुक्र शुक्र माधूनोमीत्या-हापामेव नामधेयेन गुह्येन दिवो वृष्टि मव रुन्धे, शुक्रन्ते शुक्रेण गृह्णामीत्या-हैतद्वा अह्नो रूपँ- यद्रात्रि,स्सूर्यस्य रश्मयो वृष्ट्या ईशते-ऽह्न एव रूपेण सूर्यस्य रश्मिभि र्दिवो वृष्टि श्च्यावय,त्याऽस्मि न्नुग्राः।। 8।।❀ अचुच्यवु रित्याह- यथायजु.रेवैत-त्ककुह९ रूपँ वृषभस्य रोचते बृहदित्या-हैतद्वा अस्य ककुह९ रूपँ यद्वृष्टी-रूपेणैव वृष्टि मव रुन्धे, यत्ते सोमादाभ्य न्नाम जागृवी-त्याहैष ह वै हविषा हवि र्यजति- योऽदाभ्य ङ्गृहीत्वा सोमाय जुहोति, परा वा एतस्याऽऽयुः प्राण एति-।। 9।।❀ यो९शु.ङ्गृह्ण,त्या नः प्राण एतु परावत इत्याहा-ऽऽयुरेव प्राण मात्म न्धत्ते,ऽमृतमसि प्राणाय त्वेति हिरण्य मभि व्यनि, त्यमृतँ वै हिरण्य- मायुः प्राणो-ऽमृतेनैवाऽऽयु रात्म न्धत्ते, शतमानं भवति- शताऽऽयुः पुरुष श्शतेन्द्रिय-

आयुष्येवेन्द्रिये प्रति तिष्ठ,त्यप उप स्पृशति- भेषजँ वा आपो- भेषज मेव कुरुते।। 10।। (उग्रा एत्याप स्त्रीणि च। 4।)

卐वायुरसि प्राणो नाम सवितु राधिपत्येऽपानं मे दा 卐श्चक्षुरसि श्रोत्रन्नाम धातु राधिपत्य आयुर्मे दा 卐रूपमसि वर्णो नाम बृहस्पते राधिपत्ये प्रजां मे दा 卐ऋतमसि सत्य न्नामेन्द्रस्याऽधिपत्ये क्षत्रं मे दा 卐भूतमसि भव्यन्नाम पितृणा माधिपत्येऽपा मोषधीना ङ्गर्भ न्धा 卐ऋतस्य त्वा व्योमन 卐ऋतस्य।। 11।। त्वा विभूमन 卐ऋतस्य त्वा विधर्मण 卐ऋतस्य त्वा सत्या 卐यर्तस्य त्वा ज्योतिषे- प्रजापति र्विराज मपश्य-त्तया भूतञ्च भव्यञ्चासृजत- तामृषिभ्य स्तिरोऽदधा- त्ताञ्जमदग्नि स्तपसाऽपश्य- त्तया वै स पृश्ञी न्कामा नसृजत, तत्पृश्ञीनां पृश्ञित्वँ, यत्पृश्ञयो गृह्यन्ते- पृश्ञीनेव तैः कामान् यजमानोऽव रुन्धे, वायुरसि प्राणः।। 12।। नामेत्याह- प्राणापाना.वेवाव रुन्धे, चक्षु.रसि श्रोत्रन्नामेत्याहा-ऽयुरेवाव रुन्धे, रूप.मसि वर्णो नामेत्याह- प्रजा मेवाव रुन्ध, -ऋतमसि सत्यन्नामेत्याह- क्षत्र.मेवाव रुन्धे, भूत.मसि भव्य न्नामेत्याह- पशवो वा अपा मोषधीना ङ्गर्भः- पशूनेव।। 13।। अव रुन्ध,-एतावद्वै पुरुषं परित- स्तदेवाव रुन्ध,-ऋतस्य त्वा व्योमन इत्या-हेयँ वा ऋतस्य व्यो.मेमा मेवाभि जय,त्यृतस्य त्वा विभूमन इत्या-हान्तरिक्षँ वा ऋतस्य विभू.मान्तरिक्ष मेवाभि जय,त्यृतस्य त्वा विधर्मण इत्याह- द्यौर्वा ऋतस्य विधर्म- दिव मेवाभि जय,त्यृतस्य।। 14।। त्वा सत्यायेत्याह- दिशो वा ऋतस्य सत्य- न्दिश एवाभि जय,त्यृतस्य त्वा ज्योतिष इत्याह- सुवर्गो वै लोक ऋतस्य ज्योति- स्सुवर्ग मेव लोक मभि जय,त्येतावन्तो वै देवलोका- स्तानेवाभि जयति, दश सं पद्यन्ते- दशाक्षरा विरा-डन्नँ विरा-ड्विराज्येवान्नाद्ये प्रति तिष्ठति।। 15।। (व्योमन ऋतस्य प्राणः पशूनेव विधर्म दिव मेवाभि जयत्यृतस्य षड्चत्वारिꣳशच्च। 5।)

देवा वै यद्यज्ञेन नावारुन्धत- तत्परै रवा रुन्धत- तत्पराणां परत्वँ, यत्परे गृह्यन्ते- यदेव यज्ञेन नावरुन्धे- तस्यावरुद्ध्यै, यं प्रथम ङ्गृह्णा-तीम मेव तेन लोक मभि जयति, यन्द्वितीय- मन्तरिक्ष न्तेन, यन्तृतीय- ममु.मेव तेन लोक मभि जयति, यदेते गृह्यन्त- एषाँ लोकाना मभिजित्यै,।। 16।। उत्तरेष्वह.स्स्वमुतोऽर्वाञ्चो गृह्यन्ते, ऽभिजित्यैवेमा न्लोका न्पुन.रिमँ लोकं प्रत्यवरोहन्ति, यत्पूर्वेष्वह.स्स्वितः पराञ्चो गृह्यन्ते- तस्मा दितःपराञ्च इमे लोका, यदुत्तरेष्वह.स्स्वमुतोऽर्वाञ्चो गृह्यन्ते- तस्मादमुतोऽर्वाञ्च इमे लोका, स्तस्मा दयातयाम्नो लोका न्मनुष्या उप जीवन्ति, ब्रह्मवादिनो वदन्ति- कस्मा.थ्सत्या दद्ध्य ओषधय स्सम्भव- न्त्योषधयः।। 17।। मनुष्याणा मन्नं- प्रजापतिं प्रजा अनु प्र

जायन्त इति, परा.नन्विति ब्रूया, द्यद्गृह्णा ॐत्यद्भ्य स्त्वौषधीभ्यो गृह्णा-मीति तस्मादद्भ्य ओषधय स्सम्भवन्ति, यद्गृह्णा ॐत्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामी-ति तस्मा दोषधयो मनुष्याणा मन्नँ यद्गृह्णाति ॐप्रजाभ्यस्त्वा प्रजापतये गृह्णामी-ति तस्मात्प्रजापतिं प्रजा अनु प्र जायन्ते।। 18।। (अभिजित्या ओषधयोऽष्टा चत्वारिंशच्च।6।)

❀ प्रजापति र्देवासुरा नसृजत- तदनु यज्ञोऽसृज्यत- यज्ञ ञ्छन्दाꣳसि, ते विष्वञ्चो व्यक्राम- '2'न्थ्सोऽसुरा ननु यज्ञोऽपाक्राम- द्यज्ञ ञ्छन्दाꣳसि, ते देवा अमन्य-न्तामी वा इद मभूवन्- यद्वयꣳ स्म इति, ते प्रजापति मुपाधाव-'2'न्थ्सोऽब्रवी त्प्रजापति- श्छन्दसाँ वीर्य.मादाय- तद्वः प्र दास्यामीति, स छन्दसाँ वीर्यम्।। 19।। ❀ आदाय- तदेभ्यः प्रायच्छ,त्तदनु छन्दाꣳस्यपाक्राम- न्छन्दाꣳसि यज्ञ, स्ततो देवा अभव- न्पराऽसुरा, य एव ञ्छन्दसाँ वीर्यँ वेदा ॐऽऽश्रावया ॐस्तु श्रौष ॐड्यज ॐये यजामहे ॐवषड्कारो, भव.त्यात्मना- पराऽस्य भ्रातृव्यो भवति, ब्रह्मवादिनो वदन्ति- कस्मै कमध्वर्यु राश्रावय तीति, छन्दसाँ वीर्यायेति ब्रूया,देतद्वै।। 20।। ❀ छन्दसाँ वीर्य- माश्रावयास्तु श्रौष-ड्यज- ये यजामहे वषड्कारो, यँ एवँ वेद- सवीर्यैरेव छन्दोभि रर्चति- यत्किञ्चार्चति, यदिन्द्रो वृत्र मह- न्नमेध्य न्त,द्यद्यती नपावप- दमेध्य न्त,दथ कस्मा दैन्द्रो यज्ञ आ सꣳस्थातो रित्याहु,रिन्द्रस्य वा एषा यज्ञिया तनू र्यद्यज्ञ- स्तामेव तद्यजन्ति, यँ एवँ वे.दोपैनँ यज्ञो नमति।। 21।। (छन्दसाँ वीर्यँ वा एव तदष्टौ च। 7।)

❀ॐआयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनि रेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्र मभि रक्षता दिमम्।।

आ वृश्च्यते वा एत द्यजमानोऽग्निभ्याँ- यदेनयो श्शृतङ्कृत्याथान्यत्रावभृथ मवै,त्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथ मवैष्य न्जुहुया-दाहुत्यैवैनौ शमयति- नाऽऽर्तिमार्च्छति यजमानो,

ॐ यत्कुसीदम्।। 22।। ❀ अप्रतीत्तँ मयि येन यमस्य बलिना चरामि। इहैव सन्निरवदये तदेत त्तदग्ने अनृणो भवामि।।

ॐ विश्वलोप विश्वदावस्य त्वाऽऽसञ्जुहो म्यग्धा देकोऽहुतादेक स्समसनादेकः। ते नः कृण्वन्तु भेषजꣳ सद स्सहो वरेण्यम्।।

ॐ अयन्नो नभसा पुर स्सꣳस्फानो अभि रक्षतु। गृहाणा मसमत्यै बहवो नो गृहा असन्न्।।

ॐ स त्व न्नः।। 23।। ❀ नभस स्पत ऊर्जन्नो धेहि भद्रया। पुनर्नो नष्ट मा कृधि पुनर्नो रयि मा कृधि।।

卐 देव सङ्स्फान सहस्रपोषस्येशिषे स नो रास्वाज्यानि॰ रायस्पोष॰ सुवीर्य॰ सँवथ्सरीणा॰ स्वस्तिम्।।

अग्नि र्वाव यम- इयँ यमी, कुसीदँ वा एतद्यमस्य यजमान आ दत्ते- यदोषधीभि र्वेदिङ् स्तृणाति, यदनुपौष्य प्रयाया- द्ग्रीवबद्धमेनम्।। 24।।❀ अमुष्मि.न्लोके नेनीयेरन्, यत्कुसीद मप्रतीत्तं मयी.त्युपौष-तीहैव सन् यम ङ्कुसीद न्निरवदा.यानृण स्सुवर्गँ लोक.मेति, यदि मिश्र.मिव चरे- दञ्जलिना सक्तू.न्प्रदाव्ये जुहुया,देष वा अग्नि र्वैश्वानरो यत्प्रदाव्य-स्स एवैनङ् स्वदय,त्यहाँ विधान्या मेकाष्टकाया मपूप. ञ्चतु.श्शरावं पक्त्वा- प्रात.रेतेन कक्ष मुपौषे,द्यदि।। 25।।❀ दहति- पुण्यसमं भवति, यदि न दहति- पापसम,मेतेन ह स्म वा ऋषय॰ पुरा विज्ञानेन दीर्घसत्र मुप यन्ति, यो वा उपद्रष्टार मुपश्रोतार मनुख्यातारँ विद्वान् यजते- सममुष्मि.न्लोक इष्टापूर्तेन गच्छते,ऽग्नि र्वा उपद्रष्टा- वायु रुपश्रोता- ऽऽदित्योऽनुख्याता, तान् य एवँ विद्वान् यजते- सममुष्मि न्लोक इष्टापूर्तेन गच्छते,ऽयन्नो नभसा पुरः।। 26।।❀ इत्याहा-ऽग्निर्वै नभसा पुरो-ऽग्नि मेव तदा.हैतन्मे गोपायेति, स त्वन्नो नभस स्पत इत्याह- वायु र्वै नभस.स्पति- र्वायु.मेव तदा.हैतन्मे गोपायेति, देव सङ्स्फानेत्याहा-ऽसौ वा आदित्यो देव स्सङ्स्फान- आदित्य मेव तदा.हैतन्मे गोपायेति।। 27।। (कुसीद न्त्वन्न एन मोषेद्यदि पुर आदित्य मेव तदाहैतन्मे गोपायेति। 8।)

❀卐एतँ युवानं परि वो ददामि तेन क्रीडन्ती श्चरत प्रियेण। मा न श्शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम।।

卐 नमो महिम्न उत चक्षुषे ते मरुतां पित स्तदह ङ्गृणामि। अनु मन्यस्व सुयजा यजाम जुष्ट न्देवाना मिदमस्तु हव्यम्।।

卐 देवाना मेष उपनाह आसी दपाङ्गर्भ ओषधीषु न्यक्तः। सोमस्य द्रप्स मवृणीत पूषा।। 28।।❀ बृहन्नद्रि रभव त्तदेषाम्।।

卐 पिता वथ्सानां पति रघ्नियाना मथो पिता महता ङ्गर्गराणाम्। वथ्सो जरायु प्रतिधुक्पीयूष आमिक्षा मस्तु घृतमस्य रेतः।।

卐 त्वाङ्गावोऽवृणत राज्याय त्वा॰ हवन्त मरुत स्स्वर्काः। वर्ष्म न्क्षत्रस्य ककुभि शिश्रियाण स्ततो न उग्रो वि भजा वसूनि।।

व्यृद्धेन वा एष पशुना यजते- यस्यैतानि न क्रियन्त,-एष ह त्वै समृद्धेन यजते- यस्यैतानि क्रियन्ते।। 29।। (पूषा क्रियन्त एषोऽष्टौ च। 9।)

☸❀卐सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः। बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मती ञ्जुहोतु।।

卐 यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी। अङ्गान्यह्रुता यस्यैता न्देवै स्समजीगमम्।।

卐 आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद। भूम्याश्चतस्रः प्रदिश स्ताभि रा वर्तया पुनः।।

卐 वि ते भिनद्मि तकरीँ वि योनिँ वि गवीन्यौ। वि।। 30।। ❀ मातरञ्च पुत्रञ्च वि गर्भञ्च जरायु च।।

卐 बहिस्ते अस्तु बालिति।।

卐 उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम्।।

卐 एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनाऽनु प्रथता९ स्वाहा।।

卐 मही द्यौः पृथिवी च न इमँ यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः।। 31।। (गवीन्यौ वि चतुश्चत्वारि९शच्च। 10।)

**वै।का।12 याज्या: 18 (एकोऽनुवाक: 1)**

☸❀卐इदँ वामास्ये हविः प्रिय मिन्द्राबृहस्पती। उक्थं मदश्च शस्यते।।

卐 अयँ वां परि षिच्यते सोम इन्द्राबृहस्पती। चारु र्मदाय पीतये।।

卐 अस्मे इन्द्राबृहस्पती रयि न्धत्त९ शतग्विनम्। अश्वावन्त९ सहस्रिणम्।।

卐 बृहस्पतिर्नः परि पातु पश्चा दुतोत्तरस्मा दधरा दघायोः। इन्द्रः पुरस्ता दुत मध्यतो न स्सखा सखिभ्यो वरिवः कृणोतु।।

卐 वि ते विष्वग्वातजूतासो अग्ने भामासः।। 32।। ❀ शुचे शुचय श्चरन्ति। तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः।।

卐 त्वामग्ने मानुषी रीडते विशो होत्राविदँ विविचि९ रत्नधातमम्। गुहा सन्त९ सुभग विश्वदर्शत न्तुविष्मणस९ सुयज ङ्घृतश्रियम्।।

卐 धाता ददातु नो रयि मीशानो जगतस्पतिः। स नः पूर्णेन वावनत्।।

卐 धाता प्रजाया उत राय ईशे धातेदँ विश्वं भुवन ञ्जजान। धाता पुत्रँ यजमानाय दाता।। 33।। ❀ तस्मा उ हव्य ङ्घृतवद्विधेम।।

卐 धाता ददातु नो रयिं प्राची ञ्जीवातु मक्षिताम्। वयन्देवस्य धीमहि सुमतिꣳ सत्यराधसः।।
卐 धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे। तस्मै देवा अमृता स्सँ व्ययन्ताँ विश्वे देवासो अदिति स्सजोषाः।।
卐 अनु नोऽद्यानुमति र्यज्ञ न्देवेषु मन्यताम्। अग्निश्च हव्यवाहनो भवता न्दाशुषे मयः।।
卐 अन्विदनुमते त्वम्।। 34।।❀ मन्यासै शञ्च नः कृधि। क्रत्वे दक्षाय नो हिनु प्रण आयूꣳषि तारिषः।।
卐 अनु मन्यता मनुमन्यमाना प्रजावन्तꣳ रयि मक्षीयमाणम्। तस्यै वयꣳ हेडसि माऽपि भूम सा नो देवी सुहवा शर्म यच्छतु।।
卐 यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रति भूषन्त्यायवः। यस्या उपस्थ उर्वन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु।ꣳ 35।।
❀卐राकामहꣳ सुहवाꣳ सुष्टुती हुवे शृणोतु न स्सुभगा बोधतु त्मना। सीव्यत्वप स्सूच्याऽच्छिद्यमानया ददातु वीरꣳ शतदाय मुक्थ्यम्।।
卐 यास्ते राके सुमतय स्सुपेशसो याभि र्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपाऽऽगहि सहस्रपोषꣳ सुभगे रराणा।।
卐 सिनीवालि[74]❀ 卐या सुपाणिः[75]❀।
卐 कुहू महꣳ सुभगाँ विद्मनापस मस्मिन् यज्ञे सुहवा ञ्जोहवीमि। सा नो ददातु श्रवणं पितृणा न्तस्यास्ते देवि हविषा विधेम।।
卐 कुहू र्देवाना ममृतस्य पत्नी हव्या अस्य हविष श्चिकेतु। सन्दाशुषे किरतु भूरि वामꣳ राय स्पोष ञ्चिकितुषे दधातु।। 36।। (भामासो दाता त्वमन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु श्रवण ञ्चतुर्विꣳशतिश्च। 11।)
(अग्ने तेजस्विन्वायु र्वसवस्त्वैतद्वा अपाँ न्नामधेयँ वायुरसि प्राणो नाम देवा वै यद्यज्ञेन न प्रजापति र्देवासुरा नायुर्दा एतँ युवानꣳ सूर्यो देव इदँ वा मेकादश। 11। अग्ने तेजस्विन्वायु रसि छन्दसां वीर्यं मातरञ्च षड्त्रिꣳशत्। 36। अग्ने तेजस्विꣳश्चि कितुषे दधातु।)

74

75

**वै।का।11 औपानुवाक्य ब्राह्मणम्,मन्त्राश्च 4 (दशानुवाकाः 10)**

वि वा एतस्य यज्ञ ऋध्यते- यस्य हवि रतिरिच्यते, सूर्यो देवो दिविषद्ध्य इत्याह- बृहस्पतिना चैवास्य प्रजापतिना च यज्ञस्य व्यृद्ध मपि वपति, रक्षाꣳसि वा एत.त्पशुꣳ सचन्ते- यदेकदेवत्य आलब्धो भूया न्भवति, यस्यास्ते हरितो गर्भ इत्याह- देवत्रैवैना ङ्गमयति- रक्षसा मपहत्या,-आ वर्तन वर्तयेत्याह।। 1।। ब्रह्मणैवैन मावर्तयति, वि ते भिनद्मि तकरी मित्याह- यथायजु.रेवैत,दुरुद्रप्सो विश्वरूप इन्दुरित्याह- प्रजा वै पशव इन्दुः- प्रजयैवैनं पशुभि स्समर्धयति, दिवँ वै यज्ञस्य व्यृद्ध ङ्गच्छति- पृथिवी मतिरिक्त, न्तद्यन्न शमये- दार्ति मार्च्छे द्यजमानो, मही द्यौः पृथिवी च न इति।। 2।। आह- द्यावापृथिवीभ्या मेव यज्ञस्य व्यृद्ध ञ्चातिरिक्तञ्च शमयति- नाऽऽर्ति मार्च्छति यजमानो, भस्मनाऽभि समूहति- स्वगाकृत्या, -अथो अनयोर्वा एष गर्भो-ऽनयो रेवैन न्दधाति, यदवद्ये- दति तद्रेचये,द्यन्नावद्ये- त्पशो रालब्धस्य नावद्ये,त्पुरस्ता न्नाभ्या अन्य दवद्ये- दुपरिष्टा दन्य,त्पुरस्ताद्वै नाभ्यै।। 3।। प्राण- उपरिष्टा दपानो, यावानेव पशु- स्तस्याव द्यति, विष्णवे शिपिविष्टाय जुहोति, यद्वै यज्ञस्यातिरिच्यते- यः पशो.र्भूमा- या पुष्टि- स्तद्विष्णु श्शिपिविष्टोऽतिरिक्त एवातिरिक्त न्दधा- त्यतिरिक्तस्य शान्त्या, अष्टाप्रू.ड्ढिरण्य न्दक्षिणा-ऽष्टापदी ह्येषा-ऽऽत्मा नवमः- पशो राप्त्या, -अन्तरकोश उष्णीषेणाऽऽविष्टितं भव-त्येव.मिव हि पशु,रुल्ब.मिव- चर्मेव- माꣳस मि.वास्थीव, यावानेव पशु- स्तमाप्त्वाऽव रुन्धे, यस्यैषा यज्ञे प्रायश्चित्तिः क्रियत- इष्ट्वा वसीया न्भवति।। 4।। (वर्तयेत्याह न इति वै नाभ्या उल्ब मिवैकविꣳशतिश्च। 1।)

आ वायो भूष शुचिपा उप न स्सहस्रन्ते नियुतो विश्ववार। उपो ते अन्धो मद्य मयामि यस्य देव दधिषे पूर्वपेयम्।।

आकूत्यै त्वा कामाय त्वा समृधे त्वा- किक्किटा ते मनः प्रजापतये स्वाहा -- किक्किटा ते प्राणँ वायवे स्वाहा -- किक्किटा ते चक्षु स्सूर्याय स्वाहा -- किक्किटा ते श्रोत्र न्द्यावापृथिवीभ्याꣳ स्वाहा -- किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा।। 5।।

त्व न्तुरीया वशिनी वशाऽसि सकृद्यत्त्वा मनसा गर्भ आऽशयत्। वशा त्वँ वशिनी गच्छ देवान्थ्सत्या स्सन्तु यजमानस्य कामाः।।

अजाऽसि रयिष्ठा पृथिव्याꣳ सीदोर्ध्वान्तरिक्ष मुप तिष्ठस्व दिवि ते बृहद्भाः।।

卐 तन्तु न्तन्व न्रजसो भानु मन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्।।
卐 अनुल्बणँ वयत जोगुवामपो मनु र्भव जनया दैव्यञ्जनम्।।
卐 मनसो हविरसि प्रजापतेर्वर्णो गात्राणान्ते गात्रभाजो भूयास्म।। 6।। (सरस्वत्यै स्वाहा मनु स्त्रयोदश च। 2।)

❀ इमे वै सहाऽऽस्ता-न्ते वायु र्व्यवा-त्ते गर्भ मदधाता- न्तꣳ सोमः प्राजनय- दग्नि रग्रसत, स एतं प्रजापति राग्नेय मष्टाकपाल मपश्य- त्तन्निरवप- त्तेनैवैना मग्ने रधि निरक्रीणा,त्तस्मा दप्यन्यदेवत्या मालभमान- आग्नेय मष्टाकपालं पुरस्ता न्निर्वपे,दग्ने रेवैना मधि निष्क्रीयाऽऽलभते, यत्।। 7।। ❀ वायु र्व्यवा-त्तस्मा द्वायव्या, यदिमे गर्भ मदधाता- न्तस्मा द्यावापृथिव्या, यथ्सोमः प्राजनय.दग्नि रग्रसत- तस्मादग्नीषोमीया, यदनयो र्वियत्यो.र्वागवद- त्तस्मा थ्सारस्वती, यत्प्रजापति रग्ने रधि निरक्रीणा- त्तस्मा त्प्राजापत्या, सा वा एषा सर्वदेवत्या- यदजा, वशा वायव्या मा लभेत- भूतिकामो, वायुर्वै क्षेपिष्ठा देवता- वायु मेव स्वेन।। 8।। ❀ भागधेयेनोप धावति- स एवैनं भूति ङ्गमयति, द्यावापृथिव्या मा लभेत- कृषमाणः प्रतिष्ठाकामो, दिव एवास्मै पर्जन्यो वर्षति- व्यस्या मोषधयो रोहन्ति- समर्धुक.मस्य सस्यं भव, त्यग्नीषोमीया मा लभेत- यः कामयेतान्नवा नन्नाद स्स्यामि,त्यग्निनैवान्न मव रुन्धे- सोमे नान्नाद्य- मन्नवा नेवान्नादो भवति, सारस्वती मा लभेत- यः।। 9।। ❀ ईश्वरो वाचो वदितो.स्सन्वाच न्न वदे,द्वाग्वै सरस्वती- सरस्वती मेव स्वेन भागधेयेनोप धावति- सैवास्मिन्वाच न्दधाति, प्राजापत्या मा लभेत- यः कामये.तानभिजित मभि जयेय मिति, प्रजापति स्सर्वा देवता- देवताभि रेवानभिजित मभि जयति, वायव्ययोपाऽऽकरोति- वायो रेवैना मवरुध्याऽऽलभत,-आकूत्यै त्वा कामाय त्वा।। 10।। ❀ इत्याह- यथायजु.रेवैत,त्किक्किटाकार.ञ्जुहोति- किक्किटाकारेण वै ग्राम्याः पशवो रमन्ते- प्राऽऽरण्याः पतन्ति, यत्किक्किटाकार.ञ्जुहोति- ग्राम्याणां पशूना.न्धृत्यै, पर्यग्नौ क्रियमाणे जुहोति- जीवन्ती मेवैनाꣳ सुवर्गं लोक ङ्गमयति, त्वन्तुरीया वशिनी वशाऽसीत्याह- देवत्रैवैना.ङ्गमयति, सत्या.स्सन्तु यजमानस्य कामा इत्या.हैष वै कामः।। 11।। ❀ यजमानस्य, यदनार्त उदृच ङ्गच्छति- तस्मादेव.माहा,ऽजाऽसि रयिष्ठेत्या-हैष्वेवैनाँ लोकेषु प्रतिष्ठापयति, दिवि ते बृहद्भा इत्याह- सुवर्ग एवास्मै लोके ज्योति र्दधाति, तन्तु न्तन्व न्रजसो भानु मन्विहीत्या-हेमा नेवास्मै लोका ञ्ज्योतिष्मतः करो,त्यनुल्बणँ वयत जोगुवा मप इति।। 12।। ❀ आह- यदेव यज्ञ उल्बण ङ्क्रियते- तस्यैवैषा शान्ति, र्मनु.र्भव जनया दैव्यञ्जन मित्याह- मानव्यो वै प्रजा-स्ता एवाऽऽद्याः कुरुते, मनसो हवि रसीत्याह-

स्वगाकृत्यै, गात्राणान्ते गात्रभाजो भूयास्मेत्याहा-ऽऽशिष मेवैता.मा शास्ते, तस्यै वा एतस्या एक मेवादेवयजनँ- यदालब्धाया मभ्रः।। 13।।❀ भवति, यदालब्धाया मभ्रस्स्या- दप्सु वा प्रवेशये- थ्सवा वा प्राश्ञ्नीया,द्यदप्सु प्रवेशये- द्यज्ञवेशस ङ्कुर्या- थ्सर्वा.मेव प्राश्ञ्नीया- दिन्द्रिय मेवाऽऽत्म न्धत्ते, सा वा एषा त्रयाणा मेवावरुद्धा- सँवथ्सरसद् स्सहस्त्रयाजिनो गृहमेधिन,स्त एवैतया यजेर- न्तेषा मेवैषाऽऽप्ता।। 14।। (यथ्स्वेन सारस्वती मालभेत यः कामाय त्वा कामोप इत्यभ्रो द्विचत्वारि९शच्च। 3।)

❀卐चित्तञ्च- 卐चित्ति 卐श्चाऽऽकूत 卐ञ्चाऽऽकूतिश्च- 卐विज्ञातञ्च 卐 विज्ञानञ्च- 卐मनश्च- 卐शक्करीश्च- 卐दर्शश्च- 卐पूर्णमासश्च- 卐बृहच्च 卐रथन्तरञ्च 卐प्रजापति र्जया निन्द्राय वृष्णे प्रायच्छ दुग्रः पृतनाज्येषु तस्मै विश स्समनमन्त सर्वा स्स उग्र स्स हि हव्यो बभूव- देवासुरा स्सँयत्ता आस- '2'न्थ्स इन्द्रः प्रजापति मुपाधाव- त्तस्मा एता न्जया न्प्रायच्छ- त्तानजुहो- त्ततो वै देवा असुरा नजयन्, यदजय- न्तज्जयाना ञ्जयत्व६, स्पर्धमानेनैते होतव्या, जयत्येव तां पृतनाम्।। 15।। (उप पञ्चवि९शतिश्च। 4।)

❀ 卐अग्निर्भूताना- मधिपति स्समाऽव- 卐त्विन्द्रो ज्येष्ठानाँ- 卐यमः पृथिव्या- 卐वायु रन्तरिक्षस्य- 卐सूर्यो दिव- 卐श्चन्द्रमा नक्षत्राणां- 卐बृहस्पति र्ब्रह्मणो- 卐मित्र स्सत्यानाँ - 卐वरुणोऽपा९- 卐समुद्र स्स्रोत्याना- 卐मन्न९ साम्राज्याना मधिपति तन्माऽवतु- 卐सोम ओषधीना९- 卐सविता प्रसवाना९- 卐रुद्रः पशूना- 卐न्त्वष्टा रूपाणाँ- 卐विष्णुः पर्वतानां- 卐मरुतो गणाना मधिपतय स्ते माऽवन्तु- 卐पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत।

अस्मिन्ब्रह्म न्नस्मि न्क्षत्रेऽस्या माशिष्यस्यां पुरोधाया मस्मि न्कर्मन्नस्या न्देवहूत्याम्।। 16।। (अवरे सप्तदश च। 5।)

❀ देवा वै यद्यज्ञेऽकुर्वत- तदसुरा अकुर्वत, ते देवा एता.नभ्याताना नपश्य- न्तानभ्यातन्वत, यद्देवाना ङ्कर्माऽऽसी- दार्ध्यत त,द्यदसुराणा- न्न तदार्ध्यत, येन कर्मणेर्थ्से- त्तत्र होतव्या- ऋध्नो.त्येव तेन कर्मणा, यद्विश्वे देवा स्समभर- न्तस्मा.दभ्याताना वैश्वदेवा, यत्प्रजापति र्जया न्प्रायच्छ- त्तस्माज्जयाः प्राजापत्याः,।। 17।।❀ यद्राष्ट्रभृद्भी राष्ट्र माऽददत- तद्राष्ट्रभृता९ राष्ट्रभृत्त्व,न्ते देवा अभ्यातानै रसुरा नभ्यातन्वत- जयै रजय- न्राष्ट्रभृद्भी राष्ट्र माऽददत, यद्देवा अभ्यातानै रसुरा नभ्यातन्वत- तदभ्यातानाना मभ्यातानत्वँ, यज्जयै रजय- न्तज्जयाना ञ्जयत्वँ, यद्राष्ट्रभृद्भी राष्ट्रमाऽददत- तद्राष्ट्रभृता९

राष्ट्रभृत्त्व,न्ततो देवा अभव- न्पराऽसुरा, यो भ्रातृव्यवा.न्थस्या-थ्स एता न्जुहुया, दभ्यातानै.रेव भ्रातृव्या नभ्यातनुते- जयै र्जयति- राष्ट्रभृद्भी राष्ट्र मा दत्ते, भव.त्यात्मना- पराऽस्य भ्रातृव्यो भवति।। 18।। (प्राजापत्या स्सोऽष्टादश च। 6।)

ऋताषा.ड्टतधामाऽग्नि र्गन्धर्व स्तस्यौषधयोऽफ्सरस ऊर्जो-नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यस्स्वाहा स९हितो विश्वसामा सूर्यो गन्धर्व स्तस्य मरीचयोऽफ्सरस आयुव- स्सुषुम्न स्सूर्यरश्मि श्चन्द्रमा गन्धर्व स्तस्य नक्षत्राण्यफ्सरसो बेकुरयो- भुज्यु स्सुपर्णो यज्ञो गन्धर्व स्तस्य दक्षिणा अफ्सरस स्स्तवा४- प्रजापति र्विश्वकर्मा मनः।। 19।। गन्धर्व स्तस्यर्ख्सामा न्यफ्सरसो वह्नय- इषिरो विश्वव्यचा वातो गन्धर्व स्तस्याऽऽपोऽफ्सरसो मुदा--

भुवनस्य पते यस्य त उपरि गृहा इह च। स नो रास्वाज्यानि९ रायस्पोष९ सुवीर्य९ सँवथ्सरीणा९ स्वस्तिम्।

परमेष्ठ्यधिपति र्मृत्यु र्गन्धर्व स्तस्य विश्व मफ्सरसो भुव- स्सुक्षिति स्सुभूति र्भद्रकृ थ्सुवर्वा न्पर्जन्यो गन्धर्व स्तस्य विद्युतोऽफ्सरसो रुचो- दूरेहेति रमृडयः।। 20।। मृत्यु र्गन्धर्व स्तस्य प्रजा अफ्सरसो भीरुव- श्चारु४ कृपणकाशी कामो गन्धर्व स्तस्याऽऽधयोऽफ्सरस श्शोचयन्ती र्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यस्स्वाहा स नो भुवनस्य पते यस्य त उपरि गृहा इह च। उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ।। 21।। (मनोऽमृडय ष्षड्चत्वारि९शच्च। 7।)

राष्ट्रकामाय होतव्या, राष्ट्रँ वै राष्ट्रभृतो- राष्ट्रेणैवास्मै राष्ट्र मव रुन्धे- राष्ट्र मेव भव,त्यात्मने होतव्या, राष्ट्रँ वै राष्ट्रभृतो- राष्ट्रं प्रजा- राष्ट्रं पशवो- राष्ट्रँ यच्छ्रेष्ठो भवति- राष्ट्रेणैव राष्ट्रमव रुन्धे- वसिष्ठ स्समानानां भवति, ग्रामकामाय होतव्या, राष्ट्रँ वै राष्ट्रभृतो- राष्ट्र९ सजाता- राष्ट्रेणैवास्मै राष्ट्र९ सजाता नव रुन्धे- ग्रामी।। 22।। एव भव,त्यधिदेवने जुहो-त्यधिदेवन एवास्मै सजाता नव रुन्धे- त एन मवरुद्धा उप तिष्ठन्ते, रथमुख ओजस्कामस्य होतव्या, ओजो वै राष्ट्रभृत- ओजो रथ- ओजसैवास्मा ओजोऽव रुन्ध- ओजस्व्येव भवति, यो राष्ट्रा.दपभूत स्स्या- त्तस्मै होतव्या, यावन्तोऽस्य रथास्स्यु- स्तान्ब्रूया- द्युङ्ग्ध्व- मिति- राष्ट्रमेवास्मै युनक्ति,।। 23।। आहुतयो वा एतस्याक्लृप्ता- यस्य राष्ट्र न्न कल्पते, स्वरथस्य दक्षिण.श्चक्रं प्रवृह्य- नाडी मभि जुहुया- दाहुती रेवास्य कल्पयति, ता अस्य कल्पमाना- राष्ट्र.मनु कल्पते, सङ्ग्रामे सँयत्ते होतव्या, राष्ट्रँ वै राष्ट्रभृतो- राष्ट्रे खलु वा एते व्यायच्छन्ते- ये सङ्ग्राम९ सँयन्ति-

यस्य पूर्वस्य जुह्वति, स एव भवति- जयति तꣳ सङ्ग्रामं, मान्धुक इध्मः।। 24।। ❀ भव,त्यङ्गारा एव प्रतिवेष्टमाना अमित्राणा.मस्य सेनां प्रति वेष्टयन्ति, य उन्माद्ये-त्तस्मै होतव्या, गन्धर्वाप्सरसो वा एत.मुन्मादयन्ति- य उन्माद्य,त्येते खलु वै गन्धर्वाप्सरसो- यद्राष्ट्रभृत,स्तस्मै स्वाहा- ताभ्य स्स्वाहेति जुहोति- तेनैवैना न्छमयति, नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भव,त्येते वै गन्धर्वाप्सरसा.ङ्गृहा- स्स्व एवैनान्।। 25।। ❀ आयतने शमय,त्यभिचरता प्रतिलोमꣳ होतव्याः, प्राणा.नेवास्य प्रतीचः प्रति यौति- तन्ततो येन केन च स्तृणुते, स्वकृत इरिणे जुहोति प्रदरे, वैतद्वा अस्यै निर्ऋतिगृहीत- न्निर्ऋतिगृहीत एवैन न्निर्ऋत्या ग्राहयति, यद्वाचः क्रूर- न्तेन वषट्करोति- वाच एवैन ङ्क्रूरेण प्र वृश्चति- ताजगार्ति मार्च्छति, यस्य कामयेतान्नाद्यम्।। 26।। ❀ आ ददीयेति- तस्य सभाया मुत्तानो निपद्य- भुवनस्य पत इति तृणानि सङ्गृह्णीया, त्प्रजापतिर्वै भुवनस्य पतिः- प्रजापतिनैवास्यान्नाद्य मा दत्त,- ॠइद मह ममुष्याऽऽमुष्यायणस्यान्नद्यꣳ हरामी-त्याहान्नाद्यमेवास्य हरति, षड्भिर्.हरति- षड्वा ऋतवः- प्रजापतिनैवास्यान्नाद्य मादायर्तवोऽस्मा अनु प्र यच्छन्ति,।। 27।। ❀ यो ज्येष्ठबन्धु रपभूत.स्स्या- त्तꣲ स्थलेऽवसाय्य- ब्रह्मौदन ञ्चतुश्शरावं पक्त्वा- तस्मै होतव्या, वर्ष्म वै राष्ट्रभृतो- वर्ष्म स्थलँ- वर्ष्मणैवैनँ वर्ष्म समानाना ङ्गमयति, चतुश्शरावो भवति- दिक्ष्वेव प्रति तिष्ठति, क्षीरे भवति- रुच.मेवास्मि न्दधा,त्युद्धरति शृतत्वाय, सर्पिष्वा.न्भवति- मेध्यत्वाय, चत्वार आर्षेयाः प्राश्नन्ति- दिशामेव ज्योतिषि जुहोति।। 28।। (ग्रामी युनक्तीध्मस्स्व एवैना नन्नाद्यँ यच्छन्त्येकान्न पञ्चाशच्च। 8।)

❀ देविका निर्वपे.त्प्रजाकाम- श्छन्दाꣳसि वै देविका- श्छन्दाꣳसीव खलु वै प्रजा- श्छन्दोभि रेवास्मै प्रजाः प्र जनयति, प्रथम न्धातार.ङ्करोति- मिथुनी~ एव तेन करो-त्यन्वेवास्मा अनुमति र्मन्यते- राते राका- प्र सिनीवाली जनयति- प्रजास्वेव प्रजातासु कुह्वा वाच न्दधा,त्येता एव निर्वपे त्पशुकाम- श्छन्दाꣳसि वै देविका- श्छन्दाꣳसि।। 29।। ❀ इव खलु वै पशव- श्छन्दोभि रेवास्मै पशून्प्र जनयति, प्रथम न्धातार.ङ्करोति- प्रैव तेन वापय- त्यन्वेवास्मा अनुमति र्मन्यते- राते राका- प्र सिनीवाली जनयति- पशूनेव प्रजाता न्कुह्वा प्रतिष्ठापय,त्येता एव निर्वपे द्ग्रामकाम- श्छन्दाꣳसि वै देविका- श्छन्दꣳसीव खलु वै ग्राम- श्छन्दोभि रेवास्मै ग्रामम्।। 30।। ❀ अव रुन्धे, मध्यतो धातार.ङ्करोति - मध्यत एवैन.ङ्ग्रामस्य दधा,त्येता एव निर्वपे ज्ज्योगामयावी- छन्दाꣳसि वै देविका- श्छन्दाꣳसि खलु वा एत मभि मन्यन्ते यस्य ज्योगामयति- छन्दोभि रेवैन मगद.ङ्करोति, मध्यतो धातार.ङ्करोति- मध्यतो वा

एतस्याक्लृप्तँ यस्य ज्योगामयति, मध्यत एवास्य तेन कल्पय,त्येता एव निः।। 31।।❀ वपे-द्यँ यज्ञो नोपनमे, च्छन्दा॰ऽसि वै देविका- श्छन्दा॰ऽसि खलु वा एत न्नोप नमन्ति- यँ यज्ञो नोपनमति, प्रथम न्धातार.ङ्करोति - मुखत एवास्मै छन्दा॰ऽसि दधा- त्युपैनँ यज्ञो नम,त्येता एव निर्वपे दीजान- श्छन्दा॰ऽसि वै देविका- यातयामानीव खलु वा एतस्य छन्दा॰ऽसि य ईजान, उत्तम न्धातार ङ्करोति0।। 32।।❀ उपरिष्टादेवास्मै छन्दा॰ऽस्ययातयामा.न्यव रुन्ध -उपैन मुत्तरो यज्ञो नम,त्येता एव निर्वपे-द्यं मेधा नोपनमे,च्छन्दा॰ऽसि वै देविका - श्छन्दा॰ऽसि खलु वा एतन्नोप नमन्ति- यं मेधा नोपनमति, प्रथम न्धातार.ङ्करोति - मुखत एवास्मै छन्दा॰ऽसि दधा-त्युपैनं मेधा नम,त्येता एव निर्वपेत्।। 33।।❀ रुक्काम-श्छन्दा॰ऽसि वै देविका- श्छन्दा॰ऽसीव खलु वै रु-क्छन्दोभि रेवास्मि.न्रुच न्दधाति, क्षीरे भवन्ति - रुचमेवास्मि न्दधति, मध्यतो धातार.ङ्करोति - मध्यत एवैन॰ रुचो दधाति, गायत्री वा अनुमति- स्त्रिष्टु.ग्राका- जगती सिनीवा-ल्यनुष्टु.प्कुहू- र्धाता वषड्कारः, पूर्वपक्षो राका-ऽपरपक्षः कुहू- रमावास्या सिनीवाली- पौर्णमास्यनुमति- श्चन्द्रमा धाता,ऽष्टौ।। 34।।❀ वसवो-ऽष्टाऽक्षरा गाय,त्र्येकादश रुद्रा - एकादशाक्षरा त्रिष्टु,ब्द्वादशाऽऽदित्या - द्वादशाक्षरा जगती, प्रजापति रनुष्टु-ब्धाता वषड्कार, एतद्वै देविका स्सर्वाणि च छन्दा॰ऽसि - सर्वाश्च देवता वषड्कार,स्ता यथ्सह सर्वा निर्वपे- दीश्वरा एनं प्रदहो, द्वे प्रथमे निरुप्य - धातु स्तृतीय न्निर्वपे,त्तथो एवोत्तरे निर्वपे - त्तथैनन्न प्र दह,न्त्यथो यस्मै कामाय निरुप्यन्ते - तमेवाऽऽभि.रुपाऽऽप्नोति।। 35।। (पशुकाम श्छन्दा॰ऽसि वै देविका श्छन्दा॰ऽसि ग्राम ङ्कल्पय त्येता एव निरुत्तम न्धातार ङ्करोति मेधा नमत्येता एव निर्वपे दष्टौ दहन्ति नव च। 9। देविकाः प्रजाकामो मिथुनी प्रजासु पशुकामः प्रैव ग्रामकामो ज्योगामयावी यँ यज्ञो य ईजानो यं मेधा रुक्कामोऽष्टौ। देविका भवन्ति दधति राष्ट्रकामाय भवति दधाति।)

❀卐वास्तोष्पते प्रति जानीह्यस्मा- न्थ्स्वावेशो अनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शन्न एधि द्विपदे शञ्चतुष्पदे।।

卐 वास्तोष्पते शग्मया स॰ऽसदा ते- सक्षीमहि रण्वया गातुमत्या। आ वः क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभि स्सदा नः।।

यथ्सायंप्रात रग्निहोत्र ञ्जुहो-त्याहुतीष्टका एव ता उप धत्ते।। 36।।❀ यजमानो,ऽहोरात्राणि वा एतस्येष्टका - य आहिताग्नि,र्यथ्सायम्प्रात र्जुहो-त्यहोरात्राण्येवाऽऽप्त्वेष्टकाः कृत्वोप धत्ते, दश समानत्र जुहोति - दशाक्षरा विरा-ड्विराज मेवाऽऽप्त्वेष्टका.ङ्कृत्वोप धत्ते-ऽथो विराज्येव यज्ञ माप्नोति,

चित्यश्चित्योऽस्य भवति - तस्माद्यत्र दशोषित्वा प्रयाति- तद्यज्ञवा,स्त्ववास्त्वेव त-द्यत्ततोऽर्वाचीनम्,।। 37।।❀ रुद्रः खलु वै वास्तोष्पति- र्यदहुत्वा वास्तोष्पतीयं प्रयाया-द्रुद्र एनं भूत्वाऽग्नि रनूत्थाय हन्या,द्वास्तोष्पतीय.ञ्जुहोति- भागधेयेनैवैनꣳ शमयति- नाऽऽर्ति मार्च्छति यजमानो, यद्युक्ते जुहुया-द्यथा प्रयाते वास्ता वाहुति.ञ्जुहोति - तादृगेव त,द्यदयुक्ते जुहुया-द्यथा क्षेम आहुति.ञ्जुहोति - तादृगेव त,दहुतमस्य वास्तोष्पतीयꣳ स्यात्।। 38।।❀ दक्षिणो युक्तो भवति- सव्योऽयुक्तो-ऽथ वास्तोष्पतीय.ञ्जुहो-त्युभयमेवाक-रपरिवर्ग मेवैनꣳ शमयति, यदेकया जुहुया-द्दर्विहोम.ङ्कुर्या,त्पुरोऽनुवाक्या मनूच्य- याज्यया जुहोति सदेवत्वाय, यद्धुतं आदध्या- द्रुद्र ङ्गृहा नन्वारोहये, द्यदवक्षाणा न्यसम्प्रक्षाप्य प्रयाया-द्यथा यज्ञवेशसँ वाऽऽदहनँ वा- तादृगेव त,卐दयन्ते योनिरृत्त्विय- इत्यरण्यो स्समारोहयति।। 39।।❀ एष वा अग्ने र्योनि- स्स्व एवैनँ योनौ समारोहय,त्यथो~ खल्वाहु- र्यदरण्यो स्समारूढो नश्ये- दुदस्याग्नि स्सीदे.त्पुनराधेय स्स्यादिति- 卐या ते अग्ने यज्ञिया तनू स्तयेह्या रोहे-- त्यात्म‘2’न्थ्समारोहयते - यजमानो वा अग्ने र्योनि - स्स्वाया मेवैनँ योन्याꣳ समारोहयते।। 40।। (धत्तेऽर्वाचीनꣳ स्याथ्समारोहयति पञ्चचत्वारिꣳशच्च। 10।)

**वै।का।12 याज्याः 19 (एकोऽनुवाकः 1)**

❀卐त्वमग्ने बृहद्वयो दधासि देव दाशुषे। कवि र्गृहपति र्युवा।।

卐 हव्यवाडग्नि रजरः पिता नो विभु र्विभावा सुदृशीको अस्मे। सुगार्हपत्या स्समिषो दिदी ह्यस्मद्रियख्सं मिमीहि श्रवाꣳसि।।

卐 त्वञ्च सोम नो वशो जीवातु न्न मरामहे। प्रियस्तोत्रो वनस्पतिः।।

卐 ब्रह्मा देवानां पदवीः कवीना मृषि र्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाꣳ स्वधिति र्वनानाꣳ सोमः।। 41।।❀ पवित्र मत्येति रेभन्न्।।

卐 आ विश्वदेवꣳ सत्पतिꣳ सूक्तै रद्या वृणीमहे। सत्यसवꣳ सवितारम्।।

卐 आ सत्येन रजसा वर्तमानो निवेशय न्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवना विपश्यन्न्।।

卐 यथा नो अदितिः कर त्पश्वे नृभ्यो यथा गवे। यथा तोकाय रुद्रियम्।।

卐 मा न स्तोके तनये मा न आयुषि मा नो गोषु मा।। 42।।❀ नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते।।

卐 उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः। गिरिभ्रजो नोर्मयो मदन्तो बृहस्पति मभ्यर्का अनावन्न्।।

卐 ह९सैरिव सखिभि र्वावदद्भि रश्मन्मयानि नहना व्यस्यन्न्। बृहस्पति रभिकनिक्रदद्गा उत प्रास्तौ दुच्च विद्वा९ अगायत्।।

卐 एन्द्र सानसि९ रयिम्।। 43।। ❀ सजित्वान९ सदासहम्। वर्षिष्ठ मूतये भर।।

卐 प्र ससाहिषे पुरुहूत शत्रू न्ज्येष्ठस्ते शुष्म इह राति रस्तु। इन्द्राऽऽभर दक्षिणेना वसूनि पति स्सिन्धूना मसि रेवतीनाम्।।

卐 त्व९ सुतस्य पीतये सद्यो वृद्धो अजायथाः। इन्द्र ज्यैष्ठ्याय सुक्रतो।।

卐 भुवस्त्वमिन्द्र ब्रह्मणा महा न्भुवो विश्वेषु सवनेषु यज्ञियः। भुवो नृ९ श्च्यौत्नो विश्वस्मि न्भरे ज्येष्ठश्च मन्त्रः।। 44।। ❀ विश्वचर्षणे।।

卐 मित्रस्य चर्षणीधृत श्श्रवो देवस्य सानसिम्। सत्य ञ्चित्रश्रवस्तमम्।।

卐 मित्रो जनान् यातयति प्रजान न्मित्रो दाधार पृथिवी मुत द्याम्। मित्रः कृष्टी रनिमिषाऽभि चष्टे सत्याय हव्य ङ्घृतव द्विधेम।।

卐 प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन। न हन्यते न जीयते त्वोतो नैन म९हो अश्ञो त्यन्तितो न दूरात्।।

卐 यत्।। 45।। ❀ चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि।

卐 यत्किञ्चेदँ वरुण दैव्ये जनेऽभिद्रोहं मनुष्या श्चरामसि। अचित्ती यत्तव धर्मा युयोपिम मा न स्तस्मा देनसो देव रीरिषः।।

卐 कितवासो यद्रिरिपु र्न दीवि यद्वा घा सत्य मुत यन्न विद्म। सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः।। 46।। (सोमो गोषु मा रयिं मन्त्रो यच्छिथिरा सप्त च। 11।)

(वि वा आ वायो इमे वै चित्त ञ्चाग्नि र्भूताना न्देवा वा अभ्याताना नृताषा ड्राष्ट्रकामाय देविका वास्तोष्पते त्वमग्ने बृहद्वय एकादश। 11। वि वा एतस्येत्याह मृत्यु र्गन्धर्वोऽव रुन्धे मध्यत स्त्वमग्ने बृहथ्षड्चत्वारि९शत्। 46। वि वा एतस्य प्रियासः।)

वै।का।11 औपानुवाक्य ब्राह्मणम्,मन्त्राश्च 5 (दशानुवाकाः 10)

ॐ❀卐पूर्णा पश्चा दुत पूर्णा पुरस्ता दुन्मध्यतः पौर्णमासी जिगाय। तस्या न्देवा अधि सँवसन्त उत्तमे नाक इह मादयन्ताम्।।

卐 यत्ते देवा अदधु र्भागधेय ममावास्ये सँवसन्तो महित्वा। सा नो यज्ञं पिपृहि विश्ववारे रयिन्नो धेहि सुभगे सुवीरम्।।

卐 निवेशनी सङ्गमनी वसूनाँ विश्वा रूपाणि वसून्यावेशयन्ती। सहस्रपोषꣳ सुभगा रराणा सा न आगन्वर्चसा।। 1।। ❀ सँविदाना।।

卐 अग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रा नादित्या निह जिन्वतम्। माध्यꣳ हि पौर्णमास ञ्जुषेथां ब्रह्मणा वृद्धौ सुकृतेन साता वथास्मभ्यꣳ सहवीराꣳ रयिन्नि यच्छतम्।।

आदित्याश्चाङ्गिरसश्चाग्नी नाऽदधत, ते दर्शपूर्णमासौ प्रैप्स,न्तेषा मङ्गिरसा न्निरुप्तꣳ हवि रासी,दथाऽऽदित्या एतौ होमा वपश्य- न्ता.वजुहवु- स्ततो वै ते दर्शपूर्णमासौ।। 2।। ❀ पूर्व आऽलभन्त, दर्शपूर्णमासा.वालभमान एतौ होमौ पुरस्ता ज्जुहुया-थ्साक्षादेव दर्शपूर्णमासा.वालभते, ब्रह्मवादिनो वदन्ति - स त्वै दर्शपूर्णमासा.वा लभेत- य एनयो रनुलोमञ्च प्रतिलोमञ्च विद्यादि,त्यमावास्याया ऊर्ध्व न्तदनुलोमं- पौर्णमास्यै प्रतीचीन न्तत्प्रतिलोमँ, यत्पौर्णमासीं पूर्वा मालभेत - प्रतिलोम मेना.वा लभेता-ऽमु मपक्षीयमाण मन्वप।। 3।। ❀ क्षीयेत, सारस्वतौ होमौ पुरस्ता.ज्जुहुया,दमावास्या वै सरस्व-त्यनुलोम मेवैना.वालभते-ऽमु माप्यायमान मन्वा प्यायते, आग्नावैष्णव मेकादशकपालं पुरस्ता न्निर्वपे- थ्सरस्वत्यै चरुꣳ- सरस्वते द्वादशकपालँ, यदाग्नेयो भव- त्यग्निर्वै यज्ञमुखँ- यज्ञमुख मेवर्द्धिं पुरस्ता.द्धत्ते, यद्वैष्णवो भवति - यज्ञो वै विष्णु - र्यज्ञमेवाऽऽरभ्य प्र तनुते, सरस्वत्यै चरु.र्भवति - सरस्वते द्वादशकपालो,ऽमावास्या वै सरस्वती - पूर्णमास स्सरस्वा - न्ता.वेव साक्षादा रभत- ऋध्नोत्याभ्या, न्द्वादशकपाल स्सरस्वते भवति- मिथुनत्वाय प्रजात्यै, मिथुनौ गावौ दक्षिणा समृद्ध्यै।। 4।। (वर्चसा वै ते दर्शपूर्णमासा वप तनुते सरस्वत्यै पञ्चविꣳशतिश्च। 1।)

ॐ❀ ऋषयो वा इन्द्रं प्रत्यक्ष.न्नापश्य-न्तँ वसिष्ठः प्रत्यक्ष मपश्य- थ्सोऽब्रवी-द्ब्राह्मण न्ते वक्ष्यामि - यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्ते,ऽथ मेतरेभ्य ऋषिभ्यो मा प्र वोच इति - तस्मा एता.न्थ्स्तोमभागा नब्रवी- त्ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त - तस्मा.द्वासिष्ठो ब्रह्मा कार्यः - प्रैव जायते,

卐रश्मिरसि क्षयाय त्वा क्षयञ्जि.न्वेति।। 5।।❀ आह - देवा वै क्षयो - देवेभ्य एव यज्ञं प्राऽऽह, 卐प्रेतिरसि धर्माय त्वा धर्म ञ्जिन्वेत्याह - मनुष्या वै धर्मो - मनुष्येभ्य एव यज्ञं प्राऽऽहा,ऽन्वितिरसि दिवे त्वा दिव ञ्जिन्वे-त्याहैभ्य एव लोकेभ्यो यज्ञं प्राऽऽह 卐विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टि ञ्जिन्वेत्याह - वृष्टि मेवाव।। 6।।❀ रुन्धे 卐 प्रवाऽ 卐स्यनुवाऽसी-त्याह - मिथुनत्वा- 卐योशिगसि वसुभ्यस्त्वा वसू न्जिन्वे-त्याहाष्टौ वसव - एकादश रुद्रा - द्वादशाऽऽदित्या - एतावन्तो वै देवा-स्तेभ्य एव यज्ञं प्राऽऽऽऽऽऽ,卐हौजोऽसि पितृभ्यस्त्वा पितृ न्जिन्वेत्याह - देवानेव पितृननु सन्तनोति 卐तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व।। 7।।❀ इत्याह - पितृनेव प्रजा अनु सन्तनोति 卐पृतनाषाडसि पशुभ्यस्त्वा पशू न्जिन्वेत्याह - प्रजा एव पशू ननु सन्तनोति, 卐रेवदस्योषधीभ्य स्त्वौषधी र्जिन्वे-त्याहौषधीष्वेव पशू न्प्रतिष्ठापय-卐त्यभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्र.ञ्जिन्वे-त्याहा-ऽभिजित्यॉ 卐अधिपतिरसि प्राणाय त्वा प्राणम्।। 8।। जिन्वेत्याह - प्रजास्वेव प्राणान्दधाति, 卐त्रिवृदसि 卐प्रवृदसीत्याह - मिथुनत्वाय, 卐सꣳरोहोऽसि 卐नीरोहोऽसी.त्याह - प्रजात्यै 卐वसुकोऽसि 卐वेषश्रिरसि 卐वस्यष्टिरसी-त्याह - प्रतिष्ठित्यै।। 9।। (जिन्वेत्यव प्रजा जिन्व प्राण न्त्रिꣳशच्च। 2।)

❀卐अग्निना देवेन पृतना जयामि - गायत्रेण छन्दसा - त्रिवृता स्तोमेन - रथन्तरेण साम्ना - वषट्कारेण वज्रेण - पूर्वजाꣳ न्भ्रातृव्या नधरा न्पादया-म्यवैना न्बाधे प्रत्येना न्नुदे-ऽस्मिन्क्षयेऽस्मि न्भूमिलोके-योऽस्मान्द्वेष्टि - यञ्च वय न्द्विष्मो- विष्णोः क्रमेणात्येना न्कामा-卐मीन्द्रेण देवेन पृतना जयामि - त्रैष्टुभेन छन्दसा - पञ्चदशेन स्तोमेन - बृहता साम्ना - वषट्कारेण वज्रेण।। 10। सहजानꣳ, 卐विश्वेभि र्देवेभिः पृतना जयामि - जागतेन छन्दसा - सप्तदशेन स्तोमेन - वामदेव्येन साम्ना - वषट्कारेण वज्रेणापरजा- 卐निन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः। घ्नन्तो वृत्राण्यप्रति।।

卐 यत्ते अग्ने तेज-स्तेनाह न्तेजस्वी भूयासँ 卐यत्ते अग्ने वर्च-स्तेनाहँ वर्चस्वी भूयासँ 卐यत्ते अग्ने हर-स्तेनाहꣳ हरस्वी भूयासम्।। 11।। (बृहता साम्ना वषट्कारेण वज्रेण षड्चत्वारिꣳशच्च। 3।)

❀卐ये देवा- यज्ञहनो- 卐-- यज्ञमुषः- पृथिव्या मध्यासते। अग्नि र्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्।।

卐 आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयो र्यो अस्ति। नाकङ्गृह्णाना स्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः।।

卐 ये देवा- यज्ञहनो- 卐--यज्ञमुषो- ऽन्तरिक्षेऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्।।

卐 यास्ते रात्री स्सवितः।। 12। देवयानी रन्तरा द्यावापृथिवी वियन्ति। गृहैश्च सर्वैः प्रजयाऽन्वग्रे सुवो रुहाणा स्तरता रजाꣳसि।।

卐ये देवा- यज्ञहनो- 卐-- यज्ञमुषोः- दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्।।

卐 येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आ धेह्येनम्।।

यज्ञहनो वै देवा यज्ञमुषः।। 13। सन्ति - त एषु लोकेष्वासत आददाना विमथ्नाना - यो ददाति यो यजते तस्य। ये देवा यज्ञहनः पृथिव्या मध्यासते ये अन्तरिक्षे ये दिवीत्या-हेमानेव लोकाꣳस्तीर्त्वा सगृह स्सपशु स्सुवर्गँ लोकमे,त्यप वै सोमेनेजाना द्देवताश्च यज्ञश्च क्राम,न्त्याग्नेयं पञ्चकपाल मुदवसानीय न्निर्वपे- दग्नि स्सर्वा देवताः-।। 14।।❀ पाङ्क्तो यज्ञो- देवता.श्चैव यज्ञञ्चाव रुन्धे, गायत्रो वा अग्नि र्गायत्रछन्दा-स्तञ्छन्दसा व्यर्धयति- यत्पञ्चकपाल.ङ्करो,त्यष्टकपालः कार्यो,ऽष्टाऽक्षरा गायत्री - गायत्रोऽग्नि र्गायत्रछन्दा- स्स्वेनैवैन.ञ्छन्दसा समर्धयति, पङ्क्त्यौ याज्याऽनुवाक्ये भवतः, पाङ्क्तो यज्ञ-स्तेनैव यज्ञा.न्नैति।। 15।। (सवित र्देवा यज्ञमुष स्सर्वा देवता स्त्रिचत्वारिꣳशच्च। 4।)

❀卐सूर्यो मा देवो देवेभ्यः पातु - वायु रन्तरिक्षा.द्यजमानोऽग्निर्मा पातु चक्षुषः। सक्ष शूष सवित र्विश्वचर्षणे - एतेभि स्सोम नामभि र्विधेम ते - तेभि स्सोम नामभि र्विधेम ते।।

卐 अहं परस्ता- दह मवस्ता - दह.ज्ज्योतिषा वि तमो ववार। यदन्तरिक्ष न्तदु मे पिताऽभू- दहꣳ सूर्य मुभयतो ददर्शा-ऽहं भूयास मुत्तम स्समानानाम्।। 16।।❀卐आ समुद्रा दाऽन्तरिक्षा त्प्रजापति रुदधि ञ्च्यावया-तीन्द्रः प्र स्नौतु- मरुतो वर्षय,卐न्तून्नम्भय पृथिवीं भिन्धीद न्दिव्य न्नभः। उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम्।।

पशवो वा एते - यदादित्य, एष रुद्रो - यदग्नि,रोषधीः प्रास्याग्ना.वादित्य .ञ्जुहोति - रुद्रादेव पशूनन्त र्दधा,त्यथो ओषधीष्वेव पशून्।। 17।।❀ प्रति.ष्ठापयति-

卐 कवि.र्यज्ञस्य वि तनोति पन्था- न्नाकस्य पृष्ठे अधि रोचने दिवः। येन हव्यँ वहसि यासि दूत- इतः प्रचेता अमुत स्सनीयान्।।

卐 यास्ते विश्वा स्समिध स्सन्त्यग्ने - याः पृथिव्यां बर्हिषि सूर्ये याः। तास्ते गच्छ.न्त्वाहुति.ङ्घृतस्य - देवायते यजमानाय शर्म।।

卐 आशासान स्सुवीर्य॒ - रायस्पोषꣳ स्वश्वियम्। बृहस्पतिना राया स्वगाकृतो - मह्यँ यजमानाय तिष्ठ।। 18।। (समानाना मोषधीष्वेव पशून्मह्यँ यजमानायैकञ्च। 5।)

卐सन्त्वा नह्यामि पयसा घृतेन - सन्त्वा नह्याम्यप ओषधीभिः। सन्त्वा नह्यामि प्रजयाऽह मद्य - सा दीक्षिता सनवो वाजमस्मे।।

卐 प्रैतु ब्रह्मणस्पत्नी - वेदिं वर्णेन सीदतु।।

卐 अथाह मनुकामिनी - स्वे लोके विशा इह।।

卐 सुप्रजसस्त्वा वय॒ - सुपत्नी रुप सेदिम। अग्ने सपत्नदम्भन - मदब्धासो अदाभ्यम्।।

卐 इमँ विष्यामि वरुणस्य पाशम्।। 19।। यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके - स्योनं मे सह पत्या करोमि।।

卐 प्रेह्युदे.ह्यृतस्य वामी- रन्वग्नि स्तेऽग्र न्नय- त्वदिति र्मध्य न्ददता॒ रुद्रावसृष्टाऽसि युवा नाम- मा मा हि॒सी 卐र्वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः- पन्नेजनी गृह्णामि- 卐--यज्ञाय वः पन्नेजनी स्सादयामि 卐विश्वस्य ते विश्वावतो वृष्णियावतः।। 20।। तवाग्ने वामीरनु सन्दृशि विश्वा रेता॒सि धिषी-यागन्देवान् यज्ञो नि देवी र्देवेभ्यो - यज्ञ मशिष न्नस्मि'2'न्थ्सुन्वति यजमान आशिष स्स्वाहाकृता स्समुद्रेष्ठा गन्धर्व मा तिष्ठतानु। वातस्य पत्म न्निड ईडिताः।। 21।। (पाशँ वृष्णियावत स्त्रि॒शच्च। 6।)

‡ वषट्कारो वा गायत्रियै शिरोऽच्छिन- त्तस्यै रसः पराऽपत-थ्स पृथिवीं प्राविश-थ्स खदिरोऽभव,द्यस्य खादिर स्स्रुवो भवति - छन्दसा मेव रसेनाव द्यति - सरसा अस्याऽऽहुतयो भवन्ति, तृतीयस्यामितो दिवि सोम आसी- त्तङ्गायत्र्याऽहर- त्तस्य पर्ण मच्छिद्यत- तत्पर्णोऽभव- त्तत्पर्णस्य पर्णत्वँ, यस्य पर्णमयी जुहूः।। 22।। भवति - सौम्या अस्याऽऽहुतयो भवन्ति - जुषन्तेऽस्य देवा आहुती,र्देवा वै ब्रह्म न्नवदन्त - तत्पर्ण उपाशृणो-थ्सुश्रवा वै नाम, यस्य पर्णमयी जुहूर्भवति - न पापꣳ श्लोक॒ शृणोति, ब्रह्म वै पर्णो - विण्मरुतोऽन्नँ विण्मारुतोऽश्वत्थो, यस्य पर्णमयी जुहू र्भव- त्याश्वत्थुपभृ-द्ब्रह्मणैवान्न मव रुन्धे-ऽथो ब्रह्म।। 23।। एव विश्यध्यूहति, राष्ट्रँ वै पर्णो - विडश्वत्थो, यत्पर्णमयी जुहू र्भव-त्याश्वत्थ्युपभृ-द्राष्ट्रमेव विश्यध्यूहति, प्रजापति र्वा अजुहो-थ्सा यत्राऽऽहुतिः प्रत्यतिष्ठ - त्ततो विकङ्कत उदतिष्ठ-त्ततः प्रजा असृजत, यस्य वैकङ्कती ध्रुवा भवति - प्रत्येवास्याऽऽहुतय

स्तिष्ठ-न्त्यथो प्रैव जायते, एतद्वै स्रुचाꣳ रूपँ, यस्यैवꣳरूपा स्स्रुचो भवन्ति - सर्वाण्येवैनꣳ रूपाणि पशूना मुप तिष्ठन्ते - नास्यापरूप मात्मन्जायते।। 24।। (जुहूरथो ब्रह्म स्रुचाꣳ सप्तदश च। 7।)

ॐ❀卐उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्त.ङ्गृह्णामि दक्षाय दक्षवृधे रात न्देवेभ्योऽग्निजिह्वेभ्य स्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्याऽऽत्मभ्यो दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा 卐ऽपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तञ्जहि 卐प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यो विश्वेभ्य स्त्वा भूतेभ्यो, यतः प्रजा अक्खिद्रा अजायन्त - तस्मै त्वा प्रजापतये विभूदाव्न्ने ज्योतिष्मते ज्योतिष्मन्त.ञ्जुहोमि।। 25।। (ओषधीभ्य श्चतुर्दश च। 8।)

ॐ❀ याँ वा अध्वर्युश्च यजमानश्च देवता मन्तरित-स्तस्या आ वृश्च्येते~, प्राजापत्य न्दधिग्रह.ङ्गृह्णीया,त्प्रजापति स्सर्वा देवता - देवताभ्य एव नि ह्नुवाते~, ज्येष्ठो वा एष ग्रहाणाँ - यस्यैष गृह्यते - ज्यैष्ठ्यमेव गच्छति, सर्वासाँ वा एत.द्देवतानाꣳ रूपँ - यदेष ग्रहो, यस्यैष गृह्यते -सर्वाण्येवैनꣳ रूपाणि पशूना मुप तिष्ठन्ते, उपयामगृहीतः।। 26।।❀ असि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्त.ङ्गृह्णामीत्याह - ज्योतिरेवैनꣳ समानाना.ङ्करो,त्यग्निजिह्वेभ्य स्त्वर्तायुभ्य इत्या-हैतावतीर्वै देवता- स्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णा,त्यपेन्द्र द्विषतो मन इत्याह - भ्रातृव्यापनुत्त्यै, प्राणाय त्वाऽपानाय त्वेत्याह - प्राणानेव यजमाने दधाति, तस्मै त्वा प्रजापतये विभूदाव्न्ने ज्योतिष्मते ज्योतिष्मन्त ञ्जुहोमि।। 27।।❀ इत्याह - प्रजापति स्सर्वा देवता - स्सर्वाभ्य एवैन न्देवताभ्यो जुहो,त्याज्यग्रह.ङ्गृह्णीया.त्तेजस्कामस्य - तेजो वा आज्य-न्तेजस्व्येव भवति, सोमग्रह.ङ्गृह्णीया.द्ब्रह्मवर्चसकामस्य - ब्रह्मवर्चसँ वै सोमो - ब्रह्मवर्चस्येव भवति, दधिग्रह.ङ्गृह्णीया.त्पशुकाम-स्योर्ग्वै दध्यू-र्क्पशव- ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे।। 28।। (उपयामगृहीतो जुहोमि त्रिचत्वारिꣳशच्च। 9।)

ॐ❀卐त्वे क्रतु मपि वृञ्जन्ति विश्वे - द्विर्यदेते त्रिर्भवन्त्यूमाः। स्वादो स्स्वादीय स्स्वादुना सृजा - समत ऊषु मधु मधुनाऽभि योधि।।

卐 उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टङ्गृह्णा 卐म्येष ते योनिः प्रजापतये त्वा।।

卐 प्राणग्रहा न्गृह्णा[76],॰त्येतावद्वा अस्ति - यावदेते ग्रहा स्स्तोमा श्छन्दाꣳसि पृष्ठानि दिशो, यावदेवास्ति तत्।। 29।।❀ अव रुन्धे, ज्येष्ठा वाँ एता न्ब्राह्मणाः पुरा विदामक्र- न्तस्मा त्तेषाꣳ सर्वा दिशोऽभिजिता अभूवन्, यस्यैते गृह्यन्ते - ज्यैष्ठ्यमेव गच्छ- त्यभि दिशो जयति, पञ्च गृह्यन्ते - पञ्च दिश- स्सर्वास्वेव दिक्ष्वृध्नुवन्ति, नवनव गृह्यन्ते - नव वै पुरुषे प्राणाः - प्राणानेव यजमानेषु दधति, प्रायणीये चोदयनीये च गृह्यन्ते, प्राणा वै प्राणग्रहाः।। 30।।❀ प्राणैरेव प्रयन्ति - प्राणै रुद्यन्ति, दशमेऽहन्गृह्यन्ते - प्राणा वै प्राणग्रहाः - प्राणेभ्यः खलु वाँ एत.त्प्रजा यन्ति, यद्वामदेव्यँ योने श्च्यवते - दशमेऽहन्वामदेव्यँ योने,श्च्यवते, यद्दशमेऽह न्गृह्यन्ते - प्राणेभ्य एव तत्प्रजा न यन्ति।। 31।। (तत्प्राणग्रहा स्सप्तत्रिꣳशच्च। 10।)

**वै।का।12 याज्या: 20 (एकोऽनुवाक: 1)**

❀卐प्रदेव न्देव्या धिया भरता जातवेदसम्। हव्या नो वक्षदानुषक्।।

卐 अयमुष्य प्र देवयुर् होता यज्ञाय नीयते। रथो न योरभिवृतो घृणीवाञ्चेतति त्मना।।

卐 अय मग्नि रुरुष्य त्यमृतादिव जन्मनः। सहसश्चि त्सहीयान्देवो जीवातवे कृतः।।

卐 इडायास्त्वा पदे वय न्नाभा पृथिव्या अधि। जातवेदो नि धीमह्यग्ने हव्याय वोढवे। 32।।

❀卐अग्ने विश्वेभि स्स्वनीक देवै रूर्णावन्तं प्रथम स्सीद योनिम्। कुलायिन ङ्घृतवन्तꣳ सवित्रे यज्ञ न्नय यजमानाय साधु।।

卐 सीद होत स्स्व उ लोके चिकित्वा न्थ्सादया यज्ञꣳ सुकृतस्य योनौ। देवावी र्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः।।

卐 नि होता होतृषदने विदान स्त्वेषो दीदिवाꣳ असद थ्सुदक्षः। अदब्धव्रतप्रमति र्वसिष्ठ स्सहस्रम्भर श्शुचिजिह्वो अग्निः।।

卐 त्व न्दूत स्त्वम्।। 33।।❀ उ नः परस्पा स्त्वँ वस्य आ वृषभ प्रणेता। अग्ने तोकस्य न स्तने तनूना मप्रयुच्छ न्दीद्यद्बोधि गोपाः।।

卐 अभि त्वा देव सवित रीशानँ वार्याणाम्। सदाऽव न्भागमीमहे।।

卐 मही द्यौः पृथिवी च न इमँ यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः।।

卐 त्वामग्ने पुष्करा दध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः।।

---

76

卐 तमु।। 34।। ❀ त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरम्।।
卐 तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्। धनञ्जयꣳ रणेरणे।।
卐 उत ब्रुवन्तु जन्तव उदग्नि र्वृत्रहाऽजनि। धनञ्जयो रणेरणे।।
卐 आ यꣳ हस्ते न खादिनꣳ शिशु ञ्जात न्न बिभ्रति। विशा मग्निꣳ स्वध्वरम्।।
卐 प्र देव न्देववीतये भरता वसुवित्तमम्। आ स्वे योनौ नि षीदतु।।
卐 आ।। 35।। ❀ जात ञ्जातवेदसि प्रियꣳ शिशीतातिथिम्। स्योन आ गृहपतिम्।।
卐 अग्निनाऽग्नि स्समिध्यते कवि र्गृहपति र्युवा। हव्यवाड्जुह्वास्यः।।
卐 त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण स‘2’न्थ्सता। सखा सख्या समिध्यसे।।
卐 तं मर्जयन्त सुक्रतुं पुरोयावान माजिषु। स्वेषु क्षयेषु वाजिनम्।।
卐 यज्ञेन यज्ञ मयजन्त देवा स्तानि धर्माणि प्रथमान्यासन्न्। ते ह नाकं महिमान स्सचन्ते यत्र पूर्वे साध्या स्सन्ति देवाः।। 36।। (वोढवे दूतस्त्व न्तमु सीद त्वा यत्र चत्वारि च। 11।)
(पूर्णऱ्षयोऽग्निना ये देवा स्सूर्यो मा सन्त्वा नह्यामि वषट्कार स्स खदिर उपयामगृहीतोऽसि याँ वै त्वे क्रतुं प्र देव मेकादश। 11। पूर्णा सहजान्तवाग्ने प्राणैरेव षट्त्रिꣳशत्। 36। पूर्णा सन्ति देवाः।)

## चतुर्थकाण्डम्

### चतुर्थकाण्डे प्रथमः प्रपाठकः

**आ।का।5 अग्निचयन मन्त्राः 1 (दशानुवाकाः 10)**

❀卐 युञ्जानः प्रथमं मन स्तत्त्वाय सविता धियः। अग्नि ञ्ज्योति र्निचाय्य पृथिव्या अध्याऽभरत्।।
卐 युक्त्वाय मनसा देवा न्थ्सुव र्यतो धिया दिवम्। बृहज्ज्योतिः करिष्यत स्सविता प्र सुवाति तान्।।
卐 युक्तेन मनसा वय न्देवस्य सवितु स्सवे। सुवर्गेयाय शक्त्यै।।
卐 युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इत्।। 1।। ❀ मही देवस्य सवितुः परिष्टुतिः।।
卐 युजे वां ब्रह्म पूर्व्यं न्नमोभि र्वि श्लोका यन्ति पथ्येव सूराः। शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः।।
卐 यस्य प्रयाण मन्वन्य इद्ययु र्देवा देवस्य महिमान मर्चतः। यः पार्थिवानि विममे स एतशो रजाꣳसि देव स्सविता महित्वना।।

卐 देव सवितः प्र सुव यज्ञं प्र सुव।। 2।।❀ यज्ञपतिं भगाय दिव्यो गन्धर्वः। केतपूः केतन्नः पुनातु वाच स्पति र्वाच मद्य स्वदाति नः।।

卐 इम न्नो देव सवित र्यज्ञं प्र सुव देवायुवᳬ सखिविदᳬ सत्राजित न्धनजितᳬ सुवर्जितम्।।

卐 ऋचा स्तोमᳬ समर्धय गायत्रेण रथन्तरम्। बृह द्गायत्रवर्तनि।।

卐 देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्या ङ्गायत्रेण छन्दसाऽऽददे ऽङ्गिरस्व 卐 दभ्रि रसि नारिः।। 3।।❀ असि पृथिव्या स्सधस्था दग्निं पुरीष्य मङ्गिरस्वदा भर त्रैष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्व 卐 द्बभ्रि रसि नारिरसि त्वया वयᳬ सधस्थ आऽग्निᳬ शकेम खनितुं पुरीष्य ञ्जागतेन त्वा छन्दसाऽऽददेऽङ्गिरस्व 卐 द्धस्त आधाय सविता बिभ्र दभ्रिᳬ हिरण्ययीम्। तया ज्योति रजस्र मिदग्नि ङ्खात्वी न आ भराऽऽनुष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वत्।। 4।। (इद्यज्ञं प्र सुव नारि रानुष्टुभेन त्वा छन्दसा त्रीणि च। 1।)

❀卐इमा मगृभ्णन्नशना मृतस्य पूर्व आयुषि विदथेषु कव्या। तया देवा स्सुत मा बभूवुरृतस्य साम न्थ्सर मारपन्ती।।

卐 प्रतूर्तँ वाजि न्ना द्रव वरिष्ठा मनु संँवतम्। दिवि ते जन्म परम मन्तरिक्षे नाभिः पृथिव्या मधि योनिः।।

卐 युञ्जाथाᳬ रासभँ युव मस्मिन् यामे वृषण्वसू। अग्निं भरन्त मस्मयुम्।।

卐 योगेयोगे तवस्तरँ वाजेवाजे हवामहे। सखाय इन्द्र मूतये।।

卐 प्रतूर्वन्न्।। 5।।❀ एह्यवक्राम न्नशस्ती रुद्रस्य गाणपत्या न्मयोभू रेहि। उर्वन्तरिक्ष मन्विहि स्वस्तिगव्यूति रभयानि कृण्वन्न्।।

卐 पूष्णा सयुजा सह। पृथिव्या स्सधस्था दग्निं पुरीष्य मङ्गिरस्व दच्छे 卐ह्यग्निं पुरीष्य मङ्गिरस्व दच्छे 卐मोऽग्निं पुरीष्य मङ्गिरस्व द्धरिष्या 卐मोऽग्निं पुरीष्य मङ्गिरस्व द्धरामः।।

卐 अन्वग्नि रुषसा मग्र मख्य दन्वहानि प्रथमो जातवेदाः। अनु सूर्यस्य।। 6।।❀ पुरुत्रा च रश्मी ननु द्यावापृथिवी आ ततान।।

卐 आगत्य वाज्यध्वन स्सर्वा मृधो वि धूनुते। अग्निᳬ सधस्थे महति चक्षुषा नि चिकीषते।।

卐 आक्रम्य वाजि न्पृथिवी मग्नि मिच्छ रुचा त्वम्। भूम्या वृत्वाय नो ब्रूहि यतः खनाम तँ वयम्।।

卐 द्यौस्ते पृष्ठं पृथिवी सधस्थ मात्माऽन्तरिक्ष॰ समुद्रस्ते योनिः। विख्याय चक्षुषा त्वमभि तिष्ठ।।
7।।❀ पृतन्यतः।।

卐 उत्क्राम महते सौभगायास्मा दास्थाना द्रविणोदा वाजिन्न्। वयꣳ स्याम सुमतौ पृथिव्या अग्नि
ङ्खनिष्यन्त उपस्थे अस्याः।।

卐 उदक्रमी द्रविणोदा वाज्यर्वाऽक स्स लोक॰ सुकृतं पृथिव्याः। ततः खनेम सुप्रतीक मग्नि॰ सुवो
रुहाणा अधि नाक उत्तमे।।

卐 अपो देवी रुप सृज मधुमती रयक्ष्माय प्रजाभ्यः। तासा॰ स्थाना दुज्जिहता मोषधय स्सुपिप्पलाः।।

卐 जिघर्मि।। 8।।❀ अग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा। पृथु न्तिरश्चा वयसा बृहन्तँ
व्यचिष्ठ मन्न॰ रभसँ विदानम्।।

卐 आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व। मर्यश्री स्स्पृहयद्वर्णो अग्नि र्नाभिमृशे तनुवा
जर्हृषाणः।।

卐 परि वाजपतिः कवि रग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे।।

卐 परित्वाऽग्ने पुरँ वयँ विप्र॰ सहस्य धीमहि। धृषद्वर्ण न्दिवेदिवे भेत्तारं भङ्गुरावतः।।

卐 त्वमग्ने द्युभि स्त्वमाशुशुक्षणि स्त्वमद्भ्य स्त्वमश्मन स्परि। त्वँ वनेभ्य स्त्वमोषधीभ्य स्त्वन्नृणा न्नृपते
जायसे शुचिः।। 9।। (प्रतूर्व'2'न्थ्सूर्यस्य तिष्ठ जिघर्मि भेत्तारँ वि॰शतिश्च। 2।)

❀卐देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्या स्सधस्थेऽग्निं पुरीष्य
मङ्गिरस्वत्खनामि।।

卐 ज्योतिष्मन्त न्त्वाऽग्ने सुप्रतीक मजस्रेण भानुना दीद्यानम्। शिवं प्रजाभ्योऽहि॰सन्तं पृथिव्या
स्सधस्थेऽग्निं पुरीष्य मङ्गिरस्वत्खनामि।।

卐 अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्य दपरावपिष्ठम्। वर्धमानं मह आ च पुष्कर न्दिवो मात्रया वरिणा
प्रथस्व।।

卐 शर्म च स्थः।। 10।।❀ वर्म च स्थो अच्छिद्रे बहुले उभे। व्यचस्वती सँ वसाथां भर्तमग्निं
पुरीष्यम्।।

卐 सँ वसाथा॰ सुवर्विदा समीची उरसा त्मना। अग्निमन्त र्भरिष्यन्ती ज्योतिष्मन्त मजस्र मित्।।

卐 पुरीष्योऽसि विश्वभराः। अथर्वा त्वा प्रथमो निरमन्थ दग्ने।।

卐 त्वामग्ने पुष्करा दध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः।।

卐 तमु त्वा दध्यङ्ङृषिः पुत्र ईधे।। 11।। ❀ अथर्वणः। वृत्रहणं पुरन्दरम्।।

卐 तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्। धनञ्जय रणेरणे।।

卐 सीद होत स्स्व उ लोके चिकित्वा न्थ्सादया यज्ञ सुकृतस्य योनौ। देवावी देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः।।

卐 नि होता होतृषदने विदान स्त्वेषो दीदिवा असद थ्सुदक्षः। अदब्धव्रतप्रमति र्वसिष्ठ स्सहस्रम्भर श्शुचिजिह्वो अग्निः।।

卐 स सीदस्व महा असि शोचस्व।। 12।। ❀ देववीतमः। वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम्।।

卐 जनिष्वा हि जेन्यो अग्रे अह्ना हितो हितेष्वरुषो वनेषु। दमेदमे सप्त रत्ना दधानोऽग्निर्होता निषसादा यजीयान्।। 13।। (स्थ ईधे शोचस्व सप्तविंशतिश्च। 3।)

❀卐सन्ते वायु र्मातरिश्वा दधातूत्तानायै हृदयँ यद्विलिष्टम्। देवानाँ य श्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यम्।

卐 सुजातो ज्योतिषा सह शर्म वरूथ माऽसद स्सुवः। वासो अग्ने विश्वरूप सँ व्ययस्व विभावसो।।

卐 उदु तिष्ठ स्वध्वरावा नो देव्या कृपा। दृशे च भासा बृहता सुशुक्वनि राऽग्ने याहि सुशस्तिभिः।। 14।।

❀卐ऊर्ध्व ऊषुण ऊतये तिष्ठा देवो न सविता। ऊर्ध्वो वाजस्य सनिता यदञ्जिभि र्वाघद्भि र्विह्वयामहे।।

卐 स जातो गर्भो असि रोदस्यो रग्ने चारु र्विभृत ओषधीषु। चित्रश्शिशुः परितमांस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः।।

卐 स्थिरो भव वीड्वङ्ग आशु र्भव वाज्यर्वन्न्। पृथु र्भव सुषद स्त्वमग्नेः पुरीषवाहनः।।

卐 शिवो भव।। 15।। ❀ प्रजाभ्यो मानुषीभ्य स्त्वमङ्गिरः। मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीन्।।

卐 प्रैतु वाजी कनिक्रद न्नानद द्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा।।

卐 रासभो वा ङ्कनिक्रद थ्सुयुक्तो वृषणा रथे। स वा मग्निं पुरीष्य माशु दूतो वहादितः।।

卐 वृषाऽग्निं वृषणं भरन्नपा ङ्गर्भं समुद्रियम्। अग्न आ याहि।। 16।। ❀ वीतय ऋत सत्यम्।।

卐 ओषधयः प्रति गृह्णीताग्नि मेतꣳ शिव मायन्त मभ्यत्र युष्मान्। व्यस्यन्विश्वा अमती रराती र्निषीदन्नो अप दुर्मतिꣳ हनत्।।
卐 ओषधयः प्रति मोदध्वमेनं पुष्पावती स्सुपिप्पलाः। अयँ वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थ माऽसदत्।। 17।। (सुशस्तिभि श्शिवो भव याहि षड्विꣳशच्च। 4।)
❀卐वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः। सुशर्मणो बृहत श्शर्मणि स्या मग्ने रहꣳ सुहवस्य प्रणीतौ।।
卐 आपो हि ष्ठा मयोभुव स्ता न ऊर्जे दधातन। महे रणाय चक्षसे।।
卐 यो व श्शिवतमो रस स्तस्य भाजयतेह नः। उशती रिव मातरः।।
卐 तस्मा अर ङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा चनः।।
卐 मित्रः।। 18।।❀ सꣳसृज्य पृथिवीं भूमिञ्च ज्योतिषा सह। सुजात ञ्जातवेदस मग्निँ वैश्वानरँ विभुम्।।
卐 अयक्ष्माय त्वा सꣳ सृजामि प्रजाभ्यः। विश्वे त्वा देवा वैश्वानरा स्सꣳ सृजन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्।।
卐 रुद्रा स्सम्भृत्य पृथिवीं बृहज्ज्योति स्समीधिरे। तेषां भानु रजस्र इच्छुक्रो देवेषु रोचते।।
卐 सꣳसृष्टाँ वसुभी रुद्रै धीरैः कर्मण्यां मृदम्। हस्ताभ्यां मृद्वी ङ्कृत्वा सिनीवाली करोतु।।19।।❀ ताम्।।
卐 सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा। सा तुभ्यमदिते मह ओखा न्दधातु हस्तयोः।।
卐 उखा ङ्करोतु शक्त्या बाहुभ्या मदिति र्धिया। माता पुत्रँ यथोपस्थे साऽग्निं बिभर्तु गर्भ आ।।
卐 मखस्य शिरोऽसि 卐 यज्ञस्य पदे स्थः।।
卐 वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्व त्पृथिव्यसि- 卐 रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्व दन्तरिक्षमसि--।। 20।।❀卐 आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्व द्यौरसि- 卐 विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वाऽऽनुष्टुभेन छन्दसाऽङ्गिरस्व द्दिशोऽसि- ध्रुवाऽसि धारया मयि प्रजाꣳ राय स्पोष ङ्गौपत्यꣳ सुवीर्यꣳ सजातान् यजमाना 卐 यादित्यै रास्ना 卐ऽस्यदिति स्ते बिल ङ्गृह्णातु पाङ्क्तेन छन्दसाऽङ्गिरस्वत्।।

卐 कृत्वाय सा महीमुखां मृन्मयीँ योनि मग्नये। तां पुत्रेभ्य स्सं प्रायच्छ ददिति श्श्रपयानिति।। 21।।
(मित्रः करोत्वन्तरिक्षमसि प्र चत्वारि च। 5।)
卐वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्व 卐 द्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्व 卐 दादित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्व 卐 द्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्व 卐 दिन्द्रस्त्वा धूपयत्वङ्गिरस्व 卐 द्विष्णुस्त्वा धूपयत्वङ्गिरस्व 卐 द्वरुणस्त्वा धूपयत्वङ्गिरस्व 卐 ददितिस्त्वा देवी विश्वदेव्यावती पृथिव्या स्सधस्थेऽङ्गिरस्व त्खनत्ववट 卐 देवानान्त्वा पत्नीः।। 22।। देवी र्विश्वदेव्यावतीः पृथिव्या स्सधस्थेऽङ्गिरस्व द्दधतूखे 卐 धिषणास्त्वा देवी र्विश्वदेव्यावतीः पृथिव्या स्सधस्थेऽङ्गिरस्व दभीन्धता मुखे 卐 ग्नास्त्वा देवी र्विश्वदेव्यावतीः पृथिव्या स्सधस्थेऽङ्गिरस्व च्छ्रपयन्तूखे 卐 वरूत्रयो 卐 जनयस्त्वा देवी र्विश्वदेव्यावतीः पृथिव्या स्सधस्थेऽङ्गिरस्व त्पचन्तूखे।।
卐 मित्रैता मुखां पचैषा मा भेदि। एतान्ते परि ददाम्यभित्यै।।
卐 अभीमाम्।। 23।। महिना दिवं मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीम्।।
卐 मित्रस्य चर्षणीधृत श्श्रवो देवस्य सानसिम्। द्युम्न श्चित्रश्रवस्तमम्।।
卐 देवस्त्वा सवितोद्वपतु सुपाणि स्स्वङ्गुरिः। सुबाहु रुत शक्त्या।।
卐 अपद्यमाना पृथिव्याशा दिश आ पृण। उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम्।।
卐 वसवस्त्वाऽऽच्छृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्व द्रुद्रास्त्वा ऽऽच्छृन्दन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्व 卐 दादित्यास्त्वाऽऽच्छृन्दन्तु जागतेन छन्दसाऽङ्गिरस्व 卐 द्विश्वे त्वा देवा वैश्वानरा आ च्छृन्दन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्।। 24।। (पत्नी रिमाऽ रुद्रास्त्वाऽऽच्छृन्द न्त्वेकान्न विंशतिश्च। 6।)
卐समास्त्वाऽग्न ऋतवो वर्धयन्तु सँवथ्सरा ऋषयो यानि सत्या। स न्दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशः पृथिव्याः।।
卐 सञ्चेध्यस्वाग्ने प्र च बोधयैन मुच्च तिष्ठ महते सौभगाय। मा च रिष दुपसत्ता ते अग्ने ब्रह्माणस्ते यशस स्सन्तु माऽन्ये।।
卐 त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने।। 25।। सँवरणे भवा नः। सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन्न्।।

卐 इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्पूर्वचितो निकारिणः। क्षत्रमग्ने सुयममस्तु तुभ्य मुपसत्ता वर्धतान्ते अनिष्टृतः।।

卐 क्षत्रेणाग्ने स्वायु स्स॰ रभस्व मित्रेणाग्ने मित्रधेये यतस्व। सजातानां मध्यमस्था एधि राज्ञा मग्ने विहव्यो दीदिहीह।।

卐 अति।। 26।। ❀ निहो अति स्त्रिधोऽत्यचित्ति मत्यराति मग्ने। विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्य॰ सहवीरा॰ रयिन्दाः।।

卐 अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह। विश्वा आशाः प्रमुञ्च न्मानुषी र्भिय श्शिवाभि रद्य परि पाहि नो वृधे।।

卐 बृहस्पते सवित र्बोधयैन॰ स॰शित श्चित्सन्तरा॰ स॰ शिशाधि। वर्धयैनँ महते सौभगाय।। 27।। ❀ विश्व एन मनु मदन्तु देवाः।।

卐 अमुत्रभूया दध यद्यमस्य बृहस्पते अभिशस्ते रमुञ्चः। प्रत्यौहता मश्विना मृत्यु मस्मा द्देवाना मग्ने भिषजा शचीभिः।।

卐 उद्वय न्तमसस्परि पश्यन्तो ज्योति रुत्तरम्। देवन्देवत्रा सूर्य मगन्म ज्योति रुत्तमम्।। 28।। (इमे शिवो अग्नेऽति सौभगाय चतुस्त्रि॰शच्च। 7।)

❀卐ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोची॰ष्यग्नेः। द्युमत्तमा सुप्रतीकस्य सूनोः।

卐 तनूनपा दसुरो विश्ववेदा देवो देवेषु देवः। पथ आऽनक्ति मध्वा घृतेन।।

卐 मध्वा यज्ञ न्नक्षसे प्रीणानो नराश॰सो अग्ने। सुकृद्देव स्सविता विश्ववारः।।

卐 अच्छायमेति शवसा घृतेनेडानो वह्नि र्नमसा। अग्निꣳ स्रुचो अध्वरेषु प्रयथ्सु।।

卐 स यक्षदस्य महिमान मग्ने स्सः।। 29।। ❀ ईमन्द्रासु प्रयसः। वसुश्चेतिष्ठो वसुधातमश्च।।

卐 द्वारो देवी रन्वस्य विश्वे व्रता ददन्ते अग्नेः। उरुव्यचसो धाम्ना पत्यमानाः।।

卐 ते अस्य योषणे दिव्ये न योनावुषासानक्ता। इमँ यज्ञ मवता मध्वरन्नः।।

卐 दैव्या होतारावूर्ध्व मध्वर न्नोऽग्ने र्जिह्वा मभि गृणीतम्। कृणुतन्न स्स्विष्टिम्।।

卐 तिस्रो देवी र्बर्हि रेद॰ सदन्त्विडा सरस्वती।। 30।। ❀ भारती। मही गृणाना।।

卐 तन्न स्तुरीप मद्भुतं पुरुक्षु त्वष्टा सुवीरम्। राय स्पोषँ विष्यतु नाभि मस्मे।।

卐 वनस्पतेऽव सृजा रराणस्त्मना देवेषु। अग्निर्हव्य॰ शमिता सूदयाति।।

卐 अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम्। विश्वे देवा हविरिद ञ्जुषन्ताम्।।

卐 हिरण्यगर्भ स्समवर्तताग्रे भूतस्य जातः पति रेक आसीत्। स दाधार पृथिवीन्द्याम्।। 31।। ❀ उतेमा ङ्कस्मै देवाय हविषा विधेम।।

卐 यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपद श्चतुष्पदः कस्मै देवाय हविषा विधेम।।

卐 य आत्मदा बलदा यस्य विश्व उपाऽऽसते प्रशिषँ यस्य देवाः। यस्य छायाऽमृतँ यस्य मृत्युः कस्मै देवाय हविषा विधेम।।

卐 यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सह।। 32।। ❀ आहुः। यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम।।

卐 यङ्क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने। यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम।।

卐 येन द्यौरुग्रा पृथिवी च दृढे येन सुव स्स्तभितँ येन नाकः। यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम।।

卐 आपो ह यन्महती र्विश्वम्।। 33। आयन्दक्ष न्दधाना जनयन्ती रग्निम्। ततो देवाना न्निरवर्ततासु रेकः कस्मै देवाय हविषा विधेम।।

卐 यश्चिदापो महिना पर्यपश्य द्दक्ष न्दधाना जनयन्ती रग्निम्। यो देवेष्वधि देव एक आसी त्कस्मै देवाय हविषा विधेम।। 34।। (अग्ने स्स सरस्वती द्याꣳ सह विश्व श्चतुस्त्रिꣳशच्च। 8। ऊर्ध्वा यः प्राणतो य आत्मदा यस्येमे यङ्क्रन्दसी येन द्यौरापो ह यत्ततो देवानाँ यश्चिदापो यो देवेषु नव।)

❀卐आकूति मग्नि प्रयुजꣳ स्वाहा 卐 मनो मेधामग्निं प्रयुजꣳ स्वाहा 卐 चित्तँ विज्ञात मग्निं प्रयुजꣳ स्वाहा 卐 वाचो विधृति मग्निं प्रयुजꣳ स्वाहा 卐 प्रजापतये मनवे स्वाहा 卐ऽग्नये वैश्वानराय स्वाहा 卐 विश्वे देवस्य नेतु र्मर्तो वृणीत सख्यँ विश्वे राय इषुध्यसि द्युम्नँ वृणीत पुष्यसे स्वाहा 卐 मा सु भित्था मा सु रिषो दृꣳहस्व वीडयस्व सु। अम्ब धृष्णु वीरयस्व।। 35।। ❀ अग्निश्चेद ङ्करिष्यथः।।

卐 दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधाया कृताऽसि। जुष्ट न्देवाना मिदमस्तु हव्य मरिष्टा त्वमुदिहि यज्ञे अस्मिन्न्।।

卐 मित्रैता मुखा न्तपैषा मा भेदि। एतान्ते परि ददाम्यभित्यै। द्वन्न स्सर्पिरासुतिः प्रत्नो होता वरेण्यः।।

卐 सहस स्पुत्रो अद्भुतः। परस्या अधि सँवतोऽवरा॰ अभ्या।। 36।।❀ तर। यत्राहमस्मि ता॰ अव।।

卐 परमस्याः परावतो रोहिदश्व इहाऽऽगहि। पुरीष्यः पुरुप्रियोऽग्ने त्वन्तरा मृधः।

卐 सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैना मर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्या॰ शुक्रज्योति विं भाहि।

卐 अन्तरग्ने रुचा त्व मुखायै सदने स्वे। तस्यास्त्व॰ हरसा तपन्जातवेद शिवो भव।।

卐 शिवो भूत्वा मह्य मग्नेऽथो सीद शिवस्त्वम्। शिवाः कृत्वा दिश स्सर्वा स्स्वाँ योनि मिहाऽऽसदः।। 37।। (वीरयस्वा तपन्विं॰शतिश्च। 9।)

❀卐यदग्ने यानि कानि चाते दारूणि दध्मसि। तदस्तु तुभ्यमिद्घृत न्तज्जुषस्व यविष्ठ्य।।

卐 यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति। सर्वन्तदस्तु ते घृत न्तजुषस्व यविष्ठ्य।।

卐 रात्रि॰रात्रि मप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै। रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम।।

卐 नाभा।। 38।।❀ पृथिव्या स्समिधान मग्नि॰ राय स्पोषाय बृहते हवामहे। इरंमदं बृहदुक्थँ यजत्र ञ्जेतार मग्निं पृतनासु सासहिम्।।

卐 या स्सेना अभीत्वरी राव्याधिनी रुगणा उत। ये स्तेना ये च तस्करा स्ता॰ स्ते अग्नेऽपि दधाम्यास्ये।।

卐 द॰ष्ट्राभ्यां मलिम्लू न्जम्भ्यै स्तस्करा॰ उत। हनूभ्या॰ स्तेना न्भगव स्ता॰ स्त्वङ्खाद सुखादितान्।।

卐 ये जनेषु मलिम्लव स्तेनास स्तस्करा वने। ये।। 39।।❀ कक्षेष्वघायव स्ता॰स्ते दधामि जम्भयोः।।

卐 यो अस्मभ्य मरातीया द्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मा न्दिप्साच्च सर्व न्तं मस्मसा कुरु।।

卐 स॰शितं मे ब्रह्म स॰शितँ वीर्यं बलम्। स॰शितङ्ख्षत्रं जिष्णु यस्याहमस्मि पुरोहितः।।

卐 उदेषां बाहू अतिर मुद्वर्च उदू बलम्। क्षिणोमि ब्रह्मणाऽमित्रा नुन्नयामि।। 40।।❀ स्वा॰ अहम्।।

卐 दृशानो रुक्म उर्व्या व्यद्यौ दुर्मर्ष मायु श्श्रिये रुचानः। अग्नि रमृतो अभव द्वयोभि र्यदेन न्द्यौरजनय थ्सुरेताः।।

卐 विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावी द्भद्र न्द्विपदे चतुष्पदे। वि नाक मरव्य थ्सविता वरेण्योऽनु प्रयाण मुषसो वि राजति।।
卐 नक्तोषासा समनसा विरूपे धापयेते शिशु मेकꣳ समीची। द्यावा क्षामा रुक्मः। 41।। ❀ अन्त र्वि भाति देवा अग्नि न्धारय न्द्रविणोदाः।।
卐 सुपर्णोऽसि गरुत्मा न्त्रिवृत्ते शिरो गायत्र ञ्चक्षु स्स्तोम आत्मा साम ते तनू र्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छ ञ्छन्दाꣳस्यङ्गानि धिष्णिया श्शफा यजूꣳषि नाम।।
卐 सुपर्णोऽसि गरुत्मा न्दिव ङ्गच्छ सुवः पत।। 42।। (नाभा वने ये नयामि क्षामा रुक्मोऽष्टात्रिꣳशच्च। 10।)

**वै।का।12 याज्याः 21 (एकोऽनुवाकः 1)**

❀卐अग्ने यँ यज्ञ मध्वरँ विश्वतः परिभूरसि। स इद्देवेषु गच्छति।।
卐 सोम यास्ते मयोभुव ऊतय स्सन्ति दाशुषे। ताभिर्नोऽविता भव।।
卐 अग्नि र्मूर्धा[77]❀ 卐 भुवः[78]❀।। 卐 त्वन्न स्सोम[79]❀ 卐 या ते धामानि[80]❀।।
卐 तथ्सवितु र्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।
卐 अचित्ती यच्चकृमा दैव्ये जने दीनै र्दक्षैः प्रभूती पूरुषत्वता। 43।। ❀ देवेषु च सवित र्मानुषेषु च त्वन्नो अत्र सुवता दनागसः।।
卐 चोदयित्री सूनृताना ञ्चेतन्ती सुमतीनाम्। यज्ञ न्दधे सरस्वती।।
卐 पावीरवी कन्या चित्राऽऽयु स्सरस्वती वीरपत्नी धियं न्धात्। ग्नाभि रच्छिद्रꣳ शरणꣳ सजोषा दुराधर्ष ङ्गृणते शर्म यꣳसत्।।
卐 पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजꣳ सनोतु नः।।
卐 शुक्रन्ते अन्यद्यजतन्ते अन्यत्।। 44।। ❀ विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावो भद्रा ते पूष न्निह राति रस्तु।।
卐 तेऽवर्धन्त स्वतवसो महित्वनाऽऽनाक न्तस्थु रुरु चक्रिरे सदः। विष्णु र्यद्धाऽऽवद्वृषणं मदच्युतँ वयो न सीदन्नधि बर्हिषि प्रिये।।

77

78

79

80

卐 प्र चित्र मर्कङ्गृणते तुराय मारुताय स्वतवसे भरध्वम्। ये सहाꣳसि सहसा सहन्ते।। 45।। ❀ रेजते अग्ने पृथिवी मखेभ्यः।।
卐 विश्वे देवा[81]❃ 卐 विश्वे देवाः[82]❃।
卐 द्यावा नः पृथिवी इमꣳ सिध्र मद्य दिविस्पृशम्। यज्ञ न्देवेषु यच्छताम्।।
卐 प्र पूर्वजे पितरा नव्यसीभि र्गीर्भिः कृणुध्वꣳ सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वाँ वरूथम्।।
卐 अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम्। हव्या देवेषु नो दधत्।।
卐 स हव्यवाडमर्त्य उशिग्दूत श्चनोहितः। अग्नि र्धिया समृण्वति।।
卐 शन्नो भवन्तु[83]❃ 卐 वाजेवाजे[84]❃।। 46।। (पूरुषत्वता यजतन्ते अन्य थ्सहन्ते चनोहितोऽष्टौ च। 11।)
(युञ्जान इमामगृभ्ण न्देवस्य सन्ते वि पाजसा वसवस्त्वा समास्त्वोर्ध्वा अस्याऽऽकूतिँ यदग्ने यान्यग्ने यँ यज्ञ मेकादश। 11। युञ्जानो वर्म च स्थ आदित्यास्त्वा भारती स्वाꣳ अहꣳ षड्चत्वारिꣳशत्। 46। युञ्जानो वाजेवाजे।)

## ॐ चतुर्थ काण्डे द्वितीयः प्रपाठकः

### आ।का।5 अग्निचयन मन्त्राः 2 (दशानुवाकाः 10)

❀卐विष्णोः क्रमोऽस्यभिमातिहा गायत्रञ्छन्द आ रोह पृथिवी मनु वि क्रमस्व निर्भक्त स्स यन्द्विष्मो
卐 विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभ ञ्छन्द आ रोहाऽन्तरिक्ष मनु वि क्रमस्व निर्भक्त स्स यन्द्विष्मो
卐 विष्णोः क्रमोऽस्यरातीयतो हन्ता जागत ञ्छन्द आ रोह दिव मनु वि क्रमस्व निर्भक्त स्स यन्द्विष्मो
卐 विष्णोः।। 1।। ❀ क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभ ञ्छन्द आ रोह दिशोऽनु वि क्रमस्व निर्भक्त स्स यन्द्विष्मः।
卐 अक्रन्द दग्नि स्स्तनयन्निव द्यौः क्षामा रेरिह द्वीरुध स्समञ्जन्न्। सद्यो जज्ञानो वि हीं मिद्धो अख्यदा रोदसी भानुना भात्यन्तः।।
卐 अग्नेऽभ्यावर्ति न्नभि न आ वर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन।।

81
82
83
84

卐 अग्ने।। 2।।❀ अङ्गिर श्शतन्ते सन्त्वावृत स्सहस्रन्त उपाऽऽवृतः। तासां पोषस्य पोषेण पुनर्नो नष्ट मा कृधि पुनर्नो रयि मा कृधि।।

卐 पुन रूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः।।

卐 सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया। विश्वफ्स्निया विश्वतस्परि।।

卐 उदुत्तमँ वरुण पाश मस्म दवाधमम्।। 3।।❀ वि मध्यमꣳ श्रथाय। अथा वय मादित्य व्रते तवानागसो अदितये स्याम।।

卐 आ त्वाऽहार्ष मन्तरभू र्ध्रुव स्तिष्ठाऽविचाचलिः। विशस्त्वा सर्वा वाञ्छन्त्वस्मि न्राष्ट्र मधि श्रय।

卐 अग्ने बृहन्नुषसा मूर्ध्वो अस्था न्निर्जगन्वा न्तमसो ज्योतिषाऽऽऽगात्। अग्नि र्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः।।

卐 सीद त्वं मातुरस्याः।। 4।।❀ उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याꣳ शुक्रज्योति र्वि भाहि।।

卐 अन्तरग्ने रुचा त्वमुखायै सदने स्वे। तस्यास्त्वꣳ हरसा तप न्जातवेद श्शिवो भव।।

卐 शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम्। शिवाः कृत्वा दिश स्सर्वा स्वाँ योनि मिहाऽऽऽसदः।।

卐 हꣳस श्शुचिष द्वसु रन्तरिक्षस द्धोता वेदिष दतिथि र्दुरोणसत्। नृषद्वरस दृतसद्व्योमस दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। 5।। (दिवमनु वि क्रमस्व निर्भक्त स्स यन्द्विष्मो विष्णो र्धनेनाग्नेऽधम मस्या श्शुचिष थ्षोडश च। 1।)

❀卐दिव स्परि प्रथमञ्जज्ञे अग्निरस्म द्वितीयं परि जातवेदाः। तृतीय मफ्सु नृमणा अजस्र मिन्धान एन ञ्जरते स्वाधीः।।

卐 विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा। विद्मा ते नाम परमङ्गुहा यद्विद्मा तमुथ्सँ यत आ जगन्थ।।

卐 समुद्रे त्वा नृमणा अफ्स्वन्त र्नृचक्षा ईधे दिवो अग्न ऊधन्न्। तृतीये त्वा।। 6।।❀ रजसि तस्थिवाꣳस मृतस्य योनौ महिषा अहिन्वन्न्।।

卐 अक्रन्द दग्नि स्स्तनयन्निव द्यौः क्षामा रेरिह द्वीरुध स्समञ्जन्न्। सद्यो जज्ञानो वि हीं मिद्धो अख्यदा रोदसी भानुना भात्यन्तः।।

卐 उशिक्पावको अरति स्सुमेधा मर्तेष्वग्नि रमृतो नि धायि। इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत्।।

卐 विश्वस्य केतु र्भुवनस्य गर्भ आ।। 7।।❀ रोदसी अपृणा ज्जायमानः। वीडुञ्चिदद्रि मभिनत्पराय न्जना यदग्नि मयजन्त पञ्च।।

卐 श्रीणा मुदारो धरुणो रयीणां मनीषाणां प्रार्पण स्सोमगोपाः। वसो स्सूनु स्सहसो अप्सु राजा वि भात्यग्र उषसा मिधानः।।

卐 यस्ते अद्य कृणव द्भद्रशोचेऽपूप न्देव घृतवन्त मग्ने। प्र तन्नय प्रतराँ वस्यो अच्छाभि द्युम्न न्देवभक्तं यविष्ठ।।

卐 आ।। 8।।❀ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने। प्रिय स्सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनद दुज्जनित्वैः।।

卐 त्वामग्ने यजमाना अनु द्यून् विश्वा वसूनि दधिरे वार्याणि। त्वया सह द्रविण मिच्छमाना व्रज ङ्गोमन्त मुशिजो वि वव्रुः।।

卐 दृशानो रुक्म उर्व्या व्यद्यौ दुर्मर्षमायु श्श्रिये रुचानः। अग्नि रमृतो अभव द्वयोभि र्यदेन न्द्यौरजनय थ्सुरेताः।। 9।। (तृतीये त्वा गर्भ आ यविष्ठा यच्चत्वारि च। 2।)

❀卐अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्रदातार न्तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पदे।।

卐 उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः। स नो भव शिवतम स्सुप्रतीको विभावसुः।।

卐 प्रेदग्ने ज्योतिष्मान् याहि शिवेभि रर्चिभि स्त्वम्। बृहद्भि र्भानुभि र्भासन्मा हि॰सी स्तनुवा प्रजाः।।

卐 समिधाऽग्नि न्दुवस्यत घृतै र्बोधयतातिथिम्। आ।। 10।।❀ अस्मिन् हव्या जुहोतन।।

卐 प्रप्राय मग्नि र्भरतस्य श्रृण्वे वि यथ्सूर्यो न रोचते बृहद्भाः। अभि यः॰ पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथि श्शिवो नः।।

卐 आपो देवीः॰ प्रति गृह्णीत भस्मैतथ्स्योने कृणुध्व॰ सुरभावु लोके। तस्मै नमन्ता ञ्जनय स्सुपत्नी र्मातेव पुत्रं बिभृता स्वेनम्।।

卐 अफ्स्वग्ने सधिष्टव।। 11।।❀ सौषधी रनु रुध्यसे। गर्भे सञ्जायसे पुनः।।

卐 गर्भो अस्योषधीना ङ्गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि।।

卐 प्रसद्य भस्मना योनि मपश्च पृथिवी मग्ने। स॰सृज्य मातृभिस्त्व ञ्ज्योतिष्मा न्पुनराऽसदः।।

卐 पुनरासद्य सदन मपश्च पृथिवी मग्ने। शेषे मातु र्यथोपस्थेऽन्तरस्या॰ शिवतमः।।
卐 पुनरूर्जा।। 12।। ❀ नि वर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः।।
卐 सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया। विश्वफ्स्निया विश्वतस्परि।।
卐 पुन स्त्वाऽऽदित्या रुद्रा वसव स्समिन्धतां पुन र्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्व न्तनुवो वर्धयस्व सत्या स्सन्तु यजमानस्य कामाः।।
卐 बोधा नो अस्य वचसो यविष्ठ म॰हिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वन्दारु स्ते तनुवँ वन्दे अग्ने।।
卐 स बोधि सूरि र्मघवा वसुदावा वसुपतिः। युयोध्यस्मद्द्वेषा॰सि।। 13।। (आ तवोर्जाऽनु षोडश च। 3।)
🏺❀卐अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः। अदादिदँ यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै।।
卐 अग्ने र्भस्मास्यग्नेः पुरीषमसि 卐 सं'2'ज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्।।
卐 सँ या वः प्रिया स्तनुव स्सं प्रिया हृदयानि वः। आत्मा वो अस्तु।। 14।। ❀ संप्रिय स्संप्रिया स्तनुवो मम।।
卐 अय॰ सो अग्नि र्यस्मि'2'न्थ्सोम मिन्द्र स्सुत न्दधे जठरे वावशानः। सहस्रियँ वाज मत्यन्न सप्ति॰ ससवा न्थ्स'2'न्थ्स्तूयसे जातवेदः।।
卐 अग्ने दिवो अर्ण मच्छा जिगास्यच्छा देवा॰ ऊचिषे धिष्णिया ये। याः परस्ता द्रोचने सूर्यस्य याश्चावस्ता दुपतिष्ठन्त आपः।।
卐 अग्ने यत्ते दिवि वर्चः पृथिव्याँ यदोषधीषु।। 15।। ❀ अप्सु वा यजत्र। येनान्तरिक्ष मुर्वाततन्थ त्वेष स्स भानु रर्णवो नृचक्षाः।।
卐 पुरीष्यासो अग्नयः प्रावणेभि स्सजोषसः। जुषन्ता॰ हव्य माहुत मनमीवा इषो महीः।।
卐 इडा मग्ने पुरुद॰स॰ सनिङ्गो श्श्वत्तम॰ हवमानाय साध। स्यान्न स्सूनु स्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे।।
卐 अयन्ते योनिरृत्वियो यतो जातो अरोचथाः। तञ्जानन्न्।। 16।। ❀ अग्न आ रोहाथा नो वर्धया रयिम्।।

卐 चिदसि तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद 卐 परिचिदसि तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद 卐 लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पति रस्मिन् योना वसीषदन्न्।।

卐 ता अस्य सूददोहस स्सोमꣳ श्रीणन्ति पृश्ञ्यः। जन्म न्देवानाँ विश स्त्रिष्वा रोचने दिवः।। 17।।

(अस्त्वोषधीषु जान न्नष्टाचत्वारिꣳशच्च। 4।)

🏺❀卐समितꣳ सङ्कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ। इषमूर्ज मभि सँवसानौ सँ वां मनाꣳसि सँ व्रता समु चित्तान्याऽकरम्।।

卐 अग्ने पुरीष्याधिपा भवा त्वन्नः। इषमूर्जँ यजमानाय धेहि।।

卐 पुरीष्य स्त्वमग्ने रयिमा न्पुष्टिमाꣳ असि। शिवा॰ कृत्वा दिश स्सर्वा स्स्वाँ योनि मिहाऽऽसदः।।

卐 भवत न्न स्समनसौ समोकसौ।। 18।।❀ अरेपसौ। मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपति ञ्जातवेदसौ शिवौ भवत मद्य नः।।

卐 मातेव पुत्रं पृथिवी पुरीष्य मग्निꣳ स्वे योना वभा रुखा। ताँ विश्वै र्देवैरृतुभि स्सँविदान॰ प्रजापति र्विश्वकर्मा वि मुञ्चतु।।

卐 यदस्य पारे रजस श्शुक्र ञ्ज्योति रजायत। तन्न॰ पर्षदति द्विषोऽग्ने वैश्वानर स्स्वाहा।।

卐 नम स्सु ते निरृते विश्वरूपे।। 19।।❀ अयस्मयँ वि चृता बन्धमेतम्। यमेन त्वँ यम्या सँविदानोत्तम न्नाक मधि रोहयेमम्।।

卐 यत्ते देवी निरृति राबबन्ध दाम ग्रीवास्वविचर्त्यम्। इदन्ते तद्विष्या म्यायुषो न मध्या दथा जीव॰ पितुमद्धि प्रमुक्तः।।

卐 यस्या स्ते अस्या॰ क्रूर आसन्जुहोम्येषां बन्धाना मवसर्जनाय। भूमिरिति त्वा जना विदु र्निरृतिः।। 20।।❀ इति त्वाऽहं परि वेद विश्वतः।।

卐 असुन्वन्त मयजमान मिच्छ स्तेनस्येत्या न्तस्करस्यान्वेषि। अन्यमस्म दिच्छ सा त इत्या नमो देवि निरृते तुभ्यमस्तु।।

卐 देवीमह न्निरृतिँ वन्दमान॰ पितेव पुत्र न्दसये वचोभिः। विश्वस्य या जायमानस्य वेद शिरश्शिर॰ प्रति सूरी वि चष्टे।।

卐 निवेशन स्सङ्गमनो वसूनाँ विश्वा रूपाऽभि चष्टे।। 21।।❀ शचीभिः। देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्।।

卐 सँ वरत्रा दधातन नि राहावा न्कृणोतन। सिञ्चामहा अवट मुद्रिणँ वयँ विश्वाऽहाऽदस्त मक्षितम्।।

卐 निष्कृताऽऽहाव मवटꣳ सुवरत्रꣳ सुषेचनम्। उद्रिणꣳ सिञ्चे अक्षितम्।।

卐 सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक्। धीरा देवेषु सुम्नया।।

卐 युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह।। 22। बीजम्। गिरा च श्रुष्टि स्सभरा असन्नो नेदीय इथ्सृण्या पक्वमाऽयत्।।

卐 लाङ्गलं पवीरवꣳ सुशेवꣳ सुमतिथ्सरु। उदित्कृषति गामविं प्रफर्व्यंञ्च पीवरीम्। प्रस्थाव द्रथवाहनम्।।

卐 शुनन्नः फाला वि तुदन्तु भूमिꣳ शुन ङ्कीनाशा अभि यन्तु वाहान्। शुनं पर्जन्यो मधुना पयोभि श्शुनासीरा शुन मस्मासु धत्तम्।।

卐 काम ङ्कामदुघे धुक्ष्व मित्राय वरुणाय च। इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः।।

卐 घृतेन सीता मधुना समक्ता विश्वै र्देवै रनुमता मरुद्भिः। ऊर्जस्वती पयसा पिन्वमानाऽस्मा न्थ्सीते पयसाऽभ्याववृथ्स्व।। 23।। (समोकसौ विश्वरूपे विदु र्निरृतिः रभि चष्ट इह मित्राय द्वाविꣳशतिश्च। 5।)

卐या जाता ओषधयो देवेभ्य स्त्रियुगं पुरा। मन्दामि बभ्रूणा महꣳ शत न्धामानि सप्त च।।

卐 शतँ वो अम्ब धामानि सहस्र मुत वो रुहः। अथा शतक्रत्वो यूय मिमं मे अगदङ्कृत।।

卐 पुष्पावतीः प्रसूवतीः फलिनी रफला उत। अश्वा इव सजित्वरी र्वीरुधः पारयिष्णवः।।

卐 ओषधीरिति मातर स्तद्वो देवी रुप ब्रुवे। रपाꣳसि विघ्नती रित रपः।। 24।। ❀ चातयमानाः।।

卐 अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता। गोभाज इत्किलासथ यथ्सनवथ पूरुषम्।।

卐 यदहँ वाजयन्निमा ओषधीर् हस्त आदधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा।।

卐 यदोषधय स्सङ्गच्छन्ते राजान स्समिताविव। विप्र स्स उच्यते भिष ग्रक्षोहाऽमीवचातनः।।

卐 निष्कृति र्नाम वो माताऽथा यूयꣴ स्थ सङ्कृतीः। सराः पतत्रिणीः।। 25।। ❀ स्थन यदामयति निष्कृत।।

卐 अन्या वो अन्या मवत्वन्याऽन्यस्या उपावत। ता स्सर्वा ओषधय स्सँविदाना इदं मे प्रावता वचः।।

卐 उच्छुष्मा ओषधीना ङ्गावो गोष्ठा दिवेरते। धनꣳ सनिष्यन्तीना मात्मान न्तव पूरुष।।

卐 अति विश्वाः परिष्ठा स्तेन इव व्रज मक्रमुः। ओषधयः प्राचुच्यवु र्यत्किञ्च तनुवाꣳ रपः।।

卐 याः।। 26।।❀ त आतस्थु रात्मानँ या आविविशुः परुःपरुः। तास्ते यक्ष्मँ वि बाधन्ता मुग्रो मध्यमशीरिव।।
卐 साकँ यक्ष्म प्र पत श्येनेन किकिदीविना। साकँ वातस्य ध्राज्या साक न्नश्य निहाकया।।
卐 अश्वावतीꣳ सोमवती मूर्जयन्ती मुदोजसम्। आ वित्सि सर्वा ओषधी रस्मा अरिष्टतातये।।
卐 याः फलिनी र्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूता स्ता नो मुञ्चन्त्वꣳहसः।।
卐 याः।। 27।।❀ ओषधय स्सोमराज्ञीः प्रविष्टाः पृथिवी मनु। तासा न्त्वमस्युत्तमा प्रणो जीवातवे सुव।।
卐 अवपतन्ती रवद न्दिव ओषधयः परि। यञ्जीव मश्नवामहै न स रिष्याति पूरुषः।।
卐 याश्चेद मुपश्रृण्वन्ति याश्च दूरं परागताः। इह सङ्गत्य ता स्सर्वा अस्मै सन्दत्त भेषजम्।।
卐 मा वो रिषत्खनिता यस्मै चाह ङ्खनामि वः। द्विपच्चतुष्प दस्माकꣳ सर्व मस्त्वनातुरम्।।
卐 ओषधय स्सँ वदन्ते सोमेन सह राज्ञा। यस्मै करोति ब्राह्मण स्तꣳ राज न्पारयामसि।। 28।। (रपः पतत्रिणी र्या अꣳहसो याः खनामिवोऽष्टादश च। 6।)
❀卐मा नो हिꣳसी ज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा जजान। यश्चाप श्चन्द्रा बृहती र्जजान कस्मै देवाय हविषा विधेम।।
卐 अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह। वपान्ते अग्नि रिषितोऽव सर्पतु।।
卐 अग्ने यत्ते शुक्रँ यच्चन्द्रँ यत्पूतँ यद्यज्ञियम्। तद्देवेभ्यो भरामसि।।
卐 इष मूर्ज मह मित आ।। 29।।❀ दद ऋतस्य धाम्नो अमृतस्य योनेः। आ नो गोषु विशत्वौषधीषु जहामि सेदि मनिरा ममीवाम्।।
卐 अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो। बृहद्भानो शवसा वाजमुक्थ्य न्दधासि दाशुषे कवे।।
卐 इरज्यन्नग्ने प्रथयस्व जन्तुभि रस्मे रायो अमर्त्य। स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसिꣳ रयिम्।।
卐 ऊर्जो नपा ज्जातवेद स्सुशस्तिभि र्मन्दस्व।। 30।।❀ धीतिभिर्हितः। त्वे इष स्स न्दधु र्भूरिरेतस श्चित्रोतयो वामजाताः।।

卐 पावकवर्चा श्शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना। पुत्रः पितरा विचर न्नुपाव स्युभे पृणक्षि रोदसी।।

卐 ऋतावानं महिषँ विश्वचर्षणि मग्निꣳ सुम्नाय दधिरे पुरोजनाः। श्रुत्कर्णꣳ सप्रथस्तमन्त्वा गिरा दैव्यं मानुषा युगा।।

卐 निष्कर्तार मध्वरस्य प्रचेतस ङ्क्षयन्तꣳ राधसे महे। रातिं भृगूणा मुशिज ङ्कविक्रतुं पृणक्षि सानसिम्।। 31।। ❀ रयिम्।।

卐 चित स्स्थ परिचित ऊर्ध्वचित श्श्रयध्व न्तया देवतयाऽङ्गिरस्व द्ध्रुवा स्सीदत।।

卐 आ प्यायस्व समेतु ते विश्वत स्सोम वृष्णियम्। भवा वाजस्य सङ्गथे।।

卐 सन्ते पयाꣳसि समु यन्तु वाजा स्सँ वृष्णिया न्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवाꣳ स्युत्तमानि धिष्व।। 32।। (आ मन्दस्व सानसि मेकान्न चत्वारिꣳशच्च। 7।)

❀卐अभ्यस्था द्विश्वाः पृतना अराती स्तदग्नि राह तदु सोम आह। बृहस्पति स्सविता तन्म आह पूषा माऽधा थ्सुकृतस्य लोके।।

卐 यदक्रन्दः प्रथम ञ्जायमान उद्य'2'न्थ्समुद्रा दुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत ञ्जनिम तत्ते अर्वन्न्।।

卐 अपां पृष्ठमसि योनि रग्ने स्समुद्र मभितः पिन्वमानम्। वर्धमानं महः।। 34।। ❀ आ च पुष्कर न्दिवो मात्रया वरिणा प्रथस्व।।

卐 ब्रह्म जज्ञानं प्रथमं पुरस्ता द्विसीमत स्सुरुचो वेन आवः। स बुध्निया उपमा अस्य विष्ठा स्सतश्च योनि मसतश्च विवः।।

卐 हिरण्यगर्भ स्समवर्तताग्रे भूतस्य जातः पति रेक आसीत्। स दाधार पृथिवीन्द्या मुतेमा ङ्कस्मै देवाय हविषा विधेम।।

卐 द्रप्स श्चस्कन्द पृथिवीमनु।। 34।। ❀ द्यामिमञ्च योनि मनु यश्च पूर्वः। तृतीयँ योनि मनु सञ्चरन्त न्द्रप्स ञ्जुहोम्यनु सप्त होत्राः।।

卐 नमो अस्तु सर्पेभ्यो ये के च पृथिवी मनु। ये अन्तरिक्षे ये दिवि तेभ्य स्सर्पेभ्यो नमः।।

卐 येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु। येषा मफ्सु सदः कृत न्तेभ्य स्सर्पेभ्यो नमः।।

卐 या इषवो यातुधानानाँ ये वा वनस्पती९ रनु। ये वाऽवटेषु शेरते तेभ्य स्सर्पेभ्यो नमः।। 35।।
(महोऽनु यातुधानाना मेकादश च। 8।)
卐ध्रुवाऽसि धरुणाऽस्तृता विश्वकर्मणा सुकृता। मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवी न्दृ९ह।।
卐 प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे- व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि भूमि रस्यदिति रसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीँ यच्छ, पृथिवी न्दृ९ह पृथिवीं मा हि९सी र्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै।। 36।। ❀ चरित्रायाग्निस्त्वाऽभि पातु- मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद।।
卐 काण्डात्काण्डा त्प्ररोहन्ती परुषःपरुषः परि। एवा नो दूर्वे प्र तनु सहस्रेण शतेन च।।
卐 या शतेन प्रतनोषि सहस्रेण विरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयम्।।
卐 अषाढाऽसि सहमाना सहस्वाराती स्सहस्वारातीयत 卐 स्सहस्व पृतना स्सहस्व पृतन्यतः। सहस्रवीर्या।। 37।। ❀ असि सा मा जिन्व।।
卐 मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वी र्न स्सन्त्वोषधीः।।
卐 मधु नक्त मुतोषसि मधुम त्पार्थिव९ रजः। मधु द्यौरस्तु नः पिता।।
卐 मधुमान्नो वनस्पति र्मधुमा९ अस्तु सूर्यः। माध्वी र्गावो भवन्तु नः।।
卐 मही द्यौः पृथिवी च न इमँ यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः।।
卐 तद्विष्णोः परमम्।। 38।। ❀ पद९ सदा पश्यन्ति सूरयः। दिवीव चक्षु राततम्।।
卐 ध्रुवाऽसि पृथिवि सहस्व पृतन्यतः। स्यूता देवेभि रमृतेनाऽऽगाः।।
卐 यास्ते अग्ने सूर्ये रुच उद्यतो दिव मातन्वन्ति रश्मिभिः। ताभि स्सर्वाभी रुचे जनाय नस्कृधि।।
卐 या वो देवा स्सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभि स्सर्वाभी रुचन्नो धत्त बृहस्पते।।
卐 विराट्।। 39।। ❀ ज्योति रधारय 卐 थ्सम्राड्ज्योति रधारय 卐 थ्स्वराड्ज्योति रधारयत्।।
卐 अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः। अरँ वहन्त्याशवः।।
卐 युक्ष्वा हि देवहूतमा९ अश्वा९ अग्ने रथीरिव। नि होता पूर्व्य स्सदः।।
卐 द्रप्स श्चस्कन्द पृथिवी मनु द्यामिमञ्च योनि मनु यश्च पूर्वः। तृतीयँ योनि मनु सञ्चरन्त न्द्रप्स ञ्जुहोम्यनु सप्त।। 40।। ❀ होत्राः।।

卐 अभूदिदं विश्वस्य भुवनस्य वाजिन 卐 मग्ने वैँश्वानरस्य च।।

卐 अग्नि ज्योतिषा ज्योतिष्मा 卐 न्रुक्मो वर्चसा वर्चस्वान्।।

卐 ऋचे त्वा 卐 रुचे त्वा 卐 समिथ्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभि चाकशीमि। हिरण्ययो वेतसो मध्य आसाम्।।

卐 तस्मि न्थ्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः। तस्याऽऽसते हरय स्सप्त तीरे स्वधा न्दुहाना अमृतस्य धाराम्।। 41।। (प्रतिष्ठायै सहस्रवीर्या परमँ विराट्थ्सप्त तीरे चत्वारि च। 9।)

❀卐आदित्यङ्गर्भं पयसा समञ्ज'2'न्थ्सहस्रस्य प्रतिमाँ विश्वरूपम्। परि वृङ्धि हरसा माऽभि मृक्ष श्शताऽऽयुष ङ्कृणुहि चीयमानः।।

卐 इमं मा हिꣳसी र्द्विपादं पशूनाꣳ सहस्राक्ष मेध आ चीयमानः। मयु मारण्य मनु ते दिशामि तेन चिन्वान स्तनुवो निषीद।।

卐 वातस्य ध्राजिँ वरुणस्य नाभि मश्व ञ्जज्ञानꣳ सरिरस्य मध्ये। शिशु न्नदीनाꣳ हरि मद्रिबुद्ध मग्ने मा हिꣳसीः।। 42।। ❀ परमे व्योमन्न्।।

卐 इमं मा हिꣳसी रेकशफं पशूना ङ्कनिक्रदं वाजिनँ वाजिनेषु। गौर मारण्य मनु ते दिशामि तेन चिन्वान स्तनुवो निषीद।।

卐 अजस्र मिन्दु मरुषं भुरण्यु मग्नि मीडे पूर्वचित्तौ नमोभिः। स पर्वभिर्ऋतुशः कल्पमानो गां मा हिꣳसी रदितिँ विराजम्।।

卐 इमꣳ समुद्रꣳ शतधार मुथ्सँ व्यच्यमानं भुवनस्य मध्ये। घृत न्दुहाना मदिति ञ्जनायाग्ने मा।। 43।। ❀ हिꣳसीः परमे व्योमन्न्। गवय मारण्य मनु ते दिशामि तेन चिन्वान स्तनुवो निषीद।।

卐 वरूत्रि न्त्वष्टु र्वरुणस्य नाभि मवि ञ्जज्ञानाꣳ रजसः परस्मात्। महीꣳ साहस्री मसुरस्य माया मग्ने मा हिꣳसीः परमे व्योमन्न्।।

卐 इमा मूर्णायुँ वरुणस्य माया न्त्वचं पशूना न्द्विपदा श्चतुष्पदाम्। त्वष्टुः प्रजानां प्रथम ञ्जनित्र मग्ने मा हिꣳसीः परमे व्योमन्न्। उष्ट्र मारण्य मनु।। 44।। ❀ ते दिशामि तेन चिन्वान स्तनुवो निषीद।।

卐 यो अग्नि रग्ने स्तपसोऽधि जात श्शोचा त्पृथिव्या उत वा दिव स्परि। येन प्रजा विश्वकर्मा व्यानट्तमग्ने हेडः परि ते वृणक्तु।।

卐 अजा ह्यग्ने रजनिष्ट गर्भाथ्सा वा अपश्य ज्जनितार मग्रे। तया रोह माय न्नुप मेध्यास स्तया देवा देवता मग्र आयन्न्। शरभ मारण्य मनु ते दिशामि तेन चिन्वान स्तनुवो निषीद।। 45।। (अग्ने मा हिꣳसी रग्ने मोष्ट्र मारण्य मनु शरभ न्नव च। 10। आदित्य मिम न्द्विपाद मयुँ वातस्याश्व मिम मेकशफ ङ्गौर मजस्र ङ्गवयँ वरूत्रि मवि मिमा मूर्णायु मुष्ट्रँ यो अग्नि रग्ने श्शरभम्।)

**वै।का।12 याज्या: 22 (एकोऽनुवाकः 1)**

卐इन्द्राग्नी रोचना दिवꣳ परि वाजेषु भूषथः। तद्वाञ्चेति प्र वीर्यम्।।

卐 श्ञथद्वृत्र मुत सनोति वाज मिन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्ता वसव्यस्य भूरे स्सहस्तमा सहसा वाजयन्ता।।

卐 प्र चर्षणिभ्यꣳ पृतना हवेषु प्र पृथिव्या रिरिचाथे दिवश्च। प्र सिन्धुभ्यꣳ प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनाऽत्यन्या।।

卐 मरुतो यस्य हि।। 46।। क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः।।

卐 यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम्। मरुत श्शृणुता हवम्।।

卐 श्रियसे कं भानुभि स्सं मिमिक्षिरे ते रश्मिभि स्त ऋक्वभि स्सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः।।

卐 अव ते हेड[85] 卐 उदुत्तमम्[86]।

卐 कया नश्चित्र आ भुवदूती सदावृध स्सखा। कया शचिष्ठया वृता।। 47।।

卐को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्निषू न्हृथ्स्वसो मयोभून् य एषां भृत्या मृणध थ्स जीवात्।।

卐 अग्ने नया[87] 卐 ऽदेवानाꣳ[88] 卐 श न्नो भवन्तु[89] 卐वाजेवाजे[90]।

卐 अफ्स्वग्ने सधिष्टव सौषधी रनु रुध्यसे। गर्भे सन्जायसे पुनः।।

卐 वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे।।

85

86

87

88

89

90

卐 इमं मे वरुण[91]❃ 卐 तत्त्वा यामि[92]❃ 卐 त्वन्नो अग्ने[93]❃ 卐 स त्वन्नो अग्ने[94]❃।। 48।। (हि वृता म एकादश च।। 11।)

(विष्णोः क्रमोऽसि दिवस्पर्यन्नपतेऽपेत समितँ या जाता मा नो हिꣳसी दभ्यस्था ध्रुवाऽस्यादित्य ङ्गर्भ मिन्द्राग्नी रोचनैकादश। 11। विष्णोरस्मिन् हव्येति त्वाऽह न्धीतिभिर् होत्रा अष्टाचत्वारिꣳशत्। 48। विष्णोः क्रमोऽसि स त्वन्नो अग्ने।)

## चतुर्थ काण्डे तृतीयः प्रपाठकः

### आ।का।5 अग्निचयनमन्त्राः 3 (त्रयोदशानुवाकाः 13)

卐अपा न्त्वेम न्थ्सादया-卐म्यपा न्त्वोद्म न्थ्सादया-卐म्यपान्त्वा भस्म न्थ्सादया-卐म्यपान्त्वा ज्योतिषि सादया-卐म्यपान्त्वाऽयने सादया, 卐म्यर्णवे सदने सीद - 卐समुद्रे सदने सीद - 卐सलिले सदने सी卐दा-卐ऽपाङ्क्षये सी-卐दापाꣳ सधिषि सी, 卐दापान्त्वा सदने सादया-卐म्यपान्त्वा सधस्थे सादया-卐म्यपान्त्वा पुरीषे सादया-卐म्यपान्त्वा योनौ सादया-卐म्यपान्त्वा पाथसि सादयामि, 卐 गायत्री छन्द卐स्त्रिष्टु प्छन्दो 卐 जगती छन्दो 卐ऽनुष्टुप्छन्दः 卐 पङ्क्ति श्छन्दः।। 1।। (योनौ पञ्चदश च। 1।)

卐अयं पुरो भुव 卐 स्तस्य प्राणो भौवायनो 卐 वसन्तः प्राणायनो 卐 गायत्री वासन्ती 卐 गायत्रियै गायत्र 卐 ङ्गायत्रा दुपाꣳशु 卐 रुपाꣳशो स्त्रिवृ 卐 त्त्रिवृतो रथन्तरꣳ 卐 रथन्तरा द्वसिष्ठ ऋषिः 卐 प्रजापतिगृहीतया त्वया प्राण ङ्गृह्णामि प्रजाभ्यो 卐ऽय न्दक्षिणा विश्वकर्मा 卐 तस्य मनो वैश्वकर्मण 卐 ङ्ग्रीष्मो मानस 卐 स्त्रिष्टु ग्ग्रैष्मी 卐 त्रिष्टुभ ऐड 卐 मैडा दन्तर्यामो 卐ऽन्तर्यामा त्पञ्चदशः 卐 पञ्चदशा द्बृह 卐 द्बृहतो भरद्वाज ऋषिः 卐 प्रजापतिगृहीतया त्वया मनः।। 2।।❀ गृह्णामि प्रजाभ्यो 卐ऽयं पश्चा द्विश्वव्यचा 卐 स्तस्य चक्षु र्वैश्वव्यचसँ 卐 वर्षाणि चाक्षुषाणि 卐 जगती वार्षी 卐 जगत्या ऋक्षम 卐 मृक्षमा च्छुक्र 卐 श्शुक्रा थ्सप्तदश 卐 स्सप्तदशा द्वैरूपँ 卐 वैरूपा द्विश्वामित्र ऋषिः 卐 प्रजापतिगृहीतया त्वया चक्षु र्गृह्णामि प्रजाभ्य 卐 इद मुत्तरा थ्सुव 卐 स्तस्य श्रोत्रꣳ सौवꣳ 卐 शरच्छ्रौ卐त्र्यनुष्टु प्छार 卐द्यनुष्टुभ स्स्वारꣳ 卐 स्वारा न्मन्थी 卐 मन्थिन एकविꣳश 卐 एकविꣳशा द्वैराजँ 卐 वैराजा ज्जमदग्निर् ऋषिः 卐 प्रजापतिगृहीतया।। 3।।❀ त्वया श्रोत्र ङ्गृह्णामि प्रजाभ्य 卐 इय मुपरि मति 卐 स्तस्यै

91

92

93

94

वाङ्मती 卐 हेमन्तो वाच्यायनः 卐 पङ्क्तिर्हैमन्ती 卐 पङ्क्तै निधनव 卐न्निधनवत आग्रयण 卐 आग्रयणा त्त्रिणवत्रयस्त्रिꣳशौ 卐 त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते 卐 शाक्वर रैवताभ्याँ विश्वकर्मर्षिः 卐 प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः।। 4।। (त्वया मनो जमदग्निर् ऋषिः प्रजापतिगृहीतया त्रिꣳशच्च। 2।)

☸❀卐प्राची दिशाँ 卐 वसन्त ऋतूना 卐 मग्नि र्देवता 卐 ब्रह्म द्रविण 卐 न्त्रिवृ थ्स्तोम 卐 स्स उ पञ्चदशवर्तनि 卐 स्त्र्यवि र्वयः 卐 कृतमयानां 卐 पुरोवातो वात 卐 स्सानग ऋषि 卐र्दक्षिणा दिशा 卐 ङ्ग्रीष्म ऋतूना 卐 मिन्द्रो देवता 卐 क्षत्र न्द्रविणं 卐 पञ्चदश स्स्तोम 卐 स्स उ सप्तदशवर्तनि 卐 र्दित्यवाड्वय 卐 स्त्रेताऽयाना 卐 न्दक्षिणाद्वातो वात 卐 स्सनातन ऋषिः 卐 प्रतीची दिशाँ 卐 वर्षा ऋतूनाँ 卐 विश्वे देवा देवता 卐 विट्।। 5।। ❀ द्रविणꣳ 卐 सप्तदश स्स्तोम 卐 स्स उवेकविꣳशवर्तनि 卐 स्त्रिवथ्सो वयो 卐 द्वापरोऽयानां 卐 पश्चाद्वातो वातो 卐ऽहभून ऋषि 卐 रुदीची दिशाꣳ 卐 शरदृतूनाँ 卐 मित्रावरुणौ देवता 卐 पुष्ट न्द्रविण 卐 मेकविꣳश स्स्तोम 卐 स्स उ त्रिणववर्तनि 卐 स्तुर्यवाड्वय 卐 आस्कन्दोऽयाना 卐 मुत्तराद्वातो वातः 卐 प्रत्न ऋषि 卐 रूर्ध्वा दिशाꣳ 卐 हेमन्तशिशिरावृतूनां 卐 बृहस्पति र्देवता 卐 वर्चो द्रविण 卐 न्त्रिणव स्स्तोम 卐 स्स उ त्रयस्त्रिꣳशवर्तनिः 卐 पष्ठद्वयो 卐ऽभिभू रयानाँ 卐 विष्वग्वातो वात 卐 स्सुपर्ण ऋषिः 卐 पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मि न्ब्रह्मन्नस्मि न्क्षत्रेऽस्या माशिष्यस्यां पुरोधाया मस्मि न्कर्म न्नस्या न्देवहूत्याम्।। 6।। (विद्वष्ठवा द्वयोऽष्टाविꣳशतिश्च। 3।)

☸❀卐ध्रुवक्षिति र्ध्रुवयोनि र्ध्रुवाऽसि ध्रुवाँ योनि मा सीद साध्या। उख्यस्य केतुं प्रथमं पुरस्ता दश्विनाऽध्वर्यू सादयता मिह त्वा।।

卐 स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा। स्वासस्था तनुवा सँ विशस्व पितेवैधि सूनव आ सुशेवाऽश्विनाऽध्वर्यू सादयता मिह त्वा।।

卐 कुलायिनी वसुमती वयोधा रयिन्नो वर्ध बहुलꣳ सुवीरम्।। 7।। ❀ अपामति न्दुर्मतिं बाधमाना राय स्पोषे यज्ञपति माभजन्ती सुव र्धेहि यजमानाय पोष मश्विनाऽध्वर्यू सादयता मिह त्वा।।

卐 अग्नेः पुरीषमसि देवयानी तान्त्वा विश्वे अभि गृणन्तु देवाः। स्तोमपृष्ठा घृतवतीह सीद प्रजाव दस्मे द्रविणाऽऽयजस्वाश्विनाऽध्वर्यू सादयता मिह त्वा।।

卐 दिवो मूर्धाऽसि पृथिव्या नाभि र्विष्टम्भनी दिशा मधिपत्नी भुवनानाम्।। 8।।❀ ऊर्मि र्द्रप्सो अपामसि विश्वकर्मा त ऋषि रश्विनाऽध्वर्यू सादयता मिह त्वा।।

卐 सजूरृतुभि स्सजू र्विधाभि - स्सजू र्वसुभि- 卐-- स्सजू रुद्रै- 卐स्सजू रादित्यै - 卐 -- स्सजू र्विश्वै र्देवै- 卐 -- स्सजू र्देवै- स्सजू र्देवै र्वयोनाधै रग्नये त्वा वैश्वानरा याश्विनाऽध्वर्यू सादयता मिह त्वा।।

卐 प्राणं मे पा 卐ह्यपानं मे पाहि 卐 व्यानं मे पाहि 卐 चक्षुर्म उर्व्या वि भाहि 卐 श्रोत्रं मे श्लोक 卐याप स्पि 卐न्वौषधी र्जिन्व 卐 द्विपात्पाहि 卐 चतुष्पादव 卐 दिवो वृष्टि मैरय।। 9।। (सुवीरं भुवनाना मुर्व्या सप्तदश च। 4।)

❀卐त्र्यवि र्वय स्त्रिष्टुप्छन्दो 卐 दित्यवाड्वयो विराड्छन्दः 卐 पञ्चावि र्वयो गायत्री छन्द 卐 स्त्रिवथ्सो वय उष्णिहा छन्द 卐 स्तुर्यवाड्वयोऽनुष्टु प्छन्दः 卐 पष्ठवाद्वयो बृहती छन्द 卐 उक्षा वय स्सतोबृहती छन्द 卐 ऋषभो वयः ककुच्छन्दो 卐 धेनु र्वयो जगती छन्दो 卐ऽनड्वान् वयः पङ्क्ति श्छन्दो 卐 बस्तो वयो विवल ञ्छन्दो 卐 वृष्णि र्वयो विशाल ञ्छन्दः 卐 पुरुषो वय स्तन्द्र ञ्छन्दो 卐 व्याघ्रो वयोऽनाधृष्ट ञ्छन्द 卐 स्सिꣳहो वय श्छदि श्छन्दो 卐 विष्टम्भो वयोऽधिपति श्छन्दः 卐 क्षत्रँ वयो मयन्द ञ्छन्दो 卐 विश्वकर्मा वयः परमेष्ठी छन्दो 卐 मूर्धा वयः प्रजापति श्छन्दः।। 10।। (पुरुषो वय ष्षड्विꣳशतिश्च। 5।)

❀卐इन्द्राग्नी अव्यथमाना मिष्टका न्दृꣳहतँ युवम्। पृष्ठेन द्यावापृथिवी अन्तरिक्षञ्च वि बाधताम्।

卐 विश्वकर्मा त्वा सादय.त्वन्तरिक्षस्य पृष्ठे - व्यचस्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमती,मा या द्यां भा.स्या पृथिवी.मोर्वन्तरिक्ष,मन्तरिक्षँ यच्छान्तरिक्ष न्दृꣳहान्तरिक्षं मा हिꣳसी- र्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय, वायुस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा।। 11।।❀ शन्तमेन तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद।।

卐 राज्ञ्यसि प्राची दि 卐 ग्विराडसि दक्षिणा दि 卐ख्सम्राडसि प्रतीची दि 卐ख्स्वराड स्युदीची दि 卐गधिपत्न्यसि बृहती दि 卐गायु र्मे पाहि 卐 प्राणं मे पा 卐ह्यपानं मे पाहि 卐 व्यानं मे पाहि 卐 चक्षुर्मे पाहि 卐 श्रोत्रं मे पाहि 卐 मनो मे जिन्व 卐 वाचं मे पि 卐 न्वाऽऽत्मानं मे पाहि 卐 ज्योतिर्मे यच्छ।। 12।। (छर्दिषा पिन्व षड्च। 6।)

❀卐मा छन्दः 卐 प्रमा छन्दः 卐 प्रतिमा छन्दो 卐ऽस्त्रीवि 卐 श्छन्दः पङ्क्ति 卐 श्छन्द उष्णिहा छन्दो 卐 बृहती छन्दो 卐ऽनुष्टुप्छन्दो 卐 विराड्छन्दो 卐 गायत्री छन्द 卐 स्त्रिष्टु प्छन्दो 卐 जगती छन्दः 卐 पृथिवी छन्दो 卐ऽन्तरिक्षं छन्दो 卐 द्यौश्छन्द 卐 स्समा श्छन्दो 卐 नक्षत्राणि छन्दो 卐 मन श्छन्दो 卐

वाक्छन्दः॰ ॐ कृषि श्छन्दो ॐ हिरण्य ञ्छन्दो ॐ गौश्छन्दो ॐऽजा छन्दो ॐऽश्व श्चन्दः। ॐ अग्नि र्देवता।। 13।।❀ॐ वातो देवता ॐ सूर्यो देवता ॐ चन्द्रमा देवता ॐ वसवो देवता ॐ रुद्रा देवता ॐऽऽदित्या देवता ॐ विश्वे देवा देवता ॐ मरुतो देवता ॐ बृहस्पति र्देव ॐतेन्द्रो देवता ॐ वरुणो देवता ॐ मूर्धाऽसि रा ॐड्ध्रुवाऽसि धरुणा ॐ यन्त्र्यसि यमि ॐत्रीषे ॐत्वोर्जे त्वा ॐ कृष्यै त्वा ॐ क्षेमाय त्वा ॐ यन्त्री रा ॐड्ध्रुवाऽसि धरणी ॐ धर्त्र्यसि धरि ॐत्र्यायुषे त्वा ॐ वर्चसे ॐत्वौजसे त्वा ॐ बलाय त्वा।। 14।। (देवताऽऽयुषे त्वा षड्व। 7।)

❀ॐआशु स्त्रिवृ ॐ द्भान्तः॰ पञ्चदशो ॐ व्योम सप्तदशः॰ ॐ प्रतूर्ति रष्टादश ॐ स्तपो नवदशो ॐऽभिवर्त स्सविꣳशो ॐ धरुण एकविꣳशो ॐ वर्चो द्वाविꣳश ॐ स्सम्भरण स्त्रयोविꣳशो ॐ योनि श्चतुर्विꣳशो ॐ गर्भाः॰ पञ्चविꣳश ॐ ओज स्त्रिणवः॰ ॐ क्रतु रेकत्रिꣳशः॰ ॐ प्रतिष्ठा त्रयस्त्रिꣳशो ॐ ब्रध्नस्य विष्टप श्चतुस्त्रिꣳशो ॐ नाक ष्षट्त्रिꣳशो ॐ विवर्तोऽष्टाचत्वारिꣳशो ॐ धर्त्र श्चतुष्टोमः।। 15।। (आशु स्सप्तत्रिꣳशत्। 8।)

❀ॐअग्ने र्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृत न्त्रिवृ थ्स्तोम ॐ इन्द्रस्य भागोऽसि विष्णो राधिपत्य ङ्क्षत्रꣳ स्पृतं पञ्चदश स्स्तोमो ॐ नृचक्षसां भागोऽसि धातु राधिपत्य ञ्जनित्रꣳ स्पृतꣳ सप्तदश स्स्तोमो ॐ मित्रस्य भागोऽसि वरुणस्याऽऽधिपत्य न्दिवो वृष्टि र्वाता स्स्पृता एकविꣳश स्स्तोमो ॐऽदित्यै भागोऽसि पूष्ण आधिपत्य मोज स्स्पृत न्त्रिणव स्स्तोमो ॐ वसूनां भागोऽसि।। 16।।❀ रुद्राणा माधिपत्य ञ्चतुष्पा थ्स्पृत ञ्चतुर्विꣳश स्स्तोम ॐ आदित्यानां भागोऽसि मरुता माधिपत्य ङ्गर्भा स्स्पृताः॰ पञ्चविꣳश स्स्तोमो ॐ देवस्य सवितु र्भागोऽसि बृहस्पते राधिपत्यꣳ समीची र्दिश स्स्पृता श्चतुष्टोम स्तोमो ॐ यावानां भागोऽस्ययावाना माधिपत्यं प्रजा स्स्पृता श्चतुश्चत्वारिꣳश स्स्तोम ॐ ऋभूणां भागोऽसि विश्वेषा न्देवाना माधिपत्यं भूत न्निशान्तꣳ स्पृत न्त्रयस्त्रिꣳश स्तोमः।। 17।। (वसूनां भागोऽसि षड्चत्वारिꣳशच्च। 9।)

❀ॐएकयाऽस्तुवत प्रजा अधीयन्त प्रजापति रधिपति रासी ॐ त्तिसृभि रस्तुवत ब्रह्मासृज्यत ब्रह्मण स्पति रधिपति रासी ॐ त्पञ्चभि रस्तुवत भूतान्यसृज्यन्त भूतानां पति रधिपति रासी ॐ थ्सप्तभि रस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपति रासी ॐ न्नवभि रस्तुवत पितरोऽसृज्य.न्तादिति रधिपत्न्यासी ॐ देकादशभि रस्तुवतर्तवो ऽसृज्यन्ताऽऽर्तवोऽधिपति रासी ॐ त्त्रयोदशभि रस्तुवत मासा असृज्यन्त सँवथ्सरोऽधिपतिः।। 18।।❀ आसी ॐ त्पञ्चदशभि रस्तुवत क्षत्र मसृज्यतेन्द्रो ऽधिपति रासी ॐ

थ्सप्तदशभि रस्तुवत पशवोऽसृज्यन्त बृहस्पति रधिपति रासी ड्ड न्नवदशभि रस्तुवत शूद्रार्यो वसृज्येता महोरात्रे अधिपत्नी आस्ता ड्ड मेकविꣳशत्याऽस्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपति रासी ड्ड त्त्रयोविꣳशत्याऽस्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपति रासी ड्ड त्पञ्चविꣳशत्याऽस्तुवताऽऽरण्याः पशवोऽसृज्यन्त वायु रधिपति रासी ड्ड थ्सप्तविꣳशत्याऽस्तुवत द्यावापृथिवी वि।। 19।। ❀ ऐताँ वसवो रुद्रा आदित्या अनु व्याय न्तेषा माधिपत्य मासी ड्ड न्नवविꣳशत्याऽस्तुवत वनस्पतयो ऽसृज्यन्त सोमोऽधिपति रासी ड्ड देकत्रिꣳशताऽस्तुवत प्रजा असृज्यन्त यावाना ञ्चायावाना ञ्चाऽऽधिपत्य मासी ड्ड त्त्रयस्त्रिꣳशताऽस्तुवत भूतान्यशाम्य न्प्रजापतिः परमेष्ठ्यधिपति रासीत्।। 20।। (सँवथ्सरोऽधिपति र्वि पञ्च त्रिꣳशच्च। 10।)

❀ड्डइय मेव सा या प्रथमा व्यौच्छ- दन्तरस्या ञ्चरति प्रविष्टा। वधू र्जजान नवग ज्जनित्री - त्रय एनां महिमान स्सचन्ते।।

ड्ड छन्दस्वती उषसा पेपिशाने - समानँ योनि मनु सञ्चरन्ती। सूर्यपत्नी वि चरतः प्रजानती - केतु.ङ्कृण्वाने अजरे भूरिरेतसा।।

ड्ड ऋतस्य पन्था मनु तिस्र आऽगु- स्त्रयो घर्मासो अनु ज्योतिषाऽऽगुः। प्रजा मेका रक्षत्यूर्जमेका।। 21।। ❀ व्रत मेका रक्षति देवयूनाम्।।

ड्ड चतुष्टोमो अभवद्या तुरीया - यज्ञस्य पक्षावृषयो भवन्ती। गायत्री न्त्रिष्टुभ ञ्जगती मनुष्टुभं - बृहदर्कँ युञ्जाना स्सुव राऽभरन्निदम्।।

ड्ड पञ्चभि र्धाता वि दधा.विदँ - यत्तासाꣳ स्वसॄ रजनय त्पञ्चपञ्च। तासामु यन्ति प्रयवेण पञ्च - नाना रूपाणि क्रतवो वसानाः।।

ड्ड त्रिꣳश थ्स्वसार उप यन्ति निष्कृतꣳ - समान ङ्केतुं प्रतिमुञ्चमानाः।। 22।। ❀ ऋतूꣳ स्तन्वते कवयः प्रजानती- र्मध्येछन्दसः परि यन्ति भास्वतीः।।

ड्ड ज्योतिष्मती प्रति मुञ्चते नभो - रात्री देवी सूर्यस्य व्रतानि। वि पश्यन्ति पशवो जायमाना - नानारूपा मातु रस्या उपस्थे।।

ड्ड एकाष्टका तपसा तप्यमाना - जजान गर्भं महिमान मिन्द्रम्। तेन दस्यू न्व्यसहन्त देवा - हन्ताऽसुराणा मभव च्छचीभिः।।

卐 अनानुजा मनुजां मामकर्त - सत्यँ वद न्त्यन्विच्छ एतत्। भूयासम्।। 23।। ❀ अस्य सुमतौ यथा - यूय मन्या वो अन्या मति मा प्र युक्त।।

卐 अभून्मम सुमतौ विश्ववेदा - आष्ट प्रतिष्ठा मविदद्धि गाधम्। भूयासमस्य सुमतौ यथा - यूय मन्या वो अन्या मति मा प्र युक्त।।

卐 पञ्च व्युष्टी रनु पञ्च दोहा - गां पञ्चनाम्नी मृतवोऽनु पञ्च। पञ्च दिशः पञ्चदशेन क्लृप्ता - स्समानमूर्ध्नी रभि लोक मेकम्।। 24।।

❀卐 ऋतस्य गर्भः प्रथमा व्यूषु-ष्यपा मेका महिमानं बिभर्ति। सूर्यस्यैका चरति निष्कृतेषु - घर्मस्यैका सवितैका न्नि यच्छति।।

卐 या प्रथमा व्यौच्छ-थ्सा धेनु रभव द्यमे। सा नः पयस्वती धु.क्ष्वोत्तरामुत्तराꣳ समाम्।।

卐 शुक्रर्षभा नभसा ज्योतिषाऽऽगा-द्विश्वरूपा शबली रग्निकेतुः। समान मर्थꣳ स्वपस्यमाना बिभ्रती - जरा मजर उष आऽगाः।।

卐 ऋतूनां पत्नी प्रथमेय माऽगा- दह्ना न्नेत्री जनित्री प्रजानाम्। एका सती बहुधोषो व्युच्छ-स्यजीर्णा त्वञ्जरयसि सर्व मन्यत्।। 25।। (ऊर्जं मेका प्रतिमुञ्चमाना भूयास मेकं पत्न्येकान्नविꣳशतिश्च। 11।)

❀卐अग्ने जाता न्प्रणुदा न.स्सपत्ना- न्प्रत्यजाता न्जातवेदो नुदस्व। अस्मे दीदिहि सुमना अहेड-न्तव स्याꣳ शर्म न्त्रिवरूथ उद्भित्।।

卐 सहसा जाता न्प्रणुदा न.स्सपत्ना - न्प्रत्यजाता न्जातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो - वयꣳ स्याम प्रणुदा न स्सपत्नान्।।

卐 चतुश्चत्वारिꣳश.स्स्तोमो वर्चो द्रविणꣳ 卐 षोडश स्स्तोम ओजो द्रविणं 卐 पृथिव्याः पुरीषमसि।। 26।। ❀ अप्सो नाम।।

卐 एव श्छन्दो 卐 वरिव श्छन्द 卐 श्शम्भू श्छन्दः 卐 परिभू श्छन्द 卐 आच्छ च्छन्दो 卐 मन श्छन्दो 卐 व्यच श्छन्द 卐 स्सिन्धु श्छन्द 卐 स्समुद्र ञ्छन्द 卐 स्सलिल ञ्छन्द 卐 स्सँय च्छन्दो 卐 विय च्छन्दो 卐 बृह च्छन्दो 卐 रथन्तर ञ्छन्दो 卐 निकाय श्छन्दो 卐 विवध श्छन्दो 卐 गिर श्छन्दो 卐 भ्रज श्छन्द 卐 स्सष्टुप्छन्दो 卐ऽनुष्टु प्छन्दः 卐 ककु च्छन्द 卐 स्त्रिककु च्छन्दः 卐 काव्य ञ्छन्दो 卐ऽङ्कुप ञ्छन्दः।। 27।। ❀卐 पदपङ्क्ति श्छन्दो 卐ऽक्षरपङ्क्ति श्छन्दो 卐 विष्टारपङ्क्ति श्छन्दः- 卐 क्षुरो भृज्वा न्छन्दः 卐 प्रच्छ च्छन्दः 卐 पक्ष श्छन्द 卐 एव श्छन्दो 卐 वरिव श्छन्दो 卐 वय श्छन्दो 卐 वयस्कृ

च्छन्दो ॥ विशाल ञ्छन्दो ॥ विष्पर्धा श्छन्द ॥ श्छदि श्छन्दो ॥ दूरोहण ञ्छन्द ॥ स्तन्द्र ञ्छन्दो ॥ऽङ्काङ्क ञ्छन्दः।। 28।। (अस्यङ्कुप ञ्छन्द स्त्रयस्त्रि॰शच्च। 12।)

**वै।का।12 याज्याः 23 (एकोऽनुवाकः 1)**

॥ अग्नि वृत्राणि जङ्घन-द्रविणस्यु र्विपन्यया। समिद्ध श्शुक्र आहुतः।।

॥ त्व॰ सोमासि सत्पति- स्त्व॰ राजोत वृत्रहा। त्वं भद्रो असि क्रतुः।।

॥ भद्रा ते अग्ने स्वनीक सन्द-ग्घोरस्य सतो विषुणस्य चारुः। न यत्ते शोचि स्तमसा वरन्त न ध्वस्मान स्तनुवि रेप आ धुः।।

॥ भद्रन्ते अग्ने सहसि न्ननीक मुपाक आ रोचते सूर्यस्य।। 29।। ❀ रुशद्दृशे ददृशे नक्तया चिदरूक्षित न्दृश आ रूपे अन्नम्।।

॥ सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवा॰ आयजिष्ठ स्स्वस्ति। अदब्धो गोपा उत नः परस्पा अग्ने द्युम दुत रेव द्दिदीहि।।

॥ स्वस्ति नो दिवो अग्ने पृथिव्या विश्वाऽऽयु र्धेहि यजथाय देव। यथ्सीमहि दिविजात प्रशस्त न्तदस्मासु द्रविण न्धेहि चित्रम्।।

॥ यथा होत र्मनुषः।। 30।। ❀ देवताता यज्ञेभि स्सूनो सहसो यजासि। एवा नो अद्य समना समाना नुश न्नग्न उशतो यक्षि देवान्।।

॥ अग्नि मीडे पुरोहितँ यज्ञस्य देव मृत्विजम्। होतार॰ रत्नधातमम्।।

॥ वृषा सोम द्युमा॰ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे।।

॥ सान्तपना इद॰ हवि र्मरुत स्तज्जुजुष्टन। युष्माकोती रिशादसः।।

॥ यो नो मर्तो वसवो दुर्हृणायु स्तिर स्सत्यानि मरुतः।। 31।। ❀ जिघा॰सात्। द्रुहः पाशं प्रति स मुचीष्ट तपिष्ठेन तपसा हन्तना तम्।।

॥ सँवथ्सरीणा मरुत स्स्वर्का उरुक्षया स्सगणा मानुषेषु। तेऽस्मत्पाशा न्प्र मुञ्चन्त्व॰हस स्सान्तपना मदिरा मादयिष्णवः।।

॥ पिप्रीहि देवा॰ उशतो यविष्ठ विद्वा॰ ऋतू॰रृतुपते यजेह। ये दैव्या ऋत्विज स्तेभि रग्ने त्व॰ होतृणा मस्यायजिष्ठः।।

卐 अग्ने यद्द्य विशो अध्वरस्य होतः पावक।। 32।। ❀ शोचे वेष्ट्वँ हि यज्वा। ऋता यजासि महिना वि यद्भूर्हव्यावह यविष्ठ या ते अद्य।।

卐 अग्निना रयि मश्ञव त्पोष मेव दिवेदिवे। यशसँ वीरवत्तमम्।।

卐 गयस्फानो अमीवहा वसुवि त्पुष्टिवर्धनः। सुमित्र स्सोम नो भव।।

卐 गृहमेधास आ गत मरुतो माऽप भूतन। प्रमुञ्चन्तो नो अँहसः।।

卐 पूर्वीभिर् हि ददाशिम शरद्भि र्मरुतो वयम्। महोभिः।। 33। चर्षणीनाम्।।

卐 प्रबुध्निया~ ईरते वो महाँसि प्रणामानि प्रयज्यव स्तिरध्वम्। सहस्त्रिय न्दम्यं भागमेत ङ्गृहमेधीयं मरुतो जुषध्वम्।।

卐 उप यमेति युवति स्सुदक्ष न्दोषा वस्तोर् हविष्मती घृताची। उपस्वैन मरमति र्वसूयुः।।

卐 इमो अग्ने वीततमानि हव्याऽजस्त्रो वक्षि देवताति मच्छ। प्रति न ईँ सुरभीणि वियन्तु।।

卐 क्रीडँ व श्शर्धो मारुत मनर्वाणँ रथेशुभम्।। 34।। ❀ कण्वा अभि प्र गायत।।

卐 अत्यासो न ये मरुत स्स्वञ्चो यक्षदृशो न शुभयन्त मर्याः। ते हर्म्येष्ठा श्शिशवो न शुभ्रा वथ्सासो न प्रक्रीडिनः पयोधाः।।

卐 प्रैषा मज्मेषु विथुरेव रेजते भूमि र्यामेषु यद्ध युञ्जते शुभे। ते क्रीडयो धुनयो भ्राजदृष्टय स्स्वयं महित्वं पनयन्त धूतयः।।

卐 उपह्वरेषु यदचिध्वँ ययिँ वय इव मरुतः केन।। 35।। ❀ चित्पथा। श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्ण मर्चते।।

卐 अग्निमग्निँ हवीमभि स्सदा हवन्त विश्पतिम्। हव्यवाहं पुरुप्रियम्।।

卐 तँ हि शश्वन्त ईडते स्रुचा देव घृतश्चुता। अग्निँ हव्याय वोढवे।।

卐 इन्द्राग्नी रोचना दिव[95]❀ 卐श्श्ञथ द्वृत्र[96]❀ 卐मिन्द्रँ वो विश्वत स्परी[97]❀ 卐न्द्र न्नरो[98]❀ 卐विश्वकर्मन् हविषा वावृधानो[99]❀ 卐विश्वकर्मन् हविषा वर्धनेन[100]❀।। 36।। (सूर्यस्य मनुषो मरुतः पावक महोभी रथेशुभ ङ्केन षट्चत्वारिँशच्च। 13।)

95

96

97

98

99

(अपान्त्वेम न्नयं पुरः प्राची ध्रुवक्षिति स्त्र्यवि रिन्द्राग्नी मा छन्द आशु स्त्रिवृदग्ने र्भागोऽस्येकयेय मेव सा याऽग्ने जाता नग्नि र्वृत्राणि त्रयोदश। अपान्त्वेन्द्राग्नी इयमेव देवताता षड्विंशत्। अपा न्त्वेमन् हविषा वर्धनेन।)

## चतुर्थकाण्डे चतुर्थः प्रपाठकः

### आ।का।5 अग्निचयन मन्त्राः 4 (द्वादशानुवाकाः 12)

卐रश्मिरसि क्षयाय त्वा क्षय ञ्जिन्व 卐 प्रेतिरसि धर्माय त्वा धर्म ञ्जि 卐न्वान्वितिरसि दिवे त्वा दिवञ्जिन्व 卐 सन्धि रस्यन्तरिक्षाय त्वाऽन्तरिक्ष ञ्जिन्व 卐 प्रतिधिरसि पृथिव्यै त्वा पृथिवी ञ्जिन्व 卐 विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टि ञ्जिन्व 卐 प्रवाऽस्यह्ने त्वाऽह र्जि 卐न्वानुवाऽसि रात्रियै त्वा रात्रि ञ्जि 卐न्वोशिगसि।। 1।। वसुभ्यस्त्वा वसू न्जिन्व 卐 प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्रा न्जिन्व 卐 सुदीति रस्यादित्येभ्य स्त्वाऽऽदित्या न्जि 卐न्वौजोऽसि पितृभ्यस्त्वा पितृ न्जिन्व 卐 तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व 卐पृतनाषाडसि पशुभ्यस्त्वा पशू न्जिन्व 卐 रेवदस्योषधीभ्य स्त्वौषधी र्जि 卐न्वाभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्र ञ्जि 卐न्वाधिपति रसि प्राणाय।। 2।। त्वा प्राण ञ्जिन्व 卐 यन्ताऽस्यपानाय त्वाऽपान ञ्जिन्व 卐 सꣳसर्पोऽसि चक्षुषे त्वा चक्षु र्जिन्व 卐 वयोधा असि श्रोत्राय त्वा श्रोत्र ञ्जिन्व 卐 त्रिवृदसि 卐 प्रवृदसि 卐 सँवृदसि 卐 विवृदसि 卐 सꣳरोहोऽसि 卐 नीरोहोऽसि 卐 प्ररोहोऽ 卐स्यनुरोहोऽसि 卐 वसुकोऽसि 卐 वेषश्रिरसि 卐 वस्यष्टिरसि।। 3।। (उशिगसि प्राणाय त्रिचत्वारिꣳशच्च। 1)

卐राज्ञ्यसि प्राची दि-ग्वसवस्ते देवा अधिपतयो-ऽग्निर्हेतीनां प्रतिधर्ता - त्रिवृत्त्वा स्तोमः पृथिव्याꣳ श्रय-त्वाज्य मुक्थ मव्यथय थ्स्तभ्नातु - रथन्तरꣳ साम प्रतिष्ठित्यै- 卐 विराडसि दक्षिणा - दिग्रुद्रास्ते देवा अधिपतय - इन्द्रो हेतीनां प्रतिधर्ता - पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु - प्रउग मुक्थ मव्यथय थ्स्तभ्नातु - बृहथ्साम प्रतिष्ठित्यै- 卐 सम्राडसि प्रतीची दिक्।। 4।। आदित्यास्ते देवा अधिपतय- स्सोमो हेतीनां प्रतिधर्ता - सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु - मरुत्वतीय मुक्थ मव्यथय.थ्स्तभ्नातु - वैरूपꣳ साम प्रतिष्ठित्यै- 卐 स्वराडस्युदीची दि-ग्विश्वे ते देवा अधिपतयो - वरुणो हेतीनां प्रतिध- र्तैकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु - निष्केवल्य मुक्थ मव्यथय.थ्स्तभ्नातु - वैराजꣳ साम प्रतिष्ठित्या- 卐 अधिपत्न्यसि बृहती दि-ङ्मरुतस्ते देवा अधिपतयः।। 4।। बृहस्पतिर् हेतीनां

प्रतिधर्ता - त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयताँ - वैश्वदेवाऽऽग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताꣳ - शाक्वररैवते सामनी प्रतिष्ठित्याँ- अन्तरिक्षायर्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु - विधर्ता चाय मधिपतिश्च - ते त्वा सर्वे सँविदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानञ्च सादयन्तु।। 6।। (प्रतीची दिङ्मरुतस्ते देवा अधिपतय श्चत्वारिꣳशच्च। 2।)

अयं पुरो हरिकेश स्सूर्यरश्मि- स्तस्य रथगृथ्सश्च रथौजाश्च सेनानिग्रामण्यौ - पुञ्जिकस्थला च कृतस्थला चाप्सरसौ - यातुधाना हेती रक्षाꣳसि प्रहेति- रय न्दक्षिणा विश्वकर्मा - तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ - मेनका च सहजन्या चाप्सरसौ - द'2'ङ्क्ष्णवः पशवो हेतिः- पौरुषेयो वधः प्रहेति- रयं पश्चा द्विश्वव्यचा- स्तस्य रथप्रोत श्चासमरथश्च सेनानिग्रामण्यौ - प्रम्लोचन्ती च।। 7।। अनुम्लोचन्ती चाप्सरसौ - सर्पा हेति- र्व्याघ्राः प्रहेति- रय मुत्तरा थ्सँयद्वसु- स्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ - विश्वाची च घृताची चाप्सरसा-वापो हेति- र्वातः प्रहेति- रय मुपर्यर्वाग्वसु- स्तस्य तार्क्ष्य श्चारिष्टनेमिश्च सेनानिग्रामण्या-वुर्वशी च पूर्वचित्ति श्चाप्सरसौ - विद्युद्धेति- रवस्फूर्ज न्प्रहेति- स्तेभ्यो नम,स्ते नो मृडयन्तु- ते यम्।। 8।। द्विष्मो- यश्च नो द्वेष्टि - तँ वो जम्भे दधा-

म्यायो स्त्वा सदने सादया-म्यवत श्छायाया,न्नम स्समुद्राय नम स्समुद्रस्य चक्षसे परमेष्ठी त्वा सादयतु दिवः पृष्ठे - व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमती,न्दिवँ यच्छ- दिव न्दृꣳह- दिवं मा हिꣳसी, र्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय- सूर्य स्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद।

प्रोथदश्वो न यवसे अविष्यन् - यदा मह स्सँवरणा द्व्यस्थात्। आदस्य वातो अनु वाति शोचि- रध स्म ते व्रजन ङ्कृष्ण मस्ति।। 9।। (प्रम्लोचन्ती च यꣳ स्वस्त्याऽष्टाविꣳशतिश्च। 3।)

अग्नि मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति।।

त्वामग्ने पुष्करा दध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः।।

अय मग्नि स्सहस्त्रिणो वाजस्य शतिन स्पतिः। मूर्धा कवी रयीणाम्।।

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भि स्सचसे शिवाभिः। दिवि मूर्धान न्दधिषे सुवर्षा ञ्जिह्वामग्ने चकृषे हव्यवाहम्।।

卐 अबोध्यग्नि स्समिधा जनानाम्।। 10।। ❀ प्रति धेनुमिवाऽऽयती मुषासम्। यह्वा इव प्रवया मुज्जिहानाः प्र भानव स्सिस्रते नाक मच्छ।।

卐 अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे। गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्म मुर्व्यञ्च मश्रेत्।।

卐 जनस्य गोपा अजनिष्ट जागृवि रग्नि स्सुदक्ष स्सुविताय नव्यसे। घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्य श्शुचिः।।

卐 त्वामग्ने अङ्गिरसः।। 11।। ❀ गुहा हित मन्वविन्द ञ्छिश्रियाणँ वनेवने। स जायसे मथ्यमान स्सहो महत्त्वामाहु स्सहसस्पुत्र मङ्गिरः।।

卐 यज्ञस्य केतुं प्रथमं पुरोहित मग्नि न्नर स्त्रिषधस्थे समिन्धते। इन्द्रेण देवै स्सरथ॰ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः।।

卐 त्वाञ्चित्रश्रवस्तम हवन्ते विक्षु जन्तवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे।।

卐 सखाय स्सँ व स्सम्यञ्च मिषम्।। 12।। ❀ स्तोमञ्चाग्नये। वर्षिष्ठाय क्षितीना मूर्जो नप्त्रे सहस्वते।।

卐 स॰समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ। इडस्पदे समिध्यसे स नो वसून्याभर।।

卐 एना वो अग्नि न्नमसोर्जो नपात मा हुवे। प्रियञ्चेतिष्ठ मरतिङ्‌ स्वध्वरँ विश्वस्य दूत ममृतम्।।

卐 स योजते अरुषो विश्वभोजसा स दुद्रवथ्स्वाहुतः। सुब्रह्मा यज्ञ स्सुशमी।। 13।। ❀ वसूना न्देव॰ राधो जनानाम्।।

卐 उदस्य शोचि रस्था दाजुह्वानस्य मीढुषः। उद्धूमासो अरुषासो दिविस्पृश स्समग्नि मिन्धते नरः।।

卐 अग्ने वाजस्य गोमत ईशान स्सहसो यहो। अस्मे धेहि जातवेदो महि श्रवः।।

卐 स इधानो वसुष्कवि रग्नि रीडेन्यो गिरा। रेव दस्मभ्यं पुर्वणीक दीदिहि।।

卐 क्षपो राजन्नुत त्मनाऽग्ने वस्तो रुतोषसः। स तिग्मजम्भ।। 14।। ❀ रक्षसो दह प्रति।।

卐 आ ते अग्न इधीमहि द्युमन्त न्देवाजरम्। यद्धस्या ते पनीयसी समिद्दीदयति द्यवीषङ्‌ स्तोतृभ्य आ भर।।

卐 आ ते अग्न ऋचा हवि श्शुक्रस्य ज्योतिषस्पते। सुश्चन्द्र दस्म विश्पते हव्यवाट्तुभ्य॰ हूयत इषङ्‌ स्तोतृभ्य आ भर।।

卐 उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्याः।। 15।। ❀ उक्थेषु शवस स्पत इषꣳ स्तोतृभ्य आ भर।।
卐 अग्ने तमद्याश्व न्न स्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशम्। ऋध्यामा त ओहैः।।
卐 अधाह्यग्ने क्रतो र्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ।।
卐 आभिष्टे अद्य गीर्भि र्गृणन्तोऽग्ने दाशेम। प्र ते दिवो न स्तनयन्ति शुष्माः।।
卐 एभिर्नो अर्कै र्भवा नो अर्वाङ्।। 16।। ❀ सुवर्न ज्योतिः। अग्ने विश्वेभि स्सुमना अनीकैः।।
卐 अग्निꣳ होतारं मन्ये दास्वन्तँ वसो स्सूनुꣳ सहसो जातवेदसम्। विप्रन्न जातवेदसम्। य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टि मनु शुक्रशोचिष आजुह्वानस्य सर्पिषः।।
卐 अग्ने त्वन्नो अन्तमः। उत त्राता शिवो भव वरूथ्यः।।
卐 तन्त्वा शोचिष्ठ दीदिवः। सुम्नाय नून मीमहे सखिभ्यः।।
卐 वसुरग्नि र्वसुश्रवाः। अच्छा नक्षि द्युमत्तमो रयिन्दाः।। 17।। (जनाना मङ्गिरस इषꣳ सुशमी तिग्मजम्भ पुपूर्या अर्वाङ् वसुश्रवाः पञ्च च। 4।)
🏺❀卐 इन्द्राग्निभ्या-ꣳत्वाꣳसयुजा युजा युन卐ज्म्याघाराभ्या- 卐 न्तेजसा- 卐 वर्च- 卐सोक्थेभि- 卐 स्स्तोमेभि- 卐 श्छन्दोभी- 卐 रय्यै पोषाय सजातानां मध्यमस्थेयाय मया-ꣳत्वा सयुजा युजा युन卐ज्म्यम्बा- 卐 दुला- 卐 नितत्नि- 卐 रभ्रयन्ती- 卐 मेघयन्ती 卐 वर्षयन्ती 卐 चुपुणीका-ꣳनामासि प्रजापतिना त्वा विश्वाभि र्धीभि रुप दधामि 卐 पृथिव्युदपुर मन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्नि र्वियत्तोऽस्यां तामहं प्र पद्ये सा।। 18।। ❀ मे शर्म च वर्म चा 卐स्त्वधिद्यौ रन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायु र्वियत्तोऽस्या तामहं प्र पद्ये सा मे शर्म च वर्म चास्तु 卐 द्यौरपराजिताऽमृतेन विष्टाऽऽदित्यास्ते गोप्तार स्सूर्यो वियत्तोऽस्या न्तामहं प्र पद्ये सा मे शर्म च वर्म चास्तु।। 19।। (साऽष्टाचत्वारिꣳशच्च। 5।)
🏺❀卐बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे - ज्योतिष्मतीँ विश्वस्मै प्राणायापानाय विश्व.ञ्ज्योति र्यच्छा-ऽग्नि स्तेऽधिपति 卐 र्विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे - ज्योतिष्मतीँ विश्वस्मै प्राणायापानाय विश्व.ञ्ज्योतिर्यच्छ - वायुस्तेऽधिपतिः 卐 प्रजापतिस्त्वा सादयतु दिवः पृष्ठे - ज्योतिष्मतीँ विश्वस्मै प्राणायापानाय विश्व.ञ्ज्योति र्यच्छ - परमेष्ठी तेऽधिपतिः 卐 पुरोवातसनि र卐स्यभ्रसनिरसि 卐 विद्युथ्सनिः।। 20।। ❀ असि 卐 स्तनयित्नुसनिरसि 卐 वृष्टिसनि र卐स्यग्ने र्यान्यसि 卐 देवाना

मग्नेयान्यसि ꖛ वायो यान्यसि ꖛ देवानाँ वायोयान्य ꖛस्यन्तरिक्षस्य यान्यसि ꖛ देवाना मन्तरिक्षयान्य ꖛस्यन्तरिक्ष म ꖛस्यन्तरिक्षाय त्वा ꖛ सलिलाय त्वा ꖛ सर्णीकाय त्वा ꖛ सतीकाय त्वा ꖛ केताय त्वा ꖛ प्रचेतसे त्वा ꖛ विवस्वते त्वा ꖛ दिवस्त्वा ꖛ ज्योतिष आदित्येभ्य ꖛस्त्वर्चे त्वा ꖛ रुचे त्वा ꖛ द्युते त्वा ꖛ भासे त्वा ꖛ ज्योतिषे त्वा ꖛ यशोदान्त्वायशसि- ꖛ तेजोदान्त्वा तेजसि- ꖛ पयोदान्त्वा पयसि- ꖛ वर्चोदान्त्वा वर्चसि- ꖛ द्रविणोदान्त्वा द्रविणे सादयामि- तेनर्षिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद।। 21।। (विद्युथ्सनि द्युते त्वैकान्न त्रि॰शच्च। 6।)

ꖛभूयस्कृदसि ꖛ वरिवस्कृदसि ꖛ प्राच्य ꖛस्यूर्ध्वा ꖛऽस्यन्तरिक्षसद स्यन्तरिक्षे सी ꖛदाफ्सुषदसि ꖛ श्येनसदसि ꖛ गृध्रसदसि ꖛ सुपर्णसदसि ꖛ नाकसदसि ꖛ पृथिव्यास्त्वा द्रविणे सादया ꖛम्यन्तरिक्षस्य त्वा द्रविणे सादयामि ꖛ दिवस्त्वा द्रविणे सादयामि ꖛ दिशान्त्वा द्रविणे सादयामि ꖛ द्रविणोदान्त्वा द्रविणे सादयामि ꖛ प्राणं मे पा ꖛह्यपानं मे पाहि ꖛ व्यानं मे।। 22।। पा ꖛह्यायुर्मे पाहि ꖛ विश्वाऽऽयुर्मे पाहि ꖛ सर्वाऽऽयुर्मे पा ꖛह्यग्ने यत्ते पर॰ हृन्नाम तावेहि स॰रभावहै पाञ्चजन्येष्वप्येध्यग्ने ꖛ यावा ꖛ अयावा ꖛ एवा ꖛ ऊमा ꖛ स्सब्द ꖛ स्सगर ꖛ स्सुमेकः।। 23।। (व्यानं मे द्वात्रि॰शच्च। 7।)

ꖛअग्निना विश्वाषा ꖛट्थ्सूर्येण स्वरा ꖛड्क्त्वा शचीपतिर् ꖛ ऋषभेण त्वष्टा ꖛ यज्ञेन मघवा ꖛ न्दक्षिणया सुवर्गो ꖛ मन्युना वृत्रहा ꖛ सौहार्द्येन तनूधा ꖛ अन्नेन गयः ꖛ पृथिव्याऽसनो ꖛ दृग्भि रन्नादो ꖛ वषट्कारेणर्द्ध ꖛ स्साम्ना तनूपा ꖛ विराजा ज्योतिष्मा ꖛ न्ब्रह्मणा सोमपा ꖛ गोभि र्यज्ञ न्दाधार ꖛ क्षत्रेण मनुष्या ꖛ नश्वेन च रथेन च व ꖛज्र्यृतुभिः प्रभु ꖛ स्सँवथ्सरेण परिभू ꖛ स्तपसाऽनाधृष्ट ꖛ स्सूर्य स्सन्तनूभिः।। 24।। (अग्निनैकान्न पञ्चाशत्। 8।)

ꖛप्रजापति र्मनसाऽन्धोऽच्छेतो ꖛ धाता दीक्षाया॰ ꖛ सविता भृत्यां ꖛ पूषा सोमक्रयण्याँ ꖛ वरुण उपनद्धो ꖛ ऽसुरः क्रीयमाणो ꖛ मित्रः क्रीत ꖛ श्शिपिविष्ट आसादितो ꖛ नरन्धिषः प्रोह्यमाणो ꖛऽधिपति रागतः ꖛ प्रजापतिः प्रणीयमानो ꖛऽग्नि राग्नीध्रे ꖛ बृहस्पति राग्नीध्रा त्प्रणीयमान ꖛ इन्द्रो हविर्धाने ꖛऽदिति रासादितो ꖛ विष्णु रुपावह्रियमाणो ꖛऽथर्वोपोत्तो ꖛ यमो ऽभिषुतो ꖛऽपूतपा आधूयमानो ꖛ वायुः पूयमानो ꖛ मित्रः~ क्षीरश्री ꖛ र्मन्थी सक्तुश्री ꖛ वैश्वदेव उन्नीतो ꖛ रुद्र आहुतो ꖛ वायु रावृत्तो ꖛ नृचक्षाः प्रतिख्यातो ꖛ भक्ष आगतः ꖛ पितृणा न्नाराश॰सो ꖛऽसु रात्त ꖛ स्सिन्धु

रवभृथ 卐 मवप्रय'2' 卐 न्थ्समुद्रोऽवगत 卐 स्सलिलꣳ प्रप्लुत 卐 स्सुव रुद्दच ङ्गतः।। 25।। (रुद्र एकविꣳशतिश्च। 9।)

卐कृत्तिका नक्षत्र मग्नि र्देवता-ऽग्ने रुचस्स्थ प्रजापते र्धातु स्सोमस्यर्चेत्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा 卐 रोहिणी नक्षत्रं प्रजापति र्देवता- 卐 मृगशीर्ष न्नक्षत्रꣳ सोमो देवता- 卐ऽऽर्द्रा नक्षत्रꣳ रुद्रो देवता- 卐 पुनर्वसू नक्षत्र मदिति र्देवता- 卐 तिष्यो नक्षत्रं बृहस्पति र्देवता- 卐ऽऽश्रेषा नक्षत्रꣳ सर्पा देवता- 卐 मघा नक्षत्रं पितरो देवता- 卐 फल्गुनी नक्षत्रम्।। 26।। अर्यमा देवता- 卐 फल्गुनी नक्षत्रं भगो देवता- 卐 हस्तो नक्षत्रꣳ सविता देवता- 卐 चित्रा नक्षत्र मिन्द्रो देवता- 卐 स्वाती नक्षत्रँ वायु र्देवता- 卐 विशाखे नक्षत्र मिन्द्राग्नी देवता- 卐ऽनूराधा नक्षत्रं मित्रो देवता- 卐 रोहिणी नक्षत्र मिन्द्रो देवता 卐 विचृतौ नक्षत्रं पितरो देवता- 卐ऽषाढा नक्षत्र मापो देवता- 卐ऽषाढा नक्षत्रँ विश्वे देवा देवता- 卐 श्रोणा नक्षत्रँ विष्णु र्देवता- 卐 श्रविष्ठा नक्षत्रँ वसवः।। 27।। देवता- 卐 शतभिष ङ्नक्षत्र मिन्द्रो देवता- 卐 प्रोष्ठपदा नक्षत्र मज एकपाद्देवता- 卐 प्रोष्ठपदा नक्षत्र महि र्बुध्नियो देवता- 卐 रेवती नक्षत्रं पूषा देवता- 卐ऽश्वयुजौ नक्षत्र मश्विनौ देवता- 卐 ऽपभरणी र्नक्षत्रँ यमो देवता- 卐 पूर्णा पश्चा[101] 卐 यत्ते देवा अदधुः[102]।। 28।। (फल्गुनी नक्षत्रँ वसव स्त्रयस्त्रिꣳशच्च। 10।)

卐मधुश्च माधवश्च वासन्तिकावृतू- 卐 शुक्रश्च शुचिश्च ग्रैष्मावृतू- 卐 नभश्च नभस्यश्च वार्षिकावृतू- 卐 इषश्चोर्जश्च शारदावृतू- 卐 सहश्च सहस्यश्च हैमन्तिकावृतू- 卐 तपश्च तपस्यश्च शैशिरावृतू- अग्ने रन्तश्श्लेषोऽसि कल्पेता न्द्यावापृथिवी कल्पन्ता माप ओषधीꣳ कल्पन्ता मग्नयꣳ पृथङ्मम ज्यैष्ठ्याय सव्रताः।। 29।। येऽग्नय स्समनसोऽन्तरा द्यावापृथिवी शैशिरा वृतू अभि कल्पमाना इन्द्रमिव देवा अभि सँ विशन्तु 卐 सँयच्च प्रचेता श्चाग्ने स्सोमस्य सूर्य- 卐स्योग्रा च भीमा च पितृणाँ यमस्येन्द्रस्य- 卐 ध्रुवा च पृथिवी च देवस्य सवितु र्मरुताँ वरुणस्य- 卐 धर्त्री च धरित्री च मित्रावरुणयो र्मित्रस्य धातुꣳ- 卐 प्राची च प्रतीची च वसूनाꣳ रुद्राणाम्।। 30।। आदित्याना-न्ते तेऽधिपतय स्तेभ्यो नम स्ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तँ वो जम्भे दधामि- 卐 सहस्रस्य प्रमा असि 卐 सहस्रस्य प्रतिमा असि 卐 सहस्रस्य विमा असि 卐 सहस्रस्योन्मा असि 卐 साहस्रोऽसि सहस्राय 卐 त्वेमा मे अग्न इष्टका धेनव स्सन्त्वेका च शतञ्च सहस्रञ्चायुतञ्च।। 31।। नियुतञ्च प्रयुत ञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यञ्चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनव स्सन्तु षष्टि स्सहस्र मयुत मक्षीयमाणा ऋतस्था

101

102

स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वती स्स्वधाविनी स्ता मे अग्न इष्टका धेनव स्सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिन्लोके।। 32।। (सव्रता रुद्राणा मयुतञ्च पञ्च चत्वारिꣳशच्च। 11।)

**वै।का।13 अश्वमेध मन्त्राः 8 (एकोऽनुवाकः 1)**

❀卐समिद्दिशा माशया न स्सुवर्वि न्मधो रतो माधवꣳ पात्वस्मान्। अग्नि र्देवो दुष्टरीतु रदाभ्य इदङ्क्षत्रꣳ रक्षतु पात्वस्मान्।।

卐 रथन्तरꣳ सामभिꣳ पात्वस्मा न्गायत्री छन्दसाँ विश्वरूपा। त्रिवृन्नो विष्ठया स्तोमो अह्नाꣳ समुद्रो वात इद मोजꣳ पिपर्तु।।

卐 उग्रा दिशा मभिभूति र्वयोधा श्शुचि श्शुक्रे अहन्योजसीना। इन्द्राधिपतिꣳ पिपृता दतो नो महि।। 33।। ❀ क्षत्रँ विश्वतो धारयेदम्।।

卐 बृहथ्साम क्षत्रभृ द्वृद्धवृष्णिय न्त्रिष्टुभौज श्शुभित मुग्रवीरम्। इन्द्र स्तोमेन पञ्चदशेन मध्यमिदँ वातेन सगरेण रक्ष।।

卐 प्राची दिशाꣳ सहयशा यशस्वती विश्वे देवाꣳ प्रावृषाऽह्नाꣳ सुवर्वती। इदङ्ख्षत्र दुष्टर मस्त्वोजोऽनाधृष्टꣳ सहस्रियꣳ सहस्वत्।।

卐 वैरूपे सामन्निह तच्छकेम जगत्यैनँ विक्ष्वा वेशयामः। विश्वे देवा स्सप्तदशेन।।34।। ❀ वर्च इदङ्क्षत्रꣳ सलिलवात मुग्रम्।।

卐 धर्त्री दिशाङ्ख्षत्र मिद न्दाधारोपस्थाशानां मित्रवदस्त्वोजः। मित्रावरुणा शरदाऽह्ना ञ्चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतम्।।

卐 वैराजे सामन्नधि मे मनीषाऽनुष्टुभा सम्भृतँ वीर्यꣳ सहः। इदङ्क्षत्रं मित्रव दार्द्रदानु मित्रावरुणा रक्षत माधिपत्यैः।।

卐 सम्राड्दिशाꣳ सहसाम्नी सहस्वत्यृतुर् हेमन्तो विष्ठया नꣳ पिपर्तु। अवस्युवाताः।। 35।। ❀ बृहती र्नु शक्वरी रिमँ यज्ञ मवन्तु नो घृताचीः।।

卐 सुवर्वती सुदुघा नꣳ पयस्वती दिशा न्देव्यवतु नो घृताची। त्वङ्गोपाꣳ पुरएतोत पश्चा द्बृहस्पते याम्याँ युङ्धि वाचम्।।

卐 ऊर्ध्वा दिशाꣳ रन्ति राशौषधीनाꣳ सँवथ्सरेण सविता नो अह्नाम्। रेवथ्सामातिच्छन्दा उ छन्दोऽजातशत्रु स्स्योना नो अस्तु।।

卐 स्तोमत्रयस्त्रिꣳशे भुवनस्य पत्नि विवस्वद्वाते अभि नः।। 36।।❀ गृणाहि। घृतवती सवित राधिपत्यैꣳ पयस्वती रन्ति राशा नो अस्तु।।

卐 ध्रुवा दिशाँ विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता। बृहस्पति र्मातरिश्वोत वायु स्संन्धुवाना वाता अभि नो गृणन्तु।।

卐 विष्टम्भो दिवो धरुणꣳ पृथिव्या अस्येशाना जगतो विष्णुपत्नी। विश्वव्यचा इषयन्ती सुभूति श्शिवा नो अस्त्वदिति रुपस्थे।।

卐 वैश्वानरो न ऊत्या[103]❀ 卐 पृष्टो दि[104]❀ 卐व्यनु नोऽद्यानुमति[105]❀ 卐रन्विदनुमते त्व[106]❀ 卐 ङ्क्या न श्चित्र आ भुव[107]❀ 卐 त्को अद्य युङ्क्ते[108]❀।। 37।। (महि सप्तदशोनावस्युवाता अभि नोऽनु न श्चतुर्दश च। 12।)

(रश्मिरसि राड्यस्य्यं पुरो हरिकेशोऽग्नि र्मूर्धेन्द्राग्निभ्यां बृहस्पति र्भूयस्कृदस्यग्निना विश्वाषा ड्वजापति र्मनसा कृत्तिका मधुश्च समिद्दिशा न्द्वादश। रश्मिरसि प्रति धेनु मसि स्तनयित्नुसनि रस्यादित्यानाꣳ सप्तत्रिꣳशत्। रश्मिरसि को अद्य युङ्क्ते।)



 ऽ()ऽचतुर्थकाण्डे पञ्चमꣳ प्रपाठकः

**आ।का।5 अग्निचयन मन्त्राः 8 (एकादशानुवाकाः 11)**

❀卐नमस्ते रुद्र मन्यव उतो त इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्या मुत ते नमः।।

卐 या त इषु श्शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या या तव तया नो रुद्र मृडय।।

卐 या ते रुद्र शिवा तनू रघोराऽपापकाशिनी। तया न स्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि।।

卐 यामिषु ङ्गिरिशन्त हस्ते।। 1।।❀ बिभर्ष्यस्तवे। शिवाङ्गिरित्र ताङ्कुरु मा हिꣳसीꣳ पुरुष ञ्जगत्।।

卐 शिवेन वचसा त्वा गिरिशाच्छा वदामसि। यथा न स्सर्व मिज्जग दयक्ष्मꣳ सुमना असत्।।

卐 अध्यवोच दधिवक्ता प्रथमो दैव्यो भिषक्। अहीꣳश्च सर्वा ञ्जम्भय'2'न्थ्सर्वाश्च यातुधान्यः।।

103

104

105

106

107

108

卐 असौ यस्ताम्रो अरुण उत बभ्रु स्सुमङ्गलः। ये चेमाꣳ रुद्रा अभितो दिक्षु।। 2।। ❀ श्रिता स्सहस्रशोऽवैषाꣳ हेड ईमहे।।

卐 असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं ङ्गोपा अदृश न्नदृश न्नुदहार्यः। उतैनँ विश्वा भूतानि स दृष्टो मृडयाति नः।।

卐 नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्वानोऽह न्तेभ्योऽकर न्नमः।।

卐 प्रमुञ्च धन्वनस्त्व मुभयो रार्त्नियो र्ज्याम्। याश्चते हस्त इषवः।। 3।। ❀ परा ता भगवो वप।।

卐 अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो न स्सुमना भव।।

卐 विज्य न्धनुः कपर्दिनो विशल्यो बाणवाꣳ उत। अनेश न्नस्येषव आभु रस्य निषङ्गथिः।।

卐 या ते हेति र्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान् विश्वत स्त्वमयक्ष्मया परि ब्भुज।।

卐 नमस्ते अस्त्वायुधायाऽनातताय धृष्णवे। उभाभ्या मुत ते नमो बाहुभ्या न्तव धन्वने।।

卐 परि ते धन्वनो हेति रस्मा न्वृणक्तु विश्वतः। अथो य इषुधि स्तवाऽऽरे अस्म न्नि धेहि तम्।। 4।।

(हस्ते दिक्ष्विषव उभाभ्या न्द्वाविꣳशतिश्च।। 1।)

☬❀卐नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो 卐 नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो 卐 नम स्सस्पिञ्जराय त्विषीमते पथीनां पतये नमो 卐 नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो 卐 नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो 卐 नमो भवस्य हेत्यै जगतां पतये नमो 卐 नमो रुद्रायाऽऽतताविने क्षेत्राणां पतये नमो 卐 नम स्सूतायाहन्त्याय वनानां पतये नमो 卐 नमः।। 5।। ❀ रोहिताय स्थपतये वृक्षाणां पतये नमो 卐 नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो 卐 नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो 卐 नम उच्चैर्घोषाया ऽऽक्रन्दयते पत्तीनां पतये नमो 卐 नमः कृत्स्नवीताय धावते सत्वनां पतये नमः।। 6।। (वनानां पतये नमो नम एकान्न त्रिꣳशच्च। 2।)

☬❀卐नम स्सहमानाय निव्याधिन आव्याधिनीनां पतये नमो 卐 नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो 卐 नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो 卐 नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो 卐 नमो निचेरवे परिचरायारण्यानां पतये नमो 卐 नम स्सृकाविभ्यो जिघाꣳसद्भ्यो मुष्णतां पतये नमो 卐 नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमो 卐 नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो 卐 नमः।। 7।। ❀ इषुमद्भ्यो धन्वाविभ्यश्च वो नमो 卐 नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो 卐 नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो 卐 नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो 卐 नम

आसीनेभ्य श्शयानेभ्यश्च वो नमो 卐 नम स्स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो 卐 नम स्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो 卐 नम स्सभाभ्य स्सभापतिभ्यश्च वो नमो 卐 नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः।। 8।।
(कुलुञ्चानां पतये नमो नमोऽश्वपतिभ्य स्त्रीणि च। 3।)

卐नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो 卐 नम उगणाभ्य स्तृꣳहतीभ्यश्च वो नमो 卐 नमो गृथ्सेभ्यो गृथ्सपतिभ्यश्च वो नमो 卐 नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो 卐 नमो गणेभ्यो गणपतिभ्यश्च वो नमो 卐 नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो 卐 नमो महद्भ्यः~ क्षुल्लकेभ्यश्च वो नमो 卐 नमो रथिभ्योऽरथेभ्यश्च वो नमो 卐 नमो रथेभ्यः।। 9।। रथपतिभ्यश्च वो नमो 卐 नम स्सेनाभ्य स्सेनानिभ्यश्च वो नमो 卐 नमः≈ क्षत्तृभ्य स्सङ्ग्रहीतृभ्यश्च वो नमो 卐 नम स्तक्षभ्यो रथकारेभ्यश्च वो नमो 卐 नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो 卐 नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो 卐 नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो 卐 नमो मृगयुभ्य श्श्वनिभ्यश्च वो नमो 卐 नम श्श्वभ्य श्श्वपतिभ्यश्च वो नमः।। 10।। (रथेभ्य श्श्वपतिभ्यश्च द्वे च। 4।)

卐नमो भवाय च रुद्राय च 卐 नम श्शर्वाय च पशुपतये च 卐 नमो नीलग्रीवाय च शितिकण्ठाय च 卐 नमः कपर्दिने च व्युप्तकेशाय च 卐 नम स्सहस्राक्षाय च शतधन्वने च 卐 नमो गिरिशाय च शिपिविष्टाय च 卐 नमो मीढुष्टमाय चेषुमते च 卐 नमो ह्रस्वाय च वामनाय च 卐 नमो बृहते च वर्षीयसे च 卐 नमो वृद्धाय च सँवृध्वने च।। 11।। 卐 नमो अग्रियाय च प्रथमाय च 卐 नम आशवे चाजिराय च 卐 नम श्शीघ्रियाय च शीभ्याय च 卐 नम ऊर्म्याय चावस्वन्याय च 卐 नम स्स्रोतस्याय च द्वीप्याय च।। 12।। (सँवृध्वने च पञ्चविꣳशतिश्च। 5।)

卐नमो ज्येष्ठाय च कनिष्ठाय च 卐 नमः पूर्वजाय चापरजाय च 卐 नमो मध्यमाय चापगल्भाय च 卐 नमो जघन्याय च बुध्नियाय च 卐 नम स्सोभ्याय च प्रतिसर्याय च नमो 卐 याम्याय च क्षेम्याय च 卐 नम उर्वर्याय च खल्याय च 卐 नम श्लोक्याय चावसान्याय च 卐 नमो वन्याय च कक्ष्याय च 卐 नम श्श्रवाय च प्रतिश्रवाय च।। 13।। 卐 नम आशुषेणाय चाऽऽशुरथाय च 卐 नम श्शूराय चावभिन्दते च 卐 नमो वर्मिणे च वरूथिने च 卐 नमो बिल्मिने च कवचिने च 卐 नम श्श्रुताय च श्रुतसेनाय च।। 14।। (प्रतिश्रवाय च पञ्चविꣳशतिश्च। 6।)

卐नमो दुन्दुभ्याय चाऽऽहनन्याय च 卐 नमो धृष्णवे च प्रमृशाय च 卐 नमो दूताय च प्रहिताय च 卐 नमो निषङ्गिणे चेषुधिमते च 卐 नम स्तीक्ष्णेषवे चाऽऽयुधिने च 卐 नम स्स्वायुधाय च सुधन्वने च

卐नम स्स्रुत्याय च पथ्याय च 卐 नमः काट्याय च नीप्याय च 卐 नम स्सूद्याय च सरस्याय च 卐 नमो नाद्याय च वैशन्ताय च।। 15।। ❀卐 नमः कूप्याय चावट्याय च 卐 नमो वर्ष्याय चावर्ष्याय च 卐 नमो मेघ्याय च विद्युत्याय च 卐 नम ईध्रियाय चाऽऽतप्याय च 卐 नमो वात्याय च रेष्मियाय च 卐 नमो वास्तव्याय च वास्तुपाय च।। 16।। (वैशन्ताय च त्रि॰शच्च। 7।)

❀卐नम स्सोमाय च रुद्राय च 卐 नम स्ताम्राय चारुणाय च 卐 नम श्शङ्गाय च पशुपतये च 卐 नम उग्राय च भीमाय च 卐 नमो अग्रेवधाय च दूरेवधाय च 卐 नमो हन्त्रे च हनीयसे च 卐 नमो वृक्षेभ्यो हरिकेशेभ्यो 卐 नम स्ताराय 卐 नम श्शम्भवे च मयोभवे च 卐 नम श्शङ्कराय च मयस्कराय च 卐 नम शिवाय च शिवतराय च।। 17।। ❀卐 नम स्तीर्थ्याय च कूल्याय च 卐 नमः पार्याय चावार्याय च 卐 नमः प्रतरणाय चोत्तरणाय च 卐 नम आतार्याय चाऽऽलाद्याय च 卐 नम श्शष्प्याय च फेन्याय च 卐 नम स्सिकत्याय च प्रवाह्याय च।। 18।। (शिवतराय च त्रि॰शच्च। 8।)

❀卐नम इरिण्याय च प्रपथ्याय च 卐 नमः कि॰शिलाय च क्षयणाय च 卐 नमः कपर्दिने च पुलस्तये च 卐 नमो गोष्ठ्याय च गृह्याय च 卐 नम स्तल्प्याय च गेह्याय च 卐 नमः काट्याय च गह्वरेष्ठाय च 卐 नमो हृदय्याय च निवेष्प्याय च 卐 नमः पा॰सव्याय च रजस्याय च 卐 नम श्शुष्क्याय च हरित्याय च 卐 नमो लोप्याय चोलप्याय च।। 19।। ❀卐 नम ऊर्व्याय च सूर्म्याय च 卐 नमः पर्ण्याय च पर्णशद्याय च 卐 नमोऽपगुरमाणाय चाभिघ्नते च 卐 नम आख्खिदते च प्रख्खिदते च 卐 नमो वः किरिकेभ्यो- देवाना॰ हृदयेभ्यो 卐 नमो विक्षीणकेभ्यो- 卐 नमो विचिन्वत्केभ्यो- 卐 नम आनिर्हतेभ्यो- 卐 नम आमीवत्केभ्यः--।। 20।। (उलप्याय च त्रयस्त्रि॰शच्च। 9।)

❀卐द्रापे अन्धस स्पते दरिद्र न्नीललोहित। एषां पुरुषाणा मेषां पशूनां मा भे र्माऽरो मो एषां किञ्चनाऽऽममत्।।

卐 या ते रुद्र शिवा तनू श्शिवा विश्वाहभेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे।।

卐 इमा॰ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतिम्। यथा न श्शमस द्विपदे चतुष्पदे विश्वं पुष्ट ङ्ग्रामे अस्मिन्न्।। 21।। ❀ अनातुरम्।।

卐 मृडा नो रुद्रोत नो मय स्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छञ्च योश्च मनु रायजे पिता तदश्याम तव रुद्र प्रणीतौ।।

卐 मा नो महान्त मुत मा नो अर्भकं मा न उक्षन्त मुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं प्रिया मा न स्तनुवः।। 22।। ❀ रुद्र रीरिषः।।

卐 मा न स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरा न्मा नो रुद्र भामितो वधीर् हविष्मन्तो नमसा विधेम ते।।

卐 आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्न मस्मे ते अस्तु। रक्षा च नो अधि च देव ब्रूह्यधा च न श्शर्म यच्छ द्विबर्हाः।।

卐 स्तुहि।। 23।। ❀ श्रुत ङ्गर्तसदँ युवानं मृगन्न भीम मुपहत्नु मुग्रम्। मृडा जरित्रे रुद्र स्तवानो अन्यन्ते अस्मन्नि वपन्तु सेनाः।।

卐 परिणो रुद्रस्य हेति र्वृणक्तु परि त्वेषस्य दुर्मति रघायोः। अव स्थिरा मघवद्भ्य स्तनुष्व मीढ्व स्तोकाय तनयाय मृडय।।

卐 मीढुष्टम शिवतम शिवो न स्सुमना भव। परमे वृक्ष आयुध न्निधाय कृत्तिँ वसान आ चर पिनाकम्।। 24।। ❀ बिभ्र दा गहि।।

卐 विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रꣳ हेतयोऽन्य मस्मन्नि वपन्तु ताः।।

卐 सहस्राणि सहस्रधा बाहुवो स्तव हेतयः। तासा मीशानो भगवः पराचीना मुखा कृधि।। 25।। (अस्मिꣳ स्तनुव स्स्तुहि पिनाक मेकान्न त्रिꣳशच्च। 10।)

❀卐सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि।।

卐 अस्मि न्महत्यर्णवेऽन्तरिक्षे भवा अधि। --

卐 नीलग्रीवा श्शितिकण्ठा श्शर्वा अधः क्षमाचराः। --

卐 नीलग्रीवा श्शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः। --

卐 ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः। --

卐 ये भूताना मधिपतयो विशिखासः कपर्दिनः। --

卐 ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। --

卐 ये पथां पथिरक्षय ऐलबृदा यव्युधः। --

卐 ये तीर्थानि।। 26।। ❀ प्रचरन्ति सृकावन्तो निषङ्गिणः। --

卐 य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि।।

卐 नमो रुद्रेभ्यो- ये पृथिव्याँ(1) - 卐 -- येऽन्तरिक्षे(2) -- 卐 ये दिवि(3)--, येषा मन्नँ (1)-- वातो(2) -- वर्ष(3)- मिषव स्तेभ्यो दश प्राची र्दश दक्षिणा दश प्रतीची र्दशोदीची र्दशोर्ध्वा स्तेभ्यो नमस्ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तँ वो जम्भे दधामि।। 27।। (तीर्थानि यश्च षड्व। 11।)

(नमस्ते नमो हिरण्यबाहवे नम स्सहमानाय नम आव्याधिनीभ्यो नमो भवाय नमो ज्येष्ठाय नमो दुन्दुभ्याय नम स्सोमाय नम इरिण्याय द्रापे सहस्राण्येकादश। 11। नमस्ते नमो भवाय द्रापे सप्तविꣳशतिः। 27। नमस्ते रुद्र तँ वो जम्भे दधामि।)

## चतुर्थकाण्डे षष्ठः प्रपाठकः

### आ।का।5 अग्निचयन मन्त्राः 9 (पञ्चानुवाकाः 5)

卐अश्मन्नूर्जं पर्वते शिश्रियाणाँ वाते पर्जन्ये वरुणस्य शुष्मे। अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि सम्भृता न्ता न्न इष मूर्जं न्धत्त मरुत स्सꣳरराणाः।।

卐 अश्मꣳ स्ते क्षुदमुन्ते शुगृच्छतु यन्द्विष्मः।।

卐 समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि। पावको अस्मभ्यꣳ शिवो भव।।

卐 हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि। पावको अस्मभ्यꣳ शिवो भव।।

卐 उप।। 1।। ज्मन्नुप वेतसेऽवत्तर न्नदीष्वा। अग्ने पित्त मपामसि।।

卐 मण्डूकि ताभि रा गहि सेमन्नो यज्ञम्। पावकवर्णꣳ शिव ङ्कृधि।।

卐 पावक आ चितयन्त्या कृपा। क्षामन्नुरुच उषसो न भानुना।।

卐 तूर्वन्न याम न्नेतशस्य नू रण आ यो घृणे। न ततृषाणो अजरः।।

卐 अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान्।। 2।। वक्षि यक्षि च।।

卐 स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽवह। उप यज्ञꣳ हविश्च नः।।

卐 अपा मिद न्न्ययनꣳ समुद्रस्य निवेशनम्। अन्यन्ते अस्म त्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव।।

卐 नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्यन्ते अस्मत्तपन्तु हेतयःपावको अस्मभ्यꣳ शिवो भव।।

卐 नृषदे वट्।। 3।। 卐 अप्सुषदे व 卐ड्वनसदे व 卐ड्बर्हिषदे व 卐ट्थ्सुवर्विदे वट्।।

卐 ये देवा देवानाँ यज्ञिया यज्ञियाना७ सँवथ्सरीण मुप भाग मासते। अहुतादो हविषो यज्ञे अस्मि'2'न्थ्स्वय ञ्जुहुध्वं मधुनो घृतस्य।।

卐 ये देवा देवेष्वधि देवत्व मायन् ये ब्रह्मण४ पुरएतारो अस्य। येभ्यो नर्ते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु।।

卐 प्राणदाः।। 4।।❀ अपानदा व्यानदा श्चक्षुर्दा वर्चोदा वरिवोदाः। अन्यन्ते अस्मत्तपन्तु हेतय४ पावको अस्मभ्य७ शिवो भव।।

卐 अग्नि स्तिग्मेन शोचिषा य७स द्विश्व न्न्यत्त्रिणम्। अग्निर्नो व७सते रयिम्।।

卐 सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवा७ आयजिष्ठ स्स्वस्ति। अदब्धो गोपा उत न४ परस्पा अग्ने द्युम दुत रेव द्दिदीहि।। 5।। (उप देवान् वद्वाणदा श्चतुश्चत्वारि७शच्च। 1।)

❀卐य इमा विश्वा भुवनानि जुह्व दृषिर् होता निषसादा पिता नः। स आशिषा द्रविण मिच्छमान४ परमच्छदो वर आ विवेश।।

卐 विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत सन्दृक्। तेषा मिष्टानि समिषा मदन्ति यत्र सप्तर्षीन् पर एकमाहुः।।

卐 यो न४ पिता जनिता यो विधाता यो न स्सतो अभ्या सज्जजान। 6।।❀ यो देवाना न्नामधा एक एव त७ संप्रश्नं भुवना यन्त्यन्या।।

卐 त आऽयजन्त द्रविण७ समस्मा ऋषय४ पूर्वे जरितारो न भूना। असूर्ता सूर्ता रजसो विमाने ये भूतानि समकृण्व न्निमानि।।

卐 न तँ विदाथ य इद ञ्जजानान्य द्युष्माक मन्तरं भवाति। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशास श्चरन्ति।।

卐 परो दिवा पर एना।। 7।।❀ पृथिव्या परो देवेभि रसुरै र्गुहा यत्। क७ स्विद्गर्भं प्रथम न्दध्र आपो यत्र देवा स्समगच्छन्त विश्वे।।

卐 तमिद्गर्भं प्रथम न्दध्र आपो यत्र देवा स्समगच्छन्त विश्वे। अजस्य नाभा वध्येक मर्पितँ यस्मिन्निदँ विश्वं भुवन मधि श्रितम्।।

卐 विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभव द्द्वितीयः। तृतीय४ पिता जनितौषधीनाम्।। 8।।❀ अपाङ्गर्भँ व्यदधा त्पुरुत्रा।।

卐 चक्षुषः पिता मनसा हि धीरो घृत मेने अजन न्नम्नमाने। यदेदन्ता अदद्दृ२हन्त पूर्व आदि द्यावापृथिवी अप्रथेताम्।।

卐 विश्वतश्चक्षु रुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात्। सं बाहुभ्या न्नमति सं पतत्रै र्द्यावापृथिवी जनयन्देव एकः।।

卐 किꣳ स्विदासी दधिष्ठान मारम्भण ङ्कतम थ्स्वित्किमासीत्। यदी भूमि ञ्जनयन्न्।। 9।। ❀ विश्वाकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः।।

卐 किꣳस्वि द्वनङ्क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठ द्भुवनानि धारयन्न्।।

卐 या ते धामानि परमाणि याऽवमा या मध्यमा विश्वकर्म न्नुतेमा। शिक्षा सखिभ्यो हविषि स्वधाव स्स्वयँ यजस्व तनुव ञ्जुषाणः।।

卐 वाचस्पतिँ विश्वकर्माण मूतये।। 10।। ❀ मनोयुजँ वाजे अद्या हुवेम। स नो नेदिष्ठा हवनानि जोषते विश्वशम्भू रवसे साधुकर्मा।।

卐 विश्वकर्मन् हविषा वावृधान स्स्वयँ यजस्व तनुव ञ्जुषाणः। मुह्यन्त्वन्ये अभित स्सपत्ना इहास्माकं मघवा सूरि रस्तु।।

卐 विश्वकर्मन् हविषा वर्धनेन त्रातार मिन्द्र मकृणो रवध्यम्। तस्मै विश स्समनमन्त पूर्वी रयमुग्रो विहव्यो यथाऽसत्।।

卐 समुद्राय वयुनाय सिन्धूनां पतये नमः। नदीना२ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाऽहाऽमर्त्य२ हविः।। 11।। (जजानैनौषधीनां भूमि ञ्जनय न्नूतये नमो नव च। 2।)

❀卐उदेन मुत्तरा न्नयाग्ने घृतेनाऽऽहुत। राय स्पोषेण स२ सृज प्रजया च धनेन च।।

卐 इन्द्रेमं प्रतरा ङ्कृधि सजाताना मसद्वशी। समेनँ वर्चसा सृज देवेभ्यो भागधा असत्।।

卐 यस्य कुर्मो हविर्गृहे तमग्ने वर्धया त्वम्। तस्मै देवा अधि ब्रव न्नयञ्च ब्रह्मण स्पतिः।।

卐 उदु त्वा विश्वे देवाः।। 12।। ❀ अग्ने भरन्तु चित्तिभिः। स नो भव शिवतम स्सुप्रतीको विभावसुः।।

卐 पञ्च दिशो दैवी र्यज्ञ मवन्तु देवी रपामति न्दुर्मतिं बाधमानाः। रायस्पोषे यज्ञपति माभजन्तीः।।

卐 रायस्पोषे अधि यज्ञो अस्था थ्समिद्धे अग्ना वधि मामहानः। उक्थपत्र ईड्यो गृभीत स्तप्त ङ्घर्मं परिगृह्यायजन्त।।

卐 ऊर्जा यद्यज्ञ मशमन्त देवा दैव्याय धर्त्रे जोष्ट्रे। देवश्री श्श्रीमणा श्शतपयाः।। 13।।❀ परिगृह्य देवा यज्ञ मायन्न्।।
卐 सूर्यरश्मिर् हरिकेशः पुरस्ता थ्सविता ज्योति रुदया अजस्रम्। तस्य पूषा प्रसवँ याति देव स्संपश्यन्विश्वा भुवनानि गोपाः।।
卐 देवा देवेभ्यो अध्वर्यन्तो अस्थु र्वीत श्शमित्रे श्शमिता यजध्यै। तुरीयो यज्ञो यत्र हव्य मेति ततः पावका आशिषो नो जुषन्ताम्।।
卐 विमान एष दिवो मध्य आस्त आपप्रिवा न्रोदसी अन्तरिक्षम्। स विश्वाची रभि।। 14।।❀ चष्टे घृताची रन्तरा पूर्व मपरञ्च केतुम्।।
卐 उक्षा समुद्रो अरुण स्सुपर्णः पूर्वस्य योनिं पितु रा विवेश। मध्ये दिवो निहितः पृश्ञि रश्मा वि चक्रमे रजसः पात्यन्तौ।।
卐 इन्द्रँ विश्वा अवीवृध'2'न्थ्समुद्रव्यचस ङ्गिरः। रथीतम रथीनाँ वाजाना सत्पतिं पतिम्।
卐 सुम्नहू र्यज्ञो देवा आ च वक्ष द्यक्ष दग्नि र्देवो देवा आ च वक्षत्।।
卐 वाजस्य मा प्रसवेनोद्ग्राभे.णोदग्रभीत्। अथा सपत्ना इन्द्रो मे निग्राभेणाधरा अकः।।
卐 उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन्न्। अथा सपत्ना निन्द्राग्नी मे विषूचीना न्व्यस्यताम्।। 15।।
(विश्वे देवा श्शतपया अभि वाजस्य षड्विंशतिश्च। 3।)
❀卐आशु श्शिशानो वृषभो न युध्मो घनाघनः क्षोभण श्चर्षणीनाम्। सङ्क्रदनोऽनिमिष एकवीर श्शत सेना अजय थ्साकमिन्द्रः।।
卐 सङ्क्रन्दने.नानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तथ्सहध्वँ युधो नर इषुहस्तेन वृष्णा।।
卐 स इषुहस्तै स्स निषङ्गिभि र्वशी सँस्रष्टा स युध इन्द्रो गणेन। सँसृष्टजि थ्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभि रस्ता।।
卐 बृहस्पते परि दीय।। 16।।❀ रथेन रक्षोहाऽमित्रा अपबाधमानः। प्रभञ्ज'2'न्थ्सेनाः प्रमृणो युधा जय न्नस्माक मेध्यविता रथानाम्।।
卐 गोत्रभिद ङ्गोविदँ वज्रबाहु ञ्जयन्त मज्म प्रमृणन्त मोजसा। इमँ सजाता अनु वीरयध्व मिन्द्रँ सखायोऽनु सँ रभध्वम्।।

卐 बलविज्ञाय स्स्थविरः प्रवीर स्सहस्वान् वाजी सहमान उग्रः। अभिवीरो अभिसत्वा सहोजा जैत्र मिन्द्र रथ मा तिष्ठ गोवित्।।

卐 अभि गोत्राणि सहसा गाहमानोऽदायः।। 17।।❀ वीर श्शतमन्यु रिन्द्रः। दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु।।

卐 इन्द्र आसान्नेता बृहस्पति र्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनाना मभिभञ्जतीना ञ्जयन्तीनां मरुतो यन्त्वग्रे।।

卐 इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम्। महामनसां भुवनच्यवाना ङ्घोषो देवाना ञ्जयता मुदस्थात्।।

卐 अस्माक मिन्द्र स्समृतेषु ध्वजेष्वस्माकँ या इषव स्ता जयन्तु।। 18। अस्माकँ वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु।।

卐 उद्धर्षय मघव न्नायुधा न्युत्सत्वनां मामकानां महाꣳसि। उद्वृत्रहन्वाजिनाँ वाजिना न्युद्रथाना ञ्जयता मेतु घोषः।।

卐 उप प्रेत जयता नर स्स्थिरा व स्सन्तु बाहवः। इन्द्रो व श्शर्म यच्छ त्वनाधृष्या यथाऽसथ।।

卐 अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिता। गच्छामित्रा न्प्र।। 19।।❀ विश मैषा ङ्कञ्चनोच्छिषः।।

卐 मर्माणि ते वर्मभि श्छादयामि सोमस्त्वा राजाऽमृतेनाभि वस्ताम्। उरो र्वरीयो वरिवस्ते अस्तु जयन्तन्त्वा मनु मदन्तु देवाः।।

卐 यत्र बाणा स्संपतन्ति कुमारा विशिखा इव। इन्द्रो न स्तत्र वृत्रहा विश्वाहा शर्म यच्छतु।। 20।। (दीयादायो जयन्त्वमित्रा न्प्रचत्वारिꣳशच्च। 4।)

❀卐प्राची मनु प्रदिशं प्रेहि विद्वा नग्ने रग्ने पुरोअग्नि र्भवेह। विश्वा आशा दीद्यानो वि भाह्यूर्जन्नो धेहि द्विपदे चतुष्पदे।।

卐 क्रमध्व मग्निना नाक मुख्यꣳ हस्तेषु बिभ्रतः। दिवः पृष्ठꣳ सुवर्गत्वा मिश्रा देवेभि राध्वम्।।

卐 पृथिव्या अह मुदन्तरिक्ष माऽरुह मन्तरिक्षा द्दिवमाऽरुहम्। दिवो नाकस्य पृष्ठा थ्सुव र्ज्योति रगाम्।। 21।।❀ अहम्।।

卐 सुवर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी। यज्ञँ ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे।

卐 अग्ने प्रेहि प्रथमो देवयता ञ्चक्षु र्देवाना मुत मर्त्यानाम्। इयक्षमाणा भृगुभि स्सजोषा स्सुव र्यन्तु यजमाना स्स्वस्ति।।

卐 नक्तोषासा समनसा विरूपे धापयेते शिशु मेक२ समीची। द्यावाक्षामा रुक्मो अन्त र्वि भाति देवा अग्नि न्धारय न्द्रविणोदाः।।

卐 अग्ने सहस्राक्ष।। 22।।❀ शतमूर्ध ञ्छतन्ते प्राणा स्सहस्रमपानाः। त्व२ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा।।

卐 सुपर्णोऽसि गरुत्मा न्पृथिव्या२ सीद पृष्ठे पृथिव्या स्सीद 卐 भासाऽन्तरिक्ष मा पृण ज्योतिषा दिव मुत्तभान तेजसा दिश उद्द२ह।।

卐 आजुह्वान स्सुप्रतीक४ पुरस्ता दग्ने स्वाँ योनि मा सीद साध्या। अस्मि'2'न्थ्सधस्थे अध्युत्तरस्मिन् विश्वे देवाः।। 23।।❀ यजमानश्च सीदत।।

卐 प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ। त्वा२ शश्वन्त उप यन्ति वाजाः।।

卐 विधेम ते परमे जन्मन्नग्ने विधेम स्तोमै रवरे सधस्थे। यस्माद्योने रुदारिथा यजे तं प्र त्वे हवी२षि जुहुरे समिद्धे।।

卐 ता२ सवितु र्वरेण्यस्य चित्रामाऽहँ वृणे सुमतिँ विश्वजन्याम्। यामस्य कण्वो अदुह त्प्रपीना२ सहस्रधाराम्।। 24।।❀ पयसा महीङ्गाम्।।

卐 सप्त ते अग्ने समिध स्सप्त जिह्वा स्सप्तर्षय स्सप्त धाम प्रियाणि। सप्त होत्रा स्सप्तधा त्वा यजन्ति सप्त योनी रा पृणस्वा घृतेन।।

卐 ईदृङ्क्चान्यादृङ्क्चैतादृङ्क्च प्रतिदृङ्क्च मितश्च संमितश्च सभराः।। --

卐 शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मा२श्च सत्यश्चर्तपा श्चात्य२हाः।। 25।।-

❀卐 ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्त्यमित्रश्च दूरेअमित्रश्च गणः।। --

卐 ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः।। --

卐 ईदृक्षास एतादृक्षास ऊषुण स्सदृक्षास४ प्रतिसदृक्षास एतन॑ मितासश्च संमितासश्च न ऊतये सभरसो मरुतो यज्ञे अस्मिन्निन्द्र न्दैवी र्विशो मरुतोऽनुवर्त्मानो यथेन्द्र न्दैवी र्विशो मरुतोऽनुवर्त्मान एव मिमँ यजमान न्दैवीश्च विशो मानुषी श्चानुवर्त्मानो भवन्तु।। 26।। (अगा२ सहस्राक्ष देवा स्सहस्रधारा मत्य२हा अनुवर्त्मान ष्षोडश च। 5।)

卐जीमूतस्येव भवति प्रतीकँ यद्वर्मी याति समदा मुपस्थे। अनाविद्धया तनुवा जय त्व॒ स त्वा वर्मणो महिमा पिपर्तु।।

卐 धन्वना गा धन्वनाऽऽजि ञ्जयेम धन्वना तीव्रा स्समदो जयेम। धनु श्शत्रो रपकाम ङ्कृणोति धन्वना सर्वाः प्रदिशो जयेम।।

卐 वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रिय॒ सखायं परिषस्वजाना। योषेव शिङ्क्ते वितताऽधि धन्वन्न्।। 27।।❀ ज्या इय॒ समने पारयन्ती।।

卐 ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृता मुपस्थे। अप शत्रून् विध्यता॒ सँविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान्।।

卐 बह्वीनां पिता बहु रस्य पुत्र श्चिश्चा कृणोति समनाऽवगत्य। इषुधि स्सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः।।

卐 रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः। अभीशूनां महिमानम्।। 28।।❀ पनायत मनः पश्चादनु यच्छन्ति रश्मयः।।

卐 तीव्रा न्घोषा न्कृण्वते वृषपाणयोऽश्वा रथेभि स्सह वाजयन्तः। अवक्रामन्तः प्रपदै रमित्रान्क्षिणन्ति शत्रू॒ रनपव्ययन्तः।।

卐 रथवाहन॒ हविरस्य नाम यत्राऽऽयुध न्निहित मस्य वर्म। तत्रा रथ मुप शग्म॒ सदेम विश्वाऽहा वय॒ सुमनस्यमानाः।।

卐 स्वादुष॒सदः पितरो वयोधाः कृच्छ्रेश्रित श्शक्तीवन्तो गभीराः। चित्रसेना इषुबला अमृध्रा स्सतोवीरा उरवो व्रातसाहाः।।

卐 ब्राह्मणासः।। 29।।❀ पितर स्सोम्यास श्शिवे नो द्यावापृथिवी अनेहसा। पूषा नः पातु दुरिता दृतावृधो रक्षा माकिर्नो अघश॒स ईशत।।

卐 सुपर्णँ वस्ते मृगो अस्या दन्तो गोभि स्सन्नद्धा पतति प्रसूता। यत्रा नर स्सञ्च वि च द्रवन्ति तत्रास्मभ्य मिषव श्शर्म य॒सन्न्।।

卐 ऋजीते परि वृङ्ग्धि नोऽश्मा भवतु न स्तनूः। सोमो अधि ब्रवीतु नोऽदितिः।। 30।।❀ शर्म यच्छतु।।

卐 आ जङ्घन्ति सान्वेषा ञ्जघना॰ उप जिघ्नते। अश्वाजनि प्रचेतसोऽश्वा न्थ्समथ्सु चोदय।।
卐 अहिरिव भोगैः पर्येति बाहु ञ्ज्याया हेतिं परिबाधमानः। हस्तघ्नो विश्वा वयुनानि विद्वा न्पुमा न्पुमा॰सं परिपातु विश्वतः।।
卐 वनस्पते वीड्वङ्गो हि भूया अस्मथ्सखा प्रतरण स्सुवीरः। गोभि स्सन्नद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि।।
卐 दिवः पृथिव्याः परि।। 31।। ❀ ओज उद्भृतँ वनस्पतिभ्यः पर्याभृत॰ सहः। अपा मोज्मानं परि गोभि रावृत मिन्द्रस्य वज्र॰ हविषा रथँ यज।।
卐 इन्द्रस्य वज्रो मरुता मनीकं मित्रस्य गर्भो वरुणस्य नाभिः। सेमान्नो हव्यदाति ञ्जुषाणो देवरथ प्रति हव्या गृभाय।।
卐 उपश्वासय पृथिवी मुत द्यां पुरुत्रा ते मनुताँ विष्ठित ञ्जगत्। स दुन्दुभे सजू रिन्द्रेण देवै दूरात्।। 32।। ❀ दवीयो अप सेध शत्रून्।।
卐 आ क्रन्दय बल मोजो न आ धा निष्टनिहि दुरिता बाधमानः। अप प्रोथ दुन्दुभे दुच्छुना॰ इत इन्द्रस्य मुष्टिरसि वीडयस्व।।
卐 आऽमूरज प्रत्यावर्तयेमाः केतुम द्दुन्दुभि र्वावदीति। समश्वपर्णा श्चरन्ति नो नरोऽस्माक मिन्द्र रथिनो जयन्तु।। 33।। (धन्व न्महिमानं ब्राह्मणासोऽदितिः पृथिव्याः परि दूरादेकचत्वारि॰शच्च। 6।)
❀卐 यदक्रन्दः प्रथम ञ्जायमान उद्य'2'न्थ्समुद्रा दुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जात न्ते अर्वन्न्।।
卐 यमेन दत्त न्त्रित एन मायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशना मगृभ्णा थ्सूरा दश्वँ वसवो निरतष्ट।।
卐 असि यमो अस्यादित्यो अर्व न्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्तः।। 34।। ❀ आहुस्ते त्रीणि दिवि बन्धनानि।।
卐 त्रीणि त आहु र्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्त स्समुद्रे। उतेव मे वरुणश्छ'2'न्थ्स्यर्वन् यत्रा त आहुः परम ञ्जनित्रम्।
卐 इमा ते वाजि न्नवमार्जना.नीमा शफाना॰ सनितु र्निधाना। अत्रा ते भद्रा रशना अपश्य मृतस्य या अभिरक्षन्ति गोपाः।।

卐 आत्मानन्ते मनसाऽऽरा द्जाना मवो दिवा।। 35।।❀ पतयन्तं पतङ्गम्। शिरो अपश्यं पथिभि स्सुगेभि रेणुभि र्जेहमानं पतत्रि।।

卐 अत्रा ते रूप मुत्तम मपश्य ञ्जिगीषमाण मिष आ पदे गोः। यदा ते मर्तो अनु भोग मानडादि द्ग्रसिष्ठ ओषधी रजीगः।।

卐 अनु त्वा रथो अनु मर्यो अर्व न्ननु गावोऽनु भगः कनीनाम्। अनु व्रातास स्तव सख्य मीयु रनु देवा ममिरे वीर्यम्।। 36।।❀ ते।।

卐 हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत्। देवा इदस्य हविरद्य मायन् यो अर्वन्तं प्रथमो अध्यतिष्ठत्।।

卐 ईर्मान्तास स्सिलिकमध्यमास स्स॰ शूरणासो दिव्यासो अत्याः। ह॰सा इव श्रेणिशो यतन्ते यदाक्षिषु र्दिव्य मज्म मश्वाः।।

卐 तव शरीरं पतयिष्ण्वर्व न्तव चित्तँ वात इव ध्रजीमान्। तव शृङ्गाणि विष्ठिता पुरुत्राऽरण्येषु जर्भुराणा चरन्ति।।

卐 उप।। 37।।❀ प्रागाच्छसनँ वाज्यर्वा देवद्रीचा मनसा दीध्यानः। अजः पुरो नीयते नाभि रस्यानु पश्चात्कवयो यन्ति रेभाः।।

卐 उप प्रागा त्परमँ यथ्सधस्थ मर्वा॰ अच्छा पितरं मातरञ्च। अद्या देवा ञ्जुष्टतमो हि गम्या अथाऽऽशास्ते दाशुषे वार्याणि।। 38।। (विपृक्तो दिवा वीर्य मुपैकान्न चत्वारि॰शच्च। 7।)

❀卐मा नो मित्रो वरुणो अर्यमाऽऽयु रिन्द्र ऋभुक्षा मरुतः परि ख्यन्न्। यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि।।

卐 यन्निर्णिजा रेक्णसा प्रावृतस्य राति ङ्गृभीतां मुखतो नयन्ति। सुप्राङजो मेम्य द्विश्वरूप इन्द्रापूष्णोः प्रिय मप्येति पाथः।।

卐 एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः। अभिप्रियँ यत्पुरोडाश मर्वता त्वष्टेत्।। 39।।❀ एन॰ सौश्रवसाय जिन्वति।।

卐 यद्धविष्य मृतुशो देवयान न्त्रि र्मानुषाः पर्यश्व न्नयन्ति। अत्रा पूष्णः प्रथमो भाग एति यज्ञ न्देवेभ्यः प्रतिवेदय न्नजः।।

卐 होताऽध्वर्यु रावया अग्निमिन्धो ग्रावग्राभ उत शङ्स्ता सुविप्रः। तेन यज्ञेन स्वरङ्कृतेन स्विष्टेन वक्षणा आ पृणध्वम्।।

卐 यूपव्रस्का उत ये यूपवाहा श्चषालँ ये अश्वयूपाय तक्षति। ये चार्वते पचनꣳ सम्भरन्त्युतो।। 40।। ❀ तेषा मभिगूर्ति र्न इन्वतु।।

卐 उप प्रागाथ्सुमन्मेऽधायि मन्म देवाना माशा उपवीतपृष्ठः। अन्वेनँ विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्।।

卐 यद्वाजिनो दाम सन्दान मर्वतो या शीर्षण्या रशना रज्जुरस्य। यद्वा घास्य प्रभृत मास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु।।

卐 यदश्वस्य क्रविषः।। 41।। ❀ मक्षिकाऽऽश यद्वा स्वरौ स्वधितौ रिप्त मस्ति। यद्धस्तयो श्शमितु र्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु।।

卐 यदूवध्य मुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति। सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ श्रृतपाकं पचन्तु।।

卐 यत्ते गात्रा दग्निना पच्यमाना दभि शूल न्निहतस्यावधावति। मा तद्भूम्यामा श्रिष न्मा तृणेषु देवेभ्य स्तदुशद्भ्यो रात मस्तु।। 42।। (इदुतो क्रविष श्श्रिष थ्सप्त च। 8।)

❀卐 ये वाजिनं परिपश्यन्ति पक्वँ य ईमाहु स्सुरभि र्निर्हरेति। ये चार्वतो माꣳसभिक्षा मुपाऽऽसत उतो तेषा मभिगूर्ति र्न इन्वतु।।

卐 यन्नीक्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि। ऊष्मण्या ऽपिधाना चरूणा मङ्का स्सूनाः परि भूषन्त्यश्वम्।।

卐 निक्रमण न्निषदनँ विवर्तनँ यच्च पड्वीश मर्वतः। यच्च पपौ यच्च घासिम्।। 43।। ❀ जघास सर्वा ता ते अपि देवेष्वस्तु।।

卐 मा त्वाऽग्नि र्ध्वनयि द्धूमगन्धि र्मोखा भ्राजन्त्यभि विक्त जघ्रिः। इष्टँ वीत मभिगूर्तँ वषट्कृत न्तन्देवासः प्रति गृभ्णन्त्यश्वम्।।

卐 यदश्वाय वास उपस्तृणन्त्यधीवासँ या हिरण्यान्यस्मै। सन्दान मर्वन्तं पड्वीशं प्रिया देवेष्वा यामयन्ति।।

卐 यत्ते सादे महसा शूकृतस्य पार्ष्णिया वा कशया।। 44।। ❀ वा तुतोद। स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि।।

卐 चतुस्त्रिꣳशद्वाजिनो देवबन्धो र्वङ्क्री रश्वस्य स्वधिति स्समेति। अच्छिद्रा गात्रा वयुना कृणोत परुष्परु रनुघुष्या वि शस्त।।

卐 एक स्त्वष्टु रश्वस्या विशस्ता द्वा यन्तारा भवत स्तथर्तुः। या ते गात्राणा मृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्यग्नौ।।

卐 मा त्वा तपत्।। 45।। ❀ प्रिय आत्माऽपियन्तं मा स्वधिति स्तनुव आ तिष्ठिपत्ते। मा ते गृध्नु रविशस्ताऽतिहाय छिद्रा गात्राण्यसिना मिथू कः।।

卐 न वा उवेत न्म्रियसे न रिष्यसि देवाꣳ इदेषि पथिभि सुगेभिः। हरी ते युञ्जा पृषती अभूता मुपास्था द्वाजी धुरि रासभस्य।।

卐 सुगव्यन्नो वाजी स्वश्वियं पुꣳसꣳ पुत्राꣳ उत विश्वापुषꣳ रयिम्। अनागास्त्वन्नो अदितिꣳ कृणोतु क्षत्रन्नो अश्वो वनताꣳ हविष्मान्।। 46।। (घासि ङ्कशया तप द्रयिन्नव च। 9।)

(अश्मन् य इमोदेन माशुꣳ प्राची ञ्जीमूतस्य यदक्रन्दो मा नो मित्रो ये वाजिन न्नव। 9। अश्म न्मनोयुजं प्राची मनु शर्म यच्छतु तेषा मभिगूर्ति ष्षड्चत्वारिꣳशत्। 46। अश्मन् हविष्मान्।)

## ऽ᠊ऽ ऽ᠊ऽचतुर्थकाण्डे सप्तमꣳ प्रपाठकः

### आ।का।5 अग्निचयन मन्त्राः 10 (चतुर्दशानुवाकाः 14)

❀卐अग्नाविष्णू सजोषसेमा वर्धन्तु वा ङ्गिरः। द्युम्नै र्वाजेभि रा गतम्।।

卐 वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानः।। 1।। ❀ च मे व्यानश्च मेऽसुश्च मे चित्तञ्च म आधीतञ्च मे वाक्क मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलञ्च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे।। 2।। (अपान स्तनूश्च मेष्टादश च। 1।)

❀卐ज्यैष्ठ्यञ्च म आधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धञ्च मे वृद्धिश्च मे सत्यञ्च मे श्रद्धा च मे जगच्च।। 3।। ❀ मे धनञ्च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे

सुकृतञ्च मे वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च मे सुपथञ्च म ऋद्धञ्च म ऋद्धिश्च मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे।। 4।। (जगच्चर्द्धि श्चतुर्दश च। 2।)

ॐ❀卐शञ्च मे मयश्च मे प्रियञ्च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रञ्च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणञ्च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च।। 5।।❀ मे महश्च मे सँविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च म ऋतञ्च मेऽमृतञ्च मेऽयक्ष्मञ्च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मेऽनमित्रञ्च मेऽभयञ्च मे सुगञ्च मे शयनञ्च मे सूषा च मे सुदिनञ्च मे।। 6।। (विश्वञ्च शयन मष्टौ च। 3।)

ॐ❀卐ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च म औद्भिद्यञ्च मे रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु च।। 7।।❀ मे प्रभु च मे बहु च मे भूयश्च मे पूर्णञ्च मे पूर्णतरञ्च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नञ्च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियङ्गवश्च मेऽणवश्चमे श्यामाकाश्च मे नीवाराश्च मे।। 8।। (विभु च मसुरा श्चतुर्दश च। 4।)

ॐ❀卐अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे सीसञ्च मे त्रपुश्च मे श्यामञ्च मे लोहञ्च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यञ्च।। 9।।❀ मेऽकृष्टपच्यञ्च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्ताँ वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे।। 10।। (कृष्टपच्य ञ्चाष्टाचत्वारिꣳशच्च। 5।)

ॐ❀卐अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च।। 11।।❀ म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षञ्च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे।। 12।। (त्वष्टा च द्यौश्च म एकविꣳशतिश्च। 6।)

ॐ❀卐अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च

मे वैश्वानरश्च म ऋतुग्रहाश्च।। 13।।❀ मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे।। 14।। (ऋतुग्रहाश्च चतुस्त्रि॑ँशच्च। 7।)

❀卐इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रञ्च मे हविर्धानञ्च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे।। 15।। (गृहाश्च षोडश च। 8।)

❀卐अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्करी रङ्गुलयो दिशश्च मे यज्ञेन कल्पन्ता मृक्क मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतञ्च मेऽहोरात्रयो र्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम्।। 16।। (दीक्षाऽष्टादश च। 9।)

❀卐गर्भाश्च मे वथ्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाड्च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवथ्सश्च मे त्रिवथ्सा च मे तुर्यवाड्च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च।। 17।।❀ मे वेहच्च मेऽनड्वान्च मे धेनुश्च म आयु र्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पता मपानो यज्ञेन कल्पताँ व्यानो यज्ञेन कल्पता ञ्चक्षु र्यज्ञेन कल्पता॑ँ श्रोत्रँ यज्ञेन कल्पतां मनो यज्ञेन कल्पताँ वाग्यज्ञेन कल्पता मात्मा यज्ञेन कल्पताँ यज्ञो यज्ञेन कल्पताम्।। 18।। (ऋषभश्च चत्वारि॑ँशच्च। 18।)

❀卐एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकवि॑ँशतिश्च मे त्रयोवि॑ँशतिश्च मे पञ्चवि॑ँशतिश्च मे सप्तवि॑ँशतिश्च मे नववि॑ँशतिश्च म एकत्रि॑ँशच्च मे त्रयस्त्रि॑ँशच्च।। 19।।❀ मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे वि॑ँशतिश्च मे चतुर्वि॑ँशतिश्च मेऽष्टावि॑ँशतिश्च मे द्वात्रि॑ँशच्च मे षट्त्रि॑ँशच्च मे चत्वारि॑ँशच्च मे चतुश्चत्वारि॑ँशच्च मेऽष्टाचत्वारि॑ँशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्च श्चान्त्यायन श्चान्त्यश्च भौवनश्च भुवन श्चाधिपतिश्च।। 20।। (त्रयस्त्रि॑ँशच्च व्यश्नियश्च एकादश च। 11।)

❀卐वाजो न स्सप्त प्रदिश श्चतस्रो वा परावतः। वाजो नो विश्वै र्देवै र्धनसाता विहावतु।।

卐 विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नय स्समिद्धाः। विश्वे नो देवा अवसाऽऽगमन्तु विश्व मस्तु द्रविणँ वाजो अस्मे।।

卐 वाजस्य प्रसव न्देवा रथै र्याता हिरण्ययैः। अग्नि रिन्द्रो बृहस्पति र्मरुत स्सोमपीतये।।

卐 वाजेवाजेऽवत वाजिनो नो धनेषु।। 21।। ❀ विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्व न्तृप्ता यात पथिभि र्देवयानैः।।

卐 वाजः पुरस्ता दुत मध्यतो नो वाजो देवाꣳ ऋतुभिः कल्पयाति। वाजस्य हि प्रसवो नन्नमीति विश्वा आशा वाजपति र्भवेयम्।।

卐 पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाम्। पयस्वतीः प्रदिश स्सन्तु मह्यम्।।

卐 सं मा सृजामि पयसा घृतेन सं मा सृजाम्यपः।। 22।। ❀ ओषधीभिः। सोऽहँ वाजꣳ सनेय मग्ने।।

卐 नक्तोषासा समनसा विरूपे धापयेते शिशु मेकꣳ समीची। द्यावा क्षामा रुक्मो अन्त र्वि भाति देवा अग्नि न्धारय न्द्रविणोदाः।।

卐 समुद्रोऽसि नभस्वा नार्द्रदानु श्शम्भू र्मयोभू रभि मा वाहि स्वाहा 卐 मारुतोऽसि मरुताङ्गण श्शम्भू र्मयोभू रभि मा वाहि स्वाहा 卐ऽवस्युरसि दुवस्वा ञ्छम्भू र्मयोभू रभि मा वाहि स्वाहा।।। 23।। (धनेष्वपो दुवस्वा ञ्छम्भू र्मयोभू रभि मा द्वे च। 12।)

❀卐अग्निँ युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णँ वयसा बृहन्तम्। तेन वयं पतेम ब्रध्नस्य विष्टपꣳ सुवो रुहाणा अधि नाक उत्तमे।।

卐 इमौ ते पक्षावजरौ पतत्रिणो याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने। ताभ्यां पतेम सुकृतामु लोकँ यत्रर्षयः प्रथमजा ये पुराणाः।।

卐 चिदसि समुद्रयोनि रिन्दु र्दक्ष श्श्येन ऋतावा। हिरण्यपक्ष श्शकुनो भुरण्यु र्महा न्थ्सधस्थे ध्रुवः।। 24।। ❀ आ निषत्तः।।

卐 नमस्ते अस्तु मा मा हिꣳसी र्विश्वस्य मूर्ध न्नधि तिष्ठसि श्रितः। समुद्रे ते हृदय मन्त रायु र्द्यावापृथिवी भुवनेष्वर्पिते।।

卐 उद्रो दत्तोदधिं भिन्त दिवः पर्जन्या दन्तरिक्षा त्पृथिव्या स्ततो नो वृष्ट्याऽवत। दिवो मूर्धाऽसि पृथिव्या नाभि रूर्गपा मोषधीनाम्। विश्वाऽऽयु श्शर्म सप्रथा नमस्पथे।।

卐 येनर्षय स्तपसा सत्रम्।। 25।। ❀ आसतेन्धाना अग्नि॰ सुव राभरन्तः। तस्मि न्नह न्नि दधे नाके अग्नि मेतँ यमाहु र्मनव स्स्तीर्णबर्हिषम्।।

卐 तं पत्नीभि रनु गच्छेम देवाः पुत्रै र्भ्रातृभि रुत वा हिरण्यैः। नाक ङ्गृह्णाना स्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः।।

卐 आ वाचो मध्य मरुह द्भुरण्यु रय मग्नि स्सत्पति श्चेकितानः। पृष्ठे पृथिव्या निहितो दविद्युत दधस्पद ङ्कृणुते।। 26।। ❀ ये पृतन्यवः।।

卐 अय मग्नि र्वीरतमो वयोधा स्सहस्रियो दीप्यता मप्रयुच्छन्न्। विभ्राजमान स्सरिरस्य मध्य उप प्रयात दिव्यानि धाम।।

卐 सं प्र च्यवध्व मनु सं प्र यातान्ने पथो देवयाना न्कृणुध्वम्। अस्मि'2'न्थ्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत।।

卐 येना सहस्रँ वहसि येनाग्ने सर्ववेदसम्। तेनेमँ यज्ञ न्नो वह देवयानो यः।। 27।। ❀ उत्तमः।।

卐 उद्बुध्यस्वाग्ने प्रति जागृह्येन मिष्टापूर्ते स॰ सृजेथा मयञ्च। पुनः कृण्वङ्स्त्वा पितरँ युवान मन्वाता॰सी त्त्वयि तन्तु मेतम्।।

卐 अयन्ते योनिर् ऋत्वियो यतो जातो अरोचथाः। तञ्जान न्नग्न आ रोहाथा नो वर्धया रयिम्।। 28।।

(ध्रुव स्सत्र ङ्कृणुते यस्सप्तत्रि॰शच्च। 13।)

❀卐ममाग्ने वर्चो विहवेष्वस्तु वय न्त्वेन्धाना स्तनुवं पुषेम। मह्य न्नमन्तां प्रदिश श्चतस्र स्त्वयाऽध्यक्षेण पृतना जयेम।।

卐 मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णु रग्निः। ममान्तरिक्ष मुरु गोप मस्तु मह्यँ वातः पवता ङ्कामे अस्मिन्न्।।

卐 मयि देवा द्रविण मा यजन्तां मय्याशी रस्तु मयि देवहूतिः। दैव्या होतारा वनिषन्त।। 29।। ❀ पूर्वेऽरिष्टा स्स्याम तनुवा सुवीराः।।

卐 मह्यँ यजन्तु मम यानि हव्याऽऽकूति स्सत्या मनसो मे अस्तु। एनो मा नि गा ङ्कतम च्चनाहँ विश्वे देवासो अधि वोचता मे।।

卐 देवी ष्षडुर्वी रुरुणः कृणोत विश्वे देवास इह वीरयध्वम्। मा हास्महि प्रजया मा तनूभि र्मा रधाम द्विषते सोम राजन्न्।।

卐 अग्निं मन्युं प्रतिनुद न्पुरस्तात्।। 30।। ❀ अदब्धो गोपाः परि पाहि नस्त्वम्। प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषा ञ्चित्तं प्रबुधा वि नेशत्।।

卐 धाता धातॄणां भुवनस्य यस्पति र्देवꣳ सवितार मभिमातिषाहम्। इमँ यज्ञ मश्विनोभा बृहस्पति र्देवाः पान्तु यजमान न्न्यर्थात्।।

卐 उरुव्यचा नो महिष श्शर्म यꣳस दस्मिन् हवे पुरुहूतः पुरुक्षु। स नः प्रजायै हर्यश्व मृडयेन्द्र मा।। 31।। ❀ नो रीरिषो मा परा दाः।।

卐 ये न स्सपत्ना अप ते भवन्त्विन्द्राग्निभ्या मव बाधामहे तान्। वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रञ्चेत्तार मधिराज मक्रन्न्।।

卐 अर्वाञ्च मिन्द्र ममुतो हवामहे यो गोजि द्धनजि दश्वजिद्यः। इम न्नो यज्ञँ विहवे जुषस्वास्य कुर्मो हरिवो मेदिन न्त्वा।। 32।। (वनिषन्त पुरस्तान्मा त्रिचत्वारिꣳशच्च। 14।)

**वै।का।13 अश्वमेध मन्त्राः 10 (एकोऽनुवाकः 1)**

❀卐अग्ने मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहव स्समिन्धते। विश्वस्याँ विशि प्रवि.विशिवाꣳस मीमहे स नो मुञ्चत्वꣳहसः।।

卐 यस्येदं प्राण न्निमिष द्यदेजति यस्य जात ञ्जनमानञ्च केवलम्। स्तौम्यग्नि न्नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः।।

卐 इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्न स्स्तोमा उप मा मुपाऽऽगुः। यो दाशुष स्सुकृतो हव मुप गन्ता।। 33।। ❀ स नो मुञ्चत्वꣳहसः।।

卐 यस्सङ्ग्राम न्नयति सँ वशी युधे यः पुष्टानि सꣳसृजति त्रयाणि। स्तौमीन्द्र न्नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः।।

卐 मन्वे वां मित्रावरुणा तस्य वित्तꣳ सत्यौजसा दृꣳहणा यन्नुदेथे। या राजानꣳ सरथँ याथ उग्रा ता नो मुञ्चत मागसः।।

卐 यो वाꣳ रथ ऋजुरश्मि स्सत्यधर्मा मिथु श्चरन्त मुपयाति दूषयन्न्। स्तौमि।। 34।। ❀ मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चत मागसः।।

卐 वायो स्सवितु र्विदथानि मन्महे यावात्मन्व द्बिभृतो यौ च रक्षतः। यौ विश्वस्य परिभू बभूवतु स्तौ नो मुञ्चत मागसः।।

卐 उप श्रेष्ठा न आशिषो देवयो र्धर्मे अस्थिरन्न्। स्तौमि वायुꣳ सवितार न्नाथितो जोहवीमि तौ नो मुञ्चत मागसः।।

卐 रथीतमौ रथीना मह्व ऊतये शुभ ङ्गमिष्ठौ सुयमेभि रश्वैः। ययोः।। 35।।❀ वान्देवौ देवेष्वनिशित मोज स्तौ नो मुञ्चत मागसः।।

卐 यदयातँ वहतुꣳ सूर्याया स्त्रिचक्रेण सꣳसद मिच्छमानौ। स्तौमि देवा वश्विनौ नाथितो जोहवीमि तौ नो मुञ्चत मागसः।।

卐 मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमाँ वाचँ विश्वा मवन्तु विश्वे। आशून् हुवे सुयमा नूतये ते नो मुञ्चन्त्वेनसः।।

卐 तिग्म मायुधँ वीडितꣳ सहस्व द्दिव्यꣳ शर्धः।। 36।।❀ पृतनासु जिष्णु। स्तौमि देवा न्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः।।

卐 देवानां मन्वे अधि नो ब्रुवन्तु प्रेमाँ वाचँ विश्वा मवन्तु विश्वे। आशून् हुवे सुयमा नूतये ते नो मुञ्चन्त्वेनसः।।

卐 यदिदं माऽभिशोचति पौरुषेयेण दैव्येन। स्तौमि विश्वान्देवा न्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः।।

卐 अनु नोऽद्यानुमति[109]❀ 卐रनु।। 37।।❀ इदनुमते त्वँ[110]❀ 卐वैश्वानरो न ऊत्या[111]❀ 卐पृष्टो दिवि[112]❀।।

卐 ये अप्रथेता ममितेभि रोजोभि र्ये प्रतिष्ठे अभवताँ वसूनाम्। स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चत मꣳहसः।।

卐 उर्वी रोदसी वरिवꣳ कृणोत ङ्क्षेत्रस्य पत्नी अधि नो ब्रूयातम्। स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चत मꣳहसः।।

卐 यत्ते वयं पुरुषत्रा यविष्ठाऽविद्वाꣳस श्चकृमा कच्चन।। 38।।❀ आगः। कृधी स्वस्माꣳ अदिते रनागा व्येनाꣳसि शिश्रथो विष्वगग्ने।।

卐 यथा ह तद्वसवो गौर्यं ञ्चित्पदि षिता ममुञ्चता यजत्राः। एवा त्व मस्म त्प्र मुञ्चा व्यꣳहꣳ प्रातार्यग्ने प्रतरान्न आयुः।। 39।। (गन्ता दूषयन्‘2’थ्स्तौमि ययो श्शर्धोऽनुमति रनु चन चतुस्त्रिꣳशच्च। 15।)

109

110

111

112

(अग्ने मन्वे यस्येद मिन्द्रस्य यस्सङ्ग्राम९ स नो मुञ्चत्व९हसः। मन्वे वा न्ता नो मुञ्चत मागसः। यो वाँ वायो रुप रथीतमौ यदयात मश्विनौ तौ नो मुञ्चत मागसः। मरुता न्तिग्मं मरुतो देवानाँ यदिदँ विश्वा न्ते नो मुञ्चन्त्वेनसः। अनु न उर्वी द्यावापृथिवी ते नो मुञ्चत म९हसो यत्ते।। चतुर९हस ष्षडागस श्चतुरेनसो द्विर९हसः।)

(अग्नाविष्णू ज्यैष्ठ्य९ शञ्चोर्क्राश्मा चाग्नि श्चा९शुश्चेध्मश्चाग्निश्च गर्भा श्चैका च वाजो नो अग्निँ युनज्मि ममाग्ने अग्ने मन्वे पञ्चदश। 15। अग्नाविष्णू अग्निश्च वाजो नो अदब्धो गोपा नवत्रि९शत्। 39। अग्नाविष्णू प्रतरान्न आयुः।)

## ꣸ पञ्चमकाण्डम्

## पञ्चमकाण्डे प्रथम४ प्रपाठकः

### आ।का। 5 अग्नि चयन ब्राह्मणम् – 1 (दशानुवाका: 10)

❀ सावित्राणि जुहोति प्रसूत्यै, चतुर्गृहीतेन जुहोति- चतुष्पाद४ पशव४- पशूनेवाव रुन्धे, चतस्रो दिशो - दिक्ष्वेव प्रति तिष्ठति, छन्दा९सि देवेभ्योऽपाक्राम-न्न वोऽभागानि हव्यँ वक्ष्याम इति, तेभ्य एत च्चतुर्गृहीत मधारय- न्पुरोऽनुवाक्यायै- याज्यायै- देवतायै- वषट्काराय, यच्चतुर्गृहीत.ञ्जुहोति - छन्दा९स्येव तत्प्रीणाति - तान्यस्य प्रीतानि देवेभ्यो हव्यँ वहन्ति, यङ्कामयेत।। 1।। ❀ पापीयान्थ्स्या- दित्येकैक न्तस्य जुहुया- दाहुतीभि रेवैन मप गृह्णाति- पापीयान्भवति, यङ्कामयेत वसीया.न्थ्स्यादिति - सर्वाणि तस्यानुद्रुत्य जुहुया- दाहुत्यैवैन मभि क्रमयति- वसीया न्भव,त्यथो यज्ञस्यैवैषाऽभिक्रान्ति- रेति वा एष यज्ञमुखा.दृध्या- योऽग्ने र्देवताया ए,त्यष्टा.वेतानि सावित्राणि भव-न्त्यष्टाऽक्षरा गायत्री - गायत्रः।। 2।। ❀ अग्नि- स्तेनैव यज्ञमुखा दृध्या- अग्ने र्देवतायै नै,त्यष्टौ सावित्राणि भव-न्त्याहुति र्नवमी - त्रिवृतमेव यज्ञमुखे वि यातयति, यदि कामयेत छन्दा९सि यज्ञयशसे.नार्पयेय- मित्यृच मन्तमा.ङ्कुर्या- च्छन्दा९स्येव यज्ञयशसे.नार्पयति, यदि कामयेत यजमानँ यज्ञयशसेनार्पयेयमिति - यजुरन्तम.ङ्कुर्या- द्यजमानमेव यज्ञयशसेनार्पय,त्यृचा स्तोम९ समर्धयेति।। 3।। ❀ आह- समृध्यै, चतुर्भि रभ्रि मा दत्ते - चत्वारि छन्दा९सि - छन्दोभिरेव, देवस्य त्वा सवितु४ प्रसव इत्याह - प्रसूत्यै, अग्नि र्देवेभ्यो निलायत - स वेणुं प्राविश-थ्स एतामूति मनु समचर- द्वेणो स्सुषिर९, सुषिराऽभ्रि र्भवति - सयोनित्वाय, स यत्रायत्रावस- त्तत्कृष्ण मभव,त्कल्माषी भवति - रूपसमृध्यै, उभयत४क्ष्णू र्भव-तीतश्चामुत श्चार्कस्यावरुध्यै, व्याममात्री भव-त्येतावद्वै पुरुषे वीर्यँ- वीर्यसंमिताऽपरिमिता भव-

त्यपरिमित स्यावरुद्ध्यै, यो वनस्पतीनां फलग्रहि- स्स एषाँ वीर्यावा.न्फलग्रहि वैंणु,वैंणवी भवति - वीर्यस्यावरुद्ध्यै।। 4।। (कामयेत गायत्रोऽधर्येति च सप्तविꣳशतिश्च। 1।)

ﷺ❀ व्यृद्धँ वा एतद्यज्ञस्य - यदयजुष्केण क्रियत, इमा मगृभ्णन्रशना मृतस्ये त्यश्वाभिधानी मा दत्ते- यजुष्कृत्यै- यज्ञस्य समृद्ध्यै, प्रतूर्तँ वाजिन्ना द्रवेत्यश्व मभि दधाति - रूपमेवास्यैत न्महिमानँ व्याचष्टे, युञ्जाथाꣳ रासभँ युवमिति गर्दभ मसत्येव गर्दभं प्रतिष्ठापयति - तस्मादश्वा.द्गर्दभोऽसत्तरो, योगेयोगे तवस्तरमित्याह।। 5।।❀ योगेयोगे एवैनँ युङ्क्ते, वाजेवाजे हवामह इत्याहा-ऽन्नँ वै वाजोऽन्नमेवाव रुन्धे, सखाय इन्द्र मूतय इत्याहेन्द्रियमेवाव रुन्धे,ऽग्नि र्देवेभ्यो निलायत - तं प्रजापति रन्वविन्द- त्प्राजापत्योऽश्वो-ऽश्वेन सं भर-त्यनुवित्त्यै, पापवस्यसँ वा एतत्क्रियते - यच्छ्रेयसा च पापीयसा च समान.ङ्कर्म कुर्वन्ति - पापीयान्।। 6।।❀ ह्यश्वाद्गर्दभोऽश्वं पूर्वं न्नयन्ति - पापवस्यसस्य व्यावृत्त्यै, तस्माच्छ्रेयाꣳसं पापीया न्पश्चा.दन्वेति, बहु वै भवतो भ्रातृव्यो भव,तीव खलु वा एष- योऽग्नि श्चिनुते, वज्र्यश्वः प्रतूर्वं न्नेह्यवक्राम न्नशस्तीरित्याह - वज्रेणैव पाप्मानं भ्रातृव्य मव क्रामति, रुद्रस्य गाणपत्यादित्याह - रौद्रा वै पशवो - रुद्रादेव।। 7।।❀ पशू न्निर्याच्याऽऽत्मने कर्म कुरुते, पूष्णा सयुजा सहेत्याह - पूषा वा अध्वनाꣳ सन्नेता समष्ट्यै, पुरीषाऽऽयतनो वा एष- यदग्नि-रङ्गिरसो वा एतमग्रे देवतानाꣳ समभर,न्पृथिव्या स्सधस्था दग्निं पुरीष्य मङ्गिरस्व दच्छेहीत्याह - साऽऽयतन मेवैन न्देवताभि स्सं भर,त्यग्निं पुरीष्य मङ्गिरस्व दच्छेम इत्याह - येन।। 8।।❀ सङ्गच्छते - वाज मेवास्य वृङ्क्ते, प्रजापतये प्रतिप्रोच्याग्नि स्सम्भृत्य इत्याहु,रियँ वै प्रजापति- स्तस्या एतच्छ्रोत्रँ- यद्वल्मीको,ऽग्निं पुरीष्य मङ्गिरस्व द्भरिष्याम इति वल्मीकवपा मुप तिष्ठते - साक्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ सं भर,त्यग्निं पुरीष्य मङ्गिरस्व द्भराम इत्याह - येन सङ्गच्छते - वाज मेवास्य वृङ्क्ते,ऽन्वग्नि रुषसा मग्रम्।। 9।।❀ अख्यदित्याहा-ऽनुख्यात्या, आगत्य वाज्यध्वन आक्रम्य वाजि न्पृथिवी मित्या-हेच्छत्येवैनं पूर्वया - विन्द.त्युत्तरया, द्वाभ्या माक्रमयति प्रतिष्ठित्या अनुरूपाभ्या- न्तस्मादनुरूपाः पशवः प्र जायन्ते, द्यौस्ते पृष्ठं पृथिवी सधस्थ मित्या-हैभ्यो वा एतँ लोकेभ्यः प्रजापति स्समैरय-द्रूप मेवास्यैत न्महिमानँ व्याचष्टे, वज्री वा एष- यदश्वो, दद्भि रन्यतोदद्भ्यो भूया- न्लोमभि रुभयादद्भ्यो, यन्द्विष्या- त्तमधस्पद.न्ध्याये,द्वज्रेणैवैनꣴ स्तृणुते।। 10।। (आह पापीया न्द्रुद्रादेव येनाग्रँ वज्री वै सप्तदश च। 2।)

⚱❀ उत्क्रामोदक्रमीदिति - द्वाभ्या मुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्या- न्तस्मा दनुरूपाः पशवः प्र जायन्ते,ऽप उप सृजति, यत्र वा आप उपगच्छन्ति - तदोषधयः प्रति तिष्ठ,न्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रति तिष्ठन्ति - पशून् यज्ञो - यज्ञँ यजमानो - यजमानं प्रजा- स्तस्मा दप उप सृजति प्रतिष्ठित्यै, यदध्वर्यु रनग्ना.वाहुति.ञ्जुहुया- दन्धोऽध्वर्युः।। 11।।❀ स्या-द्रक्षाꣳसि यज्ञꣳ हन्युर्, हिरण्य मुपास्य जुहो-त्यग्निवत्येव जुहोति- नान्धोऽध्वर्यु र्भवति - न यज्ञꣳ रक्षाꣳसि घ्नन्ति, जिघर्म्यग्निं मनसा घृतेनेत्याह - मनसा हि पुरुषो यज्ञ मभिगच्छति, प्रतिक्ष्यन्तं भुवनानि विश्वेत्याह - सर्वꣳ ह्येष प्रत्यङ्ङेति, पृथु.न्तिरश्चा वयसा बृहन्त मित्याहाल्पो ह्येष जातो महान्।। 12।।❀ भवति, व्यचिष्ठ मन्नꣳ रभसँ विदान मित्याहान्न मेवास्मै स्वदयति, सर्वमस्मै स्वदते - य एवँ वेदा,ऽऽत्वा जिघर्मि वचसा घृतेनेत्याह - तस्माद्यत्पुरुषो मनसाऽभिगच्छति - तद्वाचा वद,त्यरक्षसेत्याह - रक्षसा मपहत्यै, मर्यश्री स्स्पृहयद्वर्णो अग्नि रित्याहा-ऽपचिति मेवास्मिन्दधा, त्यपचितिमा.न्भवति - य एवम्।। 13।।❀ वेद, मनसा त्वैता माप्तु मर्हति - यामध्वर्यु रनग्ना.वाहुति.ञ्जुहोति, मनस्वतीभ्या.ञ्जुहो-त्याहुत्यो रात्यै, द्वाभ्यां प्रतिष्ठित्यै, यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳस,न्त्येतर्हि खलु वा एतद्यज्ञमुखँ - यर्ह्येन दाहुति.रश्नुते, परि लिखति - रक्षसा मपहत्यै, तिसृभिः परि लिखति - त्रिवृद्वा अग्नि - र्यावा.नेवाग्नि- स्तस्माद्रक्षाꣳस्यप हन्ति,।। 14।।❀ गायत्रिया परि लिखति - तेजो वै गायत्री - तेजसैवैनं परि गृह्णाति, त्रिष्टुभा परि लिख-तीन्द्रियँ वै त्रिष्टु.गिन्द्रियेणैवैनं परि गृह्णा,त्यनुष्टुभा परि लिख-त्यनुष्टुफ्सर्वाणि छन्दाꣳसि - परिभूः पर्याप्त्यै, मध्यतोऽनुष्टुभा - वाग्वा अनुष्टु-प्तस्मा.न्मध्यतो वाचा वदामो, गायत्रिया प्रथमया परि लिख-त्यथानुष्टुभा-ऽथ त्रिष्टुभा, तेजो वै गायत्री - यज्ञोऽनुष्टु-गिन्द्रिय न्त्रिष्टु-प्तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परि गृह्णाति।। 15।। (अन्धोऽध्वर्यु र्महान्भवति य एवꣳ हन्ति त्रिष्टुभा तेजो वै गायत्री त्रयोदश च। 3।)

⚱❀ देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या, अथो धूम मेवैतेन जनयति, ज्योतिष्मन्त न्त्वाऽग्ने सुप्रतीकमित्याह - ज्योतिरेवैतेन जनयति, सोऽग्निर्जातः प्रजा श्शुचाऽऽर्पय-त्तन्देवा अर्धर्चेनाशमय, न्छिवं प्रजाभ्योऽहिꣳसन्त मित्याह - प्रजाभ्य एवैनꣳ शमयति, द्वाभ्या.ङ्खनति - प्रतिष्ठित्या, अपां पृष्ठमसीति पुष्करपर्ण मा।। 16।।❀ हर,त्यपाँ वा एतत्पृष्ठँ- यत्पुष्करपर्णꣳ, रूपेणैवैन दाहरति- पुष्करपर्णेन सं भरति - योनिर्वा अग्नेः पुष्करपर्णꣳ- सयोनि मेवाग्निꣳ सं भरति, कृष्णाजिनेन सं भरति - यज्ञो वै कृष्णाजिनँ - यज्ञेनैव यज्ञꣳ सं भरति, यद्ग्राम्याणां पशूना.ञ्चर्मणा सम्भरे- द्ग्राम्या

न्पशून्छुचाऽर्पये, त्कृष्णाजिनेन सं भर-त्यारण्यानेव पशून्।। 17।।❀ शुचाऽर्पयति, तस्माथ्समाव त्पशूनां प्रजायमानाना मारण्याः पशवः कनीयाꣳस श्शुचा ह्युता, लोमत स्सं भर- त्यतो ह्यस्य मेध्य,ङ्कृष्णाजिनञ्च पुष्करपर्णञ्च सꣳस्तृणा-तीयँ वै कृष्णाजिन- मसौ पुष्करपर्ण- माभ्यामेवैन मुभयतः परि गृह्णा,त्यग्नि र्देवेभ्यो निलायत - तमथर्वाऽन्वपश्य,दथर्वा त्वा प्रथमो निरमन्थ दग्न इति।। 18।।❀ आह - य एवैन मन्वपश्य- त्तेनैवैनꣳ सं भरति, त्वामग्ने पुष्करादधीत्याह - पुष्करपर्णे ह्येन मुपश्रित मविन्द,त्तमु त्वा दध्यङ्ङृषिरित्याह - दध्यङ् वा आथर्वण स्तेजस्व्यासी- त्तेज एवास्मि न्दधाति, तमु त्वा पाथ्यो वृषेत्याह - पूर्वमेवोदित मुत्तरेणाभि गृणाति,।। 19।।❀ चतसृभि स्सं भरति - चत्वारि छन्दाꣳसि - छन्दोभि रेव, गायत्रीभि र्ब्राह्मणस्य - गायत्रो हि ब्राह्मण,स्त्रिष्टुग्भी राजन्यस्य - त्रैष्टुभो हि राजन्यो, यङ्कामयेत वसीया न्थ्स्या-दित्युभयीभि स्तस्य सं भरे-त्तेजश्चैवास्मा इन्द्रियञ्च समीची दधा,त्यष्टाभि स्संभर-त्यष्टाऽक्षरा गायत्री - गायत्रोऽग्नि- र्यावानेवाग्नि स्तꣳ सं भरति, सीद होतरित्याह - देवता एवास्मै सꣳ सादयति, नि होतेति मनुष्या-न्थ्सꣳ सीदस्वेति वयाꣳसि, जनिष्वा हि जेन्यो अग्रे अह्नामित्याह - देवमनुष्या नेवास्मै सꣳसन्ना न्प्र जनयति।। 20।। (एव पशूनिति गृणाति होतरिति सप्तविꣳशतिश्च। 4।)

❀ क्रूरमिव वा अस्या एतत्करोति - यत्खन,त्यप उप सृज-त्यापो वै शान्ता- श्शान्ताभि रेवास्यै शुचꣳ शमयति, स.न्ते वायु र्मातरिश्वा दधा.त्वित्याह - प्राणो वै वायुः - प्राणेनैवास्यै प्राणꣳ स न्दधाति, सन्ते वायुरित्याह - तस्मा.द्वायुप्रच्युता दिवो वृष्टिरीर्ते, तस्मै च देवि वषडस्तु।। 21।।❀ तुभ्यमित्याह - षड्वा ऋतव - ऋतुष्वेव वृष्टि न्दधाति - तस्माथ्सर्वा नृतून्वर्षति, यद्वषट्कुर्या- द्यातयामाऽस्य वषट्कार.स्स्या,द्यन्न वषट्कुर्या- द्रक्षाꣳसि यज्ञꣳ हन्यु,र्वडित्याह - परोऽक्षमेव वषट्करोति, नास्य यातयामा वषट्कारो भवति - न यज्ञꣳ रक्षाꣳसि घ्नन्ति, सुजातो ज्योतिषा सहेत्यनुष्टुभोप नह्य- त्यनुष्टुप्।। 22।।❀ सर्वाणि छन्दाꣳसि - छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः - प्रिययैवैन न्तनुवा परि दधाति, वेदुको वासो भवति - य एवँ वेद, वारुणो वा अग्नि रुपनद्ध, उदु तिष्ठ स्वध्वरोर्ध्व ऊषुण ऊतय इति सावित्रीभ्या मुत्तिष्ठति - सवितृप्रसूत एवास्योर्ध्वाँ वरुणमेनि मुथ्सृजति, द्वाभ्यां प्रतिष्ठित्यै, स जातो गर्भो असि।। 23।।❀ रोदस्यो रित्याहेमे वै रोदसी~- तयोरेष गर्भो- यदग्नि,स्तस्मादेवमाहा,ऽग्ने चारुर्विभृत ओषधीष्वित्याह - यदा ह्येतँ विभर-न्त्यथ चारुतरो भवति, प्र मातृभ्यो अधि कनिक्रदद्गा इत्या-हौषधयो वा अस्य मातर- स्ताभ्य एवैनं प्र च्यावयति, स्थिरो भव वीड्वङ्ग इति गर्दभ आ

सादयति।। 24।।❀ स न्नह्यत्येवैन मेतया स्थेम्ने, गर्दभेन सं भरति - तस्माद्गर्दभः पशूनां भारभारितमो, गर्दभेन सं भरति - तस्मा द्गर्दभो ऽप्यनालेशेऽत्यन्या न्पशू.न्मेद्य- त्यन्नꣳ ह्येनेनार्कꣳ सम्भरन्ति, गर्दभेन सं भरति - तस्मा.द्गर्दभो द्विरेता स्सन्कनिष्ठं पशूनां प्र जायते,ऽग्निर्ह्यस्य योनि न्निर्दहति - प्रजासु वा एष एतर्ह्यारूढः।। 25।।❀ स ईश्वरः प्रजा श्शुचा प्रदह,श्शिवो भव प्रजाभ्य इत्याह - प्रजाभ्य एवैनꣳ शमयति, मानुषीभ्य स्त्वमङ्गिर इत्याह - मानव्यो हि प्रजा, मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पती नित्या-हैभ्य एवैनँ लोकेभ्य श्शमयति, प्रैतु वाजी कनिक्रद.दित्याह - वाजी ह्येष, नानद द्रासभः पत्वेति।। 26।।❀ आह - रासभ इति ह्येत मृषयोऽवद,न्भरन्नग्निं पुरीष्य मित्याहाग्निꣳ ह्येष भरति, मा पाद्यायुषः पुरेत्याहा-ऽऽयु रेवास्मि न्दधाति - तस्मा द्गर्दभ स्सर्व मायुरेति - तस्माद्गर्दभे पुराऽऽयुषः प्रमीते बिभ्यति, वृषाऽग्निँ वृषणं भरन्नित्याह - वृषा ह्येष - वृषाऽग्नि,रपाङ्गर्भम्।। 27।।❀ समुद्रिय मित्याहापाꣳ ह्येष गर्भो - यदग्नि,रग्न आ याहि वीतय इति वा इमौ लोकौ व्यैता,मग्न आ याहि वीतय इति यदाहा-ऽनयो र्लोकयो र्वीत्यै, प्रच्युतो वा एष आयतना- दगतः प्रतिष्ठाꣳ- स एतर्ह्यध्वर्युञ्च यजमानञ्च ध्याय,त्यृतꣳ सत्य मित्याहेयँ वा ऋत-मसौ।। 28।।❀ सत्य- मनयो रेवैनं प्रतिष्ठापयति, नाऽऽर्ति मार्च्छत्यध्वर्यु र्न यजमानो, वरुणो वा एष यजमान मभ्यैति - यदग्नि,रुपनद्ध ओषधयः प्रति गृह्णीताग्नि मेत मित्याह शान्त्यै,व्यस्यन्विश्वा अमती रराती रित्याह - रक्षसा मपहत्यै, निषीदन्नो अप दुर्मतिꣳ हन दित्याह -प्रतिष्ठित्या, ओषधयः प्रति मोदध्वम्।। 29।।❀ एन मित्याहौषधयो वा अग्ने र्भागधेय-न्ताभि रेवैनꣳ समर्धयति, पुष्पावती स्सुपिप्पला इत्याह - तस्मादोषधयः फल.ङ्गृह्ण,न्त्ययँ वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थ मासद.दित्याह - याभ्य एवैनं प्रच्यावयति - तास्वेवैनं प्रति.ष्ठापयति, द्वाभ्या मुपावहरति प्रतिष्ठित्यै।। 30।। (अस्त्वनुष्टुबसि सादया त्यारूढः पत्वेति गर्भमसौ मोदध्व न्द्विचत्वारिꣳशच्च। 5।)

❀ वारुणो वा अग्नि रुपनद्धो, वि पाजसेति वि स्त्रꣳसयति - सवितृप्रसूत एवास्य विषूचीँ वरुणमेनिँ वि सृज,त्यप उप सृज-त्यापो वै शान्ता- श्शान्ताभि रेवास्य शुचꣳ शमयति, तिसृभि रुप सृजति- त्रिवृद्वा अग्नि- र्यावानेवाग्नि- स्तस्य शुचꣳ शमयति, मित्र स्सꣳसृज्य पृथिवीमित्याह- मित्रो वै शिवो देवाना- न्तेनैव।। 31।।❀ एनꣳ सꣳ सृजति शान्त्यै, यद्ग्राम्याणां पात्राणा ङ्कपालै स्सꣳसृजे-द्ग्राम्याणि पात्राणि शुचाऽर्पये,दर्मकपालै स्सꣳसृज- त्येतानि वा अनुपजीवनीयानि - तान्येव शुचाऽर्पयति, शर्कराभि स्सꣳ सृजति धृत्या- अथो शन्त्वाया,ऽजलोमै स्सꣳसृज-त्येषा वा अग्नेः प्रिया तनू र्यदजा- प्रिययैवैन

ज्योती॑ꣳषि - यन्नक्ष॑त्राणि- तान्येवाप्नो,त्यथो॑~ अनूका॒श मे॒वैतानि॑।। 3।।❀ ज्योती॑ꣳषि कुरुते - सुव॒र्गस्य॑ लो॒कस्या॒नुख्यात्यै॒, य॒थ्सꣳस्पृ॑ष्टा उप॒द॒ध्या- द्वृष्ट्यै॑ लो॒कमपि द॒ध्या-द॒व॒र्षु॒कः॑ प॒र्जन्य॑.स्स्या- द॒सꣳस्पृ॑ष्टा उप॑ दधाति - वृष्ट्या॑ एव लो॒कङ्क॑रोति - व॒र्षु॒कः॑ प॒र्जन्यो॑ भवति, पु॒रस्ता॑ द॒न्याः॑ प्र॒तीची॑ रुप॑ दधाति - प॒श्चाद॒न्याः॑ प्राची,स्तस्मा॑त्प्राचीना॑नि च प्रतीची॑नानि च॒ नक्ष॑त्राण्या॒ वर्त॑न्ते।। 4।।(भ्रातृ॑व्यो लो॒क ए॒वैतान्येक॑चत्वारिꣳशच्च। 1।)

❀ ऋ॒त॒व्या॑ उप॑ दधा-त्यृतू॒नां क्लृप्त्यै॑, द्व॒न्द्व मुप॑ दधाति - तस्मा॑द्द्व॒न्द्व मृ॒तवो॑,ऽधृ॑तेव॒ वा ए॒षा- य॒न्मध्य॑मा चिति,र॒न्तरि॑क्षमिव॒ वा ए॒षा द्व॒न्द्व,म॒न्यासु॒ चिती॒षूप॑ दधाति - च॒तस्रो॒ मध्ये॒ धृत्या॑, अ॒न्त॒श्श्ले॒षणँ॒ वा ए॒ता श्चिती॑नाँ - य॒दृ॒त॒व्या॑, य॒दृ॒त॒व्या॑ उप॒द॒धाति - चिती॑नाँ॒ विधृ॑त्यै, अव॑का म॒नूप॑ दधा-त्ये॒षा वा अ॒ग्ने र्योनि- स्स॒योनि॑म्।। 5।।❀ ए॒वाग्नि॒.श्चि॒नु॒ते, उ॒वाच॑ ह वि॒श्वामि॑त्रो-ऽद॒दि॒थ्स ब्रह्म॑णाऽन्नँ- यस्यै॒ता उ॑पधी॒यान्तै॑- यि॑ उ॒ चैना॑ ए॒वँ वेद॑दिति, सँ॒व॒थ्स॒रो वा ए॒तं प्र॑ति॒ष्ठायै॑ नुद॒ते - यो॑ऽग्निश्चि॒त्वा न प्र॑तितिष्ठ॑ति, पञ्च॒ पूर्वा॑ श्चि॒तयो॑ भव॒-न्त्यथ॑ ष॒ष्ठी.श्चि॒ति.श्चि॑नु॒ते - षड्वा ऋ॒तव॑ स्सँवथ्स॒र- ऋ॒तुष्वे॒व सँ॑वथ्स॒रे प्रति॑ तिष्ठ,त्ये॒ता वै।। 6।।❀ अधि॑पत्नी॒ र्नामे॒ष्टका॑ - यस्यै॒ता उ॑पधी॒यन्ते॑- ऽधि॑पतिरे॒व स॑मा॒नाना॑नां भवति, य॒न्द्विष्या॑- त्तमु॑पद॒ध द्ध्यायेदे॒ताभ्य॑ ए॒वैन॒ न्दे॒वता॑भ्य॒ आ वृ॑श्चति - ता॒जगार्ति॒ मार्च्छे॑,त्यङ्गि॑रस स्सुव॒र्गँ लो॒कँ यन्तो॑ - या य॒ज्ञस्य॒ निष्कृ॑ति रा॒सी- त्तामृषि॑भ्यः प्र॒त्यौह॑-न्ताद्धिर॑ण्य मभव, द्यद्धिर॑ण्यश॒ल्कैः प्रो॒क्षति॑ - य॒ज्ञस्य॒ निष्कृ॑त्या॒ - अथो॑~ भेष॒ज मे॒वास्मै॑ करोति-।। 7।।❀ अथो॑~ रू॒पेणै॒वैनꣳ॑ सम॑र्धय-त्यथो॑ हिर॑ण्यज्योतिषै॒व सुव॒र्गँ लो॒कमे॑ति, सा॒ह॒स्र॒वता॑ प्रो॒क्षति॑ - सा॒ह॒स्रः प्र॒जाप॑तिः- प्र॒जाप॑ते रा॒प्त्या॑,इ॒मा मे॑ अ॒ग्न॒ इष्ट॑का धे॒नव॑ स्स॒न्त्वित्या॑ह - धे॒नूरे॒वैनाः॑ कु॒रु॒ते - ता॒ ए॑न.ङ्कामदु॒घा॑ अ॒मु॒त्रा॒मु॒ष्मिँ॑ल्लो॒क उप॑ तिष्ठन्ते।। 8।। (स॒योनि॑ मे॒ता वै क॑रो॒त्येका॑न्नचत्वारि॒ꣳशच्च। 2।)

❀ रु॒द्रो वा ए॒ष - यद॒ग्नि, स्स॒ ए॒तर्हि॑ जा॒तो - य॒र्हि॒ स्सर्व॑.श्चि॒त,स्स॒ यथा॑ व॒थ्सो जा॒त स्स्तन॑ं प्रे॒प्स- त्ये॒वँ वा ए॒ष ए॒तर्हि॑ भाग॒धेयं॑ प्रेप्सति, तस्मै॒ यदा॑हुति॒.न्न जु॑हु॒या- द॒ध्व॒र्युञ्च॒ यज॑मानञ्च ध्याये,च्छ॒त॒रु॒द्रीय॑.ञ्जुहोति - भा॒ग॒धेये॑नै॒वैनꣳ॑ शमयति - ना॑ऽर्तिं॒ मार्च्छ॑त्यध्व॒र्यु.र्न यज॑मानो, य॒द्ग्रा॒म्याणां॑ प॒शू॒नाम्।। 9।।❀ पय॑सा जुहु॒या-द्ग्रा॒म्यान्प॒शू॒.न्छु॒चाऽर्प॑ये, द्यदा॑र॒ण्याना॑.मार॒ण्या,न्जर्ति॑लयवा॒ग्वा वा जु॑हु॒या-द्ग॑वीधुकयवा॒ग्वा वा, न ग्रा॒म्या न्प॒शून्॒ हि॑नस्ति॒ - ना॑ऽर॒ण्या,नथो॑~ ख॒ल्वा॑हु॒- र॒ना॒हु॒ति॒र्वै ज॒र्ति॑लाश्च॒ ग॒वीधु॑काश्चे,त्यज॒क्षी॒रेण॑ जु॒हो-त्या॒ग्ने॒यी वा ए॒षा यद॒जा-ऽऽहु॑त्यै॒व जु॑होति, न ग्रा॒म्यान्प॒शून् हि॑नस्ति॒ - ना॑ऽर॒ण्या,नङ्गि॑रस स्सुव॒र्गँ लो॒कँ यन्तः-।। 10।।❀ अ॒जाया॑.ङ्घ॒र्मं प्रासि॑ञ्च,'2'न्थ्सा

शोचन्ती पर्णं परा॑ऽजिहीत - सो(ओ)ऽर्को॑ऽभव- त्तदर्कस्या॑र्कत्व,मर्कपर्णेन जुहोति सयोनित्वा,योदङ्ङ्तिष्ठ ञ्जुहो-त्येषा वै रुद्रस्य दि-ख्स्वायामेव दिशि रुद्र न्निरवदयते, चरमाया मिष्टकाया.ञ्जुहो-त्यन्तत एव रुद्र न्निरवदयते, त्रेधाविभक्त.ञ्जुहोति - त्रय इमे लोका- इमानेव लोका.न्थ्समावद्वीर्या न्करो,तीयत्यग्रे जुहोति।। 11।।❀ अथेय-त्यथेयति, त्रय इमे लोका- एभ्य एवैनँ लोकेभ्य श्शमयति, तिस्र उत्तरा आहुती र्जुहोति - षट्थ्सं पद्यन्ते- षड्वा ऋतव -ऋतुभि रेवैनꣳ शमयति, यदनुपरिक्राम.ञ्जुहुया- दन्तरवचारिणꣳ रुद्र.ङ्कुर्या,दथो~ खल्वाहुः- कस्याँ वाऽह दिशि रुद्रः- कस्याँ वे-त्यनुपरिक्राममेव होतव्य- मपरिवर्गमेवैनꣳ शमयति,।। 12।।❀ एता वै देवता स्सुवर्ग्या- या उत्तमा-स्ता यजमानँ वाचयति - ताभिरेवैनꣳ सुवर्गँ लोक.ङ्गमयति, य.न्द्विष्या- त्तस्य सञ्चरे पशूना न्न्यस्ये,द्यः प्रथमः पशु रभितिष्ठति - स आर्ति मार्च्छति।। 13।। (पशूनाँ यन्तोऽग्रे जुहोत्यपरिवर्ग मेवैनꣳ शमयति त्रिꣳशच्च। 3।)

❀ अश्म न्नूर्जमिति परि.षिञ्चति - मार्जयत्येवैन- मथो तर्पयत्येव, स एन न्तृप्तोऽक्षुध्य न्नशोच न्नमुष्मिन्लोक उप तिष्ठते, तृप्यति प्रजया पशुभि- र्य एवँ वेद, तान्न इष मूर्ज न्धत्त मरुत स्सꣳरराणा इत्या-हान्नँ वा ऊ-र्गन्नं मरुतो-ऽन्नमेवाव रुन्धे,ऽश्मꣳस्ते क्षुदमुन्ते शुक्।। 14।।❀ ऋच्छतु यन्द्विष्म इत्याह - यमेव द्वेष्टि - तमस्य क्षुधा च शुचा चार्पयति, त्रिः परिषिञ्च.न्पर्येति - त्रिवृद्वा अग्नि- र्यावानेवाग्नि- स्तस्य शुचꣳ शमयति, त्रिः पुनः पर्येति - षट्थ्सं पद्यन्ते - षड्वा ऋतव -ऋतुभिरेवास्य शुचꣳ शमय,त्यपाँ वा एतत्पुष्पँ- यद्वेतसो,ऽपाम्।। 15।।❀ शरोऽवका, वेतसशाखया चावकाभिश्च वि कर्ष-त्यापो वै शान्ता- श्शान्ताभि.रेवास्य शुचꣳ शमयति, यो वा अग्नि.ञ्चितं प्रथमः पशु रधिक्राम-तीश्वरो वै तꣳ शुचा प्रदहो, मण्डूकेन वि कर्ष-त्येष वै पशूना मनुपजीवनीयो, न वा एष ग्राम्येषु पशुषु हितो - नाऽऽरण्येषु - तमेव शुचाऽर्पय,त्यष्टाभि र्वि कर्षति-।। 16।।❀ अष्टाऽक्षरा गायत्री- गायत्रोऽग्नि- र्यावानेवाग्नि- स्तस्य शुचꣳ शमयति, पावकवतीभि- रन्नँ वै पावको-ऽन्नेनैवास्य शुचꣳ शमयति, मृत्युर्वा एष- यदग्नि, र्ब्रह्मण एतद्रूपँ- यत्कृष्णाजिन,ङ्कार्ष्णी~ उपानहा.वुप मुञ्चते - ब्रह्मणैव मृत्यो रन्तर्धत्ते-ऽन्त र्मृत्यो.र्धत्ते-ऽन्त रन्नाद्या दित्याहु,रन्या मुपमुञ्चते-ऽन्या न्ना,ऽन्तः।। 17।।❀ एव मृत्यो र्धत्ते-ऽवान्नाद्यꣳ रुन्धे, नमस्ते हरसे शोचिष इत्याह - नमस्कृत्य हि वसीयाꣳस मुपचर,न्त्यन्यन्ते अस्मत्तपन्तु हेतय इत्याह - यमेव द्वेष्टि - तमस्य शुचाऽर्पयति, पावको अस्मभ्यꣳ

शिवो भवेत्याहा-ऽन्नँ वै पावकोऽन्न मेवाव रुन्धे, द्वाभ्या मधि क्रमति प्रतिष्ठित्या- अपस्यवतीभ्या॰ शान्त्यै।। 18।। (शुग्वेतसोऽपा मष्टाभि र्विकर्षति नान्त रेकान्न पञ्चाशच्च। 4।)

❀ नृषदे वडिति व्याघारयति, पङ्क्त्याऽऽहुत्या यज्ञमुखमा रभते,ऽख्ष्णया व्याघारयति - तस्मादख्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै, यद्वषट्कुर्या- द्यातयामाऽस्य वषट्कार स्स्या,द्यन्न वषट्कुर्या- द्रक्षा॰सि यज्ञ॰ हन्यु,र्वडित्याह - परोऽक्षमेव वषट्करोति - नास्य यातयामा वषट्कारो भवति - न यज्ञ॰ रक्षा॰सि घ्नन्ति, हुतादो वा अन्ये देवाः-।। 19।।❀ अहुतादोऽन्ये- तानग्निचि.देवोभया न्प्रीणाति, ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति - हुतादश्चैव देवा.नहुतादश्च यजमानः प्रीणाति - ते यजमानं प्रीणन्ति, दध्नैव हुतादः प्रीणाति - मधुषाऽहुतादो, ग्राम्यँ वा एतदन्नँ यद्द-ध्यारण्यं मधु, यद्दध्ना मधुमिश्रेणावोक्ष- त्युभयस्यावरुद्ध्यै, ग्रमुष्टिनाऽवोक्षति - प्राजापत्यः।। 20।।❀ वै ग्रमुष्टि स्सयोनित्वाय, द्वाभ्यां प्रतिष्ठित्या, अनुपरिचार मवोक्ष-त्यपरिवर्ग मेवैनान्प्रीणाति, वि वा एष प्राणैः प्रजया पशुभिर्ऋध्यते - योऽग्नि.श्चिन्व.न्नधिक्रामति, प्राणदा अपानदा इत्याह - प्राणानेवाऽऽत्मन्धत्ते, वर्चोदा वरिवोदा इत्याह - प्रजा वै वर्चः - पशवो वरिवः - प्रजामेव पशूनात्मन्धत्ते, इन्द्रो वृत्र.मह-न्तँ वृत्रः।। 21।।❀ हत ष्षोडशभि र्भोगै रसिना-थ्स एता मग्नयेऽनीकवत आहुति मपश्य- त्तामजुहो- त्तस्याग्नि रनीकवान्थ्स्वेन भागधेयेन प्रीत-ष्षोडशधा वृत्रस्य भोगा.नप्यदह-द्वैश्वकर्मणेन पाप्मनो निरमुच्यत, यदग्नयेऽनीकवत आहुति.ञ्जुहो-त्यग्नि रेवास्यानीकवान्थ्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति- वैश्वकर्मणेन पाप्मनो निर्मुच्यते, यङ्कामयेत चिरं पाप्मनः।। 22।।❀ निर्मुच्येते-त्येकैक न्तस्य जुहुया-च्चिरमेव पाप्मनो निर्मुच्यते, यङ्कामयेत ताज.क्पाप्मनो निर्मुच्येतेति -सर्वाणि तस्यानुद्रुत्य जुहुया-त्ताजगेव पाप्मनो निर्मुच्यते-ऽथो~ खलु नानैव सूक्ताभ्या.ञ्जुहोति - नानैव सूक्तयो र्वीर्य न्दधा- त्यथो प्रतिष्ठित्यै।। 23।। (देवाः प्राजापत्यो वृत्रश्चिरं पाप्मन श्चत्वारि॰शच्च। 5।)

❀ उदेन मुत्तरा.न्नयेति समिधि आ दधाति, यथा जनँ यतेऽवस.ङ्करोति - तादृगेव त,त्तिस्र आ दधाति - त्रिवृद्वा अग्नि- र्यावानेवाग्नि- स्तस्मै भागधेय.ङ्करो-त्यौदुम्बरी र्भव-न्त्यूर्ग्वा उदुम्बर - ऊर्ज.मेवास्मा अपि दधा,त्युदु त्वा विश्वे देवा इत्याह - प्राणा वै विश्वे देवाः- प्राणैः।। 24।।❀ एवैन मुद्यच्छते,ऽग्ने भरन्तु चित्तिभि.रित्याह - यस्मा एवैन श्चित्तायोद्यच्छते - तेनैवैन॰ समर्धयति, पञ्च दिशो दैवी र्यज्ञमवन्तु देवी.रित्याह - दिशो ह्येषोऽनु प्रच्यवते,ऽपामति न्दुर्मतिं बाधमाना इत्याह - रक्षसा मपहत्यै, रायस्पोषे यज्ञपति माभजन्ती.रित्याह -पशवो वै रायस्पोषः-।। 25।।❀ पशूनेवाव रुन्धे, षड्भिर्हरति -

षड्वा ऋतव -ऋतुभि रेवैनं हरति, द्वे~ परिगृह्यवती~ भवतो- रक्षसा मपहत्यै, सूर्यरश्मिर् हरिकेशः पुरस्तादित्याह प्रसूत्यै, ततः पावका आशिषो नो जुषन्ता.मित्याहा-ऽन्नँ वै पावको-ऽन्नमेवाव रुन्धे, देवासुरा स्सँयत्ता आस-न्ते देवा एत.दप्रतिरथ मपश्य-न्तेन वै तेऽप्रति।। 26।।❀ असुरा नजय-न्तदप्रतिरथ.स्याप्रतिरथत्वँ, यदप्रतिरथ न्द्वितीयो होताऽन्वाहा-ऽप्रत्येव तेन यजमानो भ्रातृव्या न्जय-त्यथो~ अनभिजित मेवाभि जयति, दशर्चं भवति - दशाक्षरा विरा-ड्विराजेमौ लोकौ विधृता-वनयो र्लोकयो र्विधृत्या, अथो ~ दशाक्षरा विरा-डन्नँ विरा-ड्विराज्येवान्नाद्ये प्रति तिष्ठ,त्यसदिव वा अन्तरिक्ष-मन्तरिक्ष मिवाऽऽग्नीध्र,माग्नीध्रे।। 27।।❀ अश्मान न्नि दधाति सत्त्वाय, द्वाभ्यां प्रतिष्ठित्यै, विमान एष दिवो मध्य आस्त इत्याह - व्येवैतया मिमीते, मध्ये दिवो निहितः पृश्नि रश्मेत्याहा-ऽन्नँ वै पृ-श्ञ्यन्नमेवाव रुन्धे, चतसृभि रा.पुच्छादेति - चत्वारि छन्दाꣳसि - छन्दोभि रे,वेन्द्रँ विश्वा अवीवृध.न्नित्याह - वृद्धिमेवोपाऽऽवर्तते, वाजानाꣳ सत्पतिं पतिम्।। 28।।❀ इत्याहा-ऽन्नँ वै वाजो-ऽन्न मेवाव रुन्धे, सुम्नहू र्यज्ञो देवाꣳ आ च वक्षदित्याह - प्रजा वै पशव स्सुम्नं - प्रजामेव पशू.नात्मन्धत्ते, यक्ष.दग्नि र्देवो देवाꣳ आ च वक्षदित्याह स्वगाकृत्यै, वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभी दित्याहा-ऽसौ वा आदित्य उद्यन्नुद्ग्राभ- एष निम्रोच न्निग्राभो, ब्रह्मणैवाऽऽत्मान मुद्गृह्णाति - ब्रह्मणा भ्रातृव्य.न्नि गृह्णाति।। 29।। (प्राणैः पोषोऽप्रत्याग्नीध्रे पतिमेष दश च। 6।)

❀ प्राचीमनु प्रदिशं प्रेहि विद्वा.नित्याह - देवलोक मेवैतयोपाऽऽवर्तते, क्रमध्व.मग्निना नाक.मित्या-हेमा नेवैतया लोकान्क्रमते, पृथिव्या अह मुदन्तरिक्ष माऽरुह मित्या-हेमा नेवैतया लोका.न्थ्समारोहति, सुव.र्यन्तो नापेक्षन्त इत्याह - सुवर्गमेवैतया लोक.मे,त्यग्ने प्रेहि।। 30।।❀ प्रथमो देवयता.मित्या-होभयेष्वेवैतया देवमनुष्येषु चक्षु र्दधाति, पञ्चभि रधि क्रामति - पाङ्क्तो यज्ञो - यावानेव यज्ञ-स्तेन सह सुवर्गँ लोकमेति, नक्तोषासेति पुरोऽनुवाक्या मन्वाह प्रत्या, अग्ने सहस्राक्षेत्याह - साहस्रः प्रजापतिः - प्रजापते.राप्त्यै, तस्मै ते विधेम वाजाय स्वाहेत्याहा-ऽन्नँ वै वाजो-ऽन्नमेवाव।। 31।।❀ रुन्धे, दध्नः पूर्णा मौदुम्बरीꣳ स्वयमातृण्णाया.ञ्जुहो-त्यूर्ग्वै द-ध्यूर्गुदुम्बरो-ऽसौ स्वयमातृण्णा-ऽमुष्या मेवोर्ज न्दधाति, तस्मा.दमुतोऽर्वाची-मूर्ज मुप जीवाम,स्तिसृभि स्सादयति - त्रिवृद्वा अग्नि-र्यावानेवाग्नि- स्तं प्रतिष्ठा.ङ्गमयति, प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरी मा दधा-त्येषा वै सूर्मी कर्णकाव-त्येतया ह स्म।। 32।।❀ वै देवा असुराणाꣳ शततर्हाꣳ स्तृꣳहन्ति, यदेतया समिध मादधाति - वज्र मेवैत.च्छतघ्नीँ यजमानो भ्रातृव्याय प्र हरति स्तृत्या अछम्बट्कारँ, विधेम ते परमे

जन्म.न्नग्ने इति वैकङ्कती मा दधाति - भा एवाव रुन्धे, ता॰ सवितु वरेण्यस्य चित्रामिति शमीमयी॰ शान्त्या , अग्निर्वा ह वा अग्निचित न्दुहे-ऽग्निचिद्वाऽग्नि न्दुहे, ताम्।। 33।।❀ सवितु वरेण्यस्य चित्रामित्या-हैष वा अग्ने दोह- स्तमस्य कण्व एव श्रायसोऽवे-त्तेन ह स्मैन॰ स दुहे, यदेतया समिध मादधा- त्यग्निचिदेव तदग्नि न्दुहे, सप्त ते अग्ने समिध स्सप्त जिह्वा इत्याह - सप्तैवास्य साप्तानि प्रीणाति, पूर्णया जुहोति - पूर्ण इव हि प्रजापतिः - प्रजापतेः।। 34।।❀ आप्त्यै, न्यूनया जुहोति - न्यूनाद्धि प्रजापतिः प्रजा असृजत - प्रजाना॰ सृष्ट्या , अग्नि देवेभ्यो निलायत - स दिशोऽनु प्राविश,ज्जुह्वन्मनसा दिशो ध्याये-द्दिग्भ्य एवैन मव रुन्धे, दध्ना पुरस्ता ज्जुहो-त्याज्येनोपरिष्टा,त्तेज श्चैवास्मा इन्द्रियञ्च समीची~ दधाति, द्वादशकपालो वैश्वानरो भवति - द्वादश मासा स्सँवथ्सर - स्सँवथ्सरोऽग्नि वैश्वानर-स्साक्षात्।। 35।।❀ एव वैश्वानर मव रुन्धे, यत्प्रयाजानूयाजा न्कुर्या- द्विकस्ति स्सा यज्ञस्य, दर्विहोम.ङ्करोति - यज्ञस्य प्रतिष्ठित्यै, राष्ट्रँ वै वैश्वानरो - विण्मरुतो, वैश्वानर॰ हुत्वा मारुता न्जुहोति - राष्ट्र एव विशमनु बध्ना,त्युच्चै वैश्वानरस्याऽऽश्रावय-त्युपा॰शु मारुता.न्जुहोति - तस्माद्राष्ट्रँ विश मति वदति, मारुता भवन्ति - मरुतो वै देवानाँ विशो - देवविशेनैवास्मै मनुष्यविश मव रुन्धे, सप्त भवन्ति - सप्तगणा वै मरुतो - गणश एव विशमव रुन्धे, गणेन गण मनुद्रुत्य जुहोति - विशमेवास्मा अनुवर्त्मान.ङ्करोति।। 36।। (अग्ने प्रेह्यव स्म दुहे ता प्रजापते स्साक्षा न्मनुष्यविश मेकवि॰शतिश्च। 7।)

❀ वसो र्धारा ञ्जुहोति, वसो र्मे धाराऽस-दिति वा एषा हूयते, घृतस्य वा एन.मेषा धारा-ऽमुष्मि न्लोके पिन्वमानोप तिष्ठते, आज्येन जुहोति - तेजो वा आज्य- न्तेजो वसो.र्धारा- तेजसैवास्मै तेजोऽव रुन्धे,ऽथो~ कामा वै वसोर्धारा - कामानेवाव रुन्धे, यङ्कामयेत प्राणानस्यान्नाद्यँ वि।। 37।।❀ छिन्द्यामिति - विग्राह न्तस्य जुहुया- त्प्राणानेवास्यान्नाद्यँ वि च्छिनत्ति, यङ्कामयेत प्राणानस्यान्नाद्य॰ सन्तनुयामिति - सन्तता न्तस्य जुहुया- त्प्राणा नेवास्यान्नाद्य॰ सन्तनोति, द्वादश द्वादशानि जुहोति - द्वादश मासा स्सँवथ्सर- स्सँवथ्सरेणैवास्मा अन्नमव रुन्धे,ऽन्नञ्च मेऽक्षुच्च म इत्या-हैतद्वै।। 38।।❀ अन्नस्य रूप॰- रूपेणैवान्नमव रुन्धे,ऽग्निश्च म आपश्च म इत्या-हैषा वा अन्नस्य योनि- स्सयोन्येवान्न मव रुन्धे,ऽर्धेन्द्राणि जुहोति - देवता एवाव रुन्धे, यथ्सर्वेषा मर्धमिन्द्रः प्रति - तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम, इन्द्र मुत्तरमा-हेन्द्रिय मेवास्मि न्नुपरिष्टा.द्दधाति, यज्ञाऽऽयुधानि जुहोति - यज्ञः।। 39।।❀ वै यज्ञाऽयुधानि - यज्ञमेवाव रुन्धे,ऽथो~ एतद्वै यज्ञस्य रूप॰- रूपेणैव यज्ञमव

रुन्धे,ऽवभृथश्च मे स्वगाकारश्च मे इत्याह स्वगाकृत्यै, अग्निश्च मे घर्मश्च मे इत्या-हैतद्वै ब्रह्मवर्चसस्य रूपꣳ- रूपेणैव ब्रह्मवर्चस मव रुन्धे, ऋक्च मे साम च मे इत्याह-।। 40।। ❀ एतद्वै छन्दसाꣳ रूपꣳ- रूपेणैव छन्दाꣳस्यव रुन्धे, गर्भाश्च मे वथ्साश्च मे इत्या-हैतद्वै पशूनाꣳ रूपꣳ- रूपेणैव पशूनव रुन्धे, कल्पान्जुहो-त्यक्लृप्तस्य क्लृप्त्यै, युग्मदयुजे~ जुहोति- मिथुनत्वा,योत्तरावती~ भवतो-ऽभिक्रान्त्यै, एका च मे तिस्रश्च मे इत्याह - देवछन्दसँ वा एका च तिस्रश्च,।। 41।। ❀ मनुष्यछन्दस.ञ्चतस्र श्चाष्टौ च, देवछन्दसञ्चैव मनुष्यछन्दसञ्चाव रुन्धे, आ त्रयस्त्रिꣳशतो जुहोति - त्रयस्त्रिꣳशद्वै देवता - देवता एवाव रुन्धे, आऽष्टाचत्वारिꣳशतो जुहो-त्यष्टाचत्वारिꣳशदक्षरा जगती- जागताः पशवो - जगत्यैवास्मै पशूनव रुन्धे, वाजश्च प्रसवश्चेति द्वादश.ञ्जुहोति - द्वादश मासा स्सँवथ्सर- स्सँवथ्सर एव प्रति तिष्ठति।। 42।। (वि वै यज्ञ स्साम च म इत्याह च तिस्र श्चैकान्न पञ्चाशच्च। 8।)

❀ अग्नि र्देवेभ्योऽपाक्राम.द्भागधेय मिच्छमान,स्त न्देवा अब्रुव- न्नुप न आ वर्तस्व - हव्य न्नो वहेति, सोऽब्रवीद्वरँ वृणै - मह्यमेव वाजप्रसवीय ञ्जुहवन्निति - तस्मादग्नये वाजप्रसवीय.ञ्जुह्वति, यद्वाजप्रसवीय ञ्जुहो-त्यग्निमेव तद्भागधेयेन समर्धय,त्यथो~ अभिषेक एवास्य स, चतुर्दशभि जुहोति - सप्त ग्राम्या ओषधय- स्सप्त।। 43।। ❀ आरण्या- उभयीषा मवरुद्ध्यै, अन्नस्यान्नस्य जुहो-त्यन्नस्यान्नस्यावरुद्ध्यै, औदुम्बरेण स्रुवेण जुहो-त्यूर्ग्वा उदुम्बर- ऊर्गन्न- मूर्जैवास्मा ऊर्जमन्नमव रुन्धे,ऽग्निर्वै देवाना मभिषिक्तो-ऽग्निचिन्मनुष्याणा- न्तस्मा.दग्निचिद्वर्षति न धावे, दवरुद्धꣳ ह्यस्यान्न-मन्नमिव खलु वै वर्षँ, यद्धावे- दन्नाद्याद्धावे, दुपाऽवर्तेता-ऽन्नाद्य मेवाभि।। 44।। ❀ उपाऽवर्तते, नक्तोषासेति कृष्णायै श्वेतवथ्सायै पयसा जुहो-त्यह्नैवास्मै रात्रिं प्र दापयति - रात्रियाऽह- रहोरात्रे~ एवास्मै प्रत्ते~ काममन्नाद्य न्दुहाते~, 卐 राष्ट्रभृतो जुहोति❀ -- राष्ट्र मेवाव रुन्धे, षड्भि र्जुहोति - षड्वा ऋतव - ऋतुष्वेव प्रति तिष्ठति, भुवनस्य पत इति रथमुखे पञ्चाऽऽहुती र्जुहोति, वज्रो वै रथो - वज्रेणैव दिशः।। 45।। ❀ अभि जय,त्यग्निचितꣳ ह वा अमुष्मिन्लोके वातोऽभि पवते, वातनामानि जुहो-त्यभ्यैवैन ममुष्मिन्लोके वातः पवते, त्रीणि जुहोति - त्रय इमे लोका- एभ्य एव लोकेभ्यो वातमव रुन्धे, समुद्रोऽसि नभस्वा नित्या-हैतद्वै वातस्य रूपꣳ- रूपेणैव वातमव रुन्धे,ऽञ्जलिना जुहोति - न ह्येतेषा मन्यथाऽऽहुति रवकल्पते।। 46।। (ओषधय स्सप्ताभि दिशोऽन्यथा द्वे च। 9।)

❀ सुवर्गाय वै लोकाय देवरथो युज्यते - यत्राऽऽकूताय मनुष्यरथ, एष खलु वै देवरथो - यदग्नि रग्निँ युनज्मि शवसा घृतेनेत्याह- युनक्त्येवैनꣳ, स एनँ युक्त स्सुवर्गँ लोकमभि वहति, यथ्सर्वाभिः पञ्चभि

युंञ्ज्या- द्युक्तोऽस्याग्निः प्रच्युत स्स्या- दप्रतिष्ठिता आहुतय.स्स्यु- रप्रतिष्ठिता स्स्तोमा- अप्रतिष्ठिता.न्युक्थानि, तिसृभिः प्रातस्सवनेऽभि मृशति - त्रिवृत्।। 47।। ❀ वा अग्नि- र्यावानेवाग्नि- स्तँ युनक्ति, यथाऽनसि युक्त आधीयत -एवमेव त,त्प्रत्याहुतय स्तिष्ठन्ति- प्रति स्तोमाः- प्रत्युक्थानि, यज्ञायज्ञियस्य स्तोत्रे~ द्वाभ्यामभि मृश,त्येतावान् वै यज्ञो- यावा.नग्निष्टोमो, भूमा त्वा अस्यात ऊर्ध्वः क्रियते, यावानेव यज्ञ- स्तमन्ततोऽन्वारोहति, द्वाभ्यां प्रतिष्ठित्या, एकयाऽप्रस्तुतं भव-त्यथ।। 48।। ❀ अभि मृश-त्युपैन मुत्तरो यज्ञो नम-त्यथो~ सन्तत्यै, प्र वा एषोऽस्माल्लोका च्च्यवते - योऽग्नि श्चिनुते, न वा एतस्यानिष्टक आहुति.रव कल्पते, याँ वा एषोऽनिष्टक आहुति.ञ्जुहोति- स्रवति वै सा, ताꣳ स्रवन्तीँ यज्ञोऽनु परा भवति- यज्ञँ यजमानो, यत्पुनश्चिति श्चिनुते- आहुतीनां प्रतिष्ठित्यै, प्रत्याहुतय स्तिष्ठन्ति-।। 49।। ❀ न यज्ञः पराभवति - न यजमानो,ऽष्टावुप दधा-त्यष्टाऽक्षरा गायत्री- गायत्रेणैवैन ञ्छन्दसा चिनुते, यदेकादश- त्रैष्टुभेन, यद्वादश- जागतेन, छन्दोभि रेवैन.श्चिनुते, नपात्को वै नामैषोऽग्नि- र्यत्पुनश्चिति, यँ एवँ विद्वा.न्पुनश्चिति.श्चिनुते - आ तृतीयात्पुरुषा दन्नमत्ति, यथा वै पुनराधेय - एवं पुनश्चिति, योऽग्न्याधेयेन न।। 50।। ❀ ऋध्नोति - स पुनराधेय.मा धत्ते, योऽग्नि.श्चित्वा नर्ध्नोति - स पुनश्चिति.श्चिनुते, यत्पुनश्चिति.श्चिनुते ऋद्ध्या, अथो~ खल्वाहु- र्न चेतव्येति- रुद्रो वा एष- यदग्नि-र्यथा व्याघ्रꣳ सुप्तं बोधयति - तादृगेव त,दथो~ खल्वाहु- श्चेतव्येति - यथा वसीयाꣳसं भागधेयेन बोधयति - तादृगेव त,न्मनुरग्नि मचिनुत - तेन नाऽर्ध्नो,थ्स एतां पुनश्चिति मपश्य-त्ता मचिनुत- तया वै स आर्ध्नो,द्यत्पुनश्चिति श्चिनुते- ऋद्ध्यै।। 51।। (त्रिवृदथ तिष्ठन्त्यग्न्याधेयेन नाचिनुत सप्तदश च। 10।)

❀ छन्दश्चित.श्चिन्वीत पशुकामः- पशवो वै छन्दाꣳसि - पशुमानेव भवति, श्येनचित.श्चिन्वीत सुवर्गकाम- श्श्येनो वै वयसां पतिष्ठ- श्श्येन एव भूत्वा सुवर्गँ लोकं पतति, कङ्कचित.श्चिन्वीत - यः कामयेत शीर्षण्वा नमुष्मिन्लोके स्यामिति - शीर्षण्वा नेवामुष्मिन्लोके भव, त्यलजचित.श्चिन्वीत चतुस्सीतं प्रतिष्ठाकाम- श्चतस्रो दिशो- दिक्ष्वेव प्रति तिष्ठति, प्रउगचित.श्चिन्वीत भ्रातृव्यावा-न्प्र।। 52।। ❀ एव भ्रातृव्या न्नुदते, उभयतःप्रउग.श्चिन्वीत- यः कामयेत प्र जाता न्भ्रातृव्या न्नुदेय- प्रति जनिष्यमाणानिति- प्रैव जाता न्भ्रातृव्या न्नुदते- प्रति जनिष्यमाणा,न्रथचक्रचित.श्चिन्वीत भ्रातृव्यवान् - वज्रो वै रथो - वज्रमेव भ्रातृव्येभ्यः प्र हरति, द्रोणचित श्चिन्वीतान्नकामो- द्रोणे वा अन्नं भ्रियते - सयोन्येवान्नमव रुन्धे, समूह्य.श्चिन्वीत पशुकामः - पशुमानेव भवति,।। 53।। ❀ परिचाय्य.श्चिन्वीत ग्रामकामो - ग्राम्येव भवति, श्मशानचित.श्चिन्वीत - यः कामयेत पितृलोक ऋध्नुयामिति - पितृलोक

एवद्नोति, विश्वामित्रजमदग्नी~ वसिष्ठेनास्पर्धेता९ - स एती जमदग्नि र्विहव्या अपश्य-त्ती उपाधत्त - ताभिर्वै स वसिष्ठस्येन्द्रियँ वीर्यमवृङ्क्त, यद्विहव्या उपदधा-तीन्द्रियमेव ताभि र्वीर्यँ यजमानो भ्रातृव्यस्य वृङ्क्ते, होतु र्धिष्णिय उप दधाति - यजमानाऽऽयतनँ वै।। 54।। होता- स्व एवास्मा आयतन इन्द्रियँ वीर्यमव रुन्धे, द्वादशोप दधाति - द्वादशाक्षरा जगती - जागताः पशवो - जगत्यैवास्मै पशूनव रुन्धे,ऽष्टावष्टा.वन्येषु धिष्णियेषूप दधा-त्यष्टाशफाः पशवः- पशूनेवाव रुन्धे, षण्मार्जालीये - षड्वा ऋतव - ऋतवः खलु वै देवाः पितर- ऋतूनेव देवा न्पितृ न्प्रीणाति।। 55।। (प्र भवति यजमानाऽऽयतनँ वा अष्टाचत्वारि९शच्च। 11।)

**वै।का। 13 अश्वमेध ब्राह्मणम् – 6 (एकोऽनुवाकः 1)**

पवस्व वाजसातय इत्यनुष्टु.क्प्रतिपद्भवति, तिस्रोऽनुष्टुभ- श्चतस्रो गायत्रियो, यत्तिस्रोऽनुष्टुभ- स्तस्मादश्व.स्त्रिभि स्तिष्ठ९ स्तिष्ठति, यच्चतस्रो गायत्रिय- स्तस्मात्सर्वा९ श्चतुरः पदः प्रतिदध.त्पलायते, परमा वा एषा छन्दसाँ यदनुष्टु-क्परम श्चतुष्टोम.स्स्तोमानां- परम स्त्रिरात्रो यज्ञानां- परमोऽश्वः पशूनां- परमेणैवैनं परमता.ङ्गमय, त्येकवि९श महर्भवति-।। 56।। यस्मिन्नश्व आलभ्यते, द्वादश मासाः - पञ्चर्तव- स्त्रय इमे लोका- असा.वादित्य एकवि९श- एष प्रजापतिः- प्राजापत्योऽश्व- स्तमेव साक्षा.दृद्नोति, शक्वरयः पृष्ठं भव-न्त्यन्यदन्य च्छन्दो-ऽन्येऽन्ये वा एते पशव आ लभ्यन्त, उतेव ग्राम्या- उतेवाऽऽरण्या, यच्छक्वरयः पृष्ठं भव-न्त्यश्वस्य सर्वत्वाय, पार्थुरश्मं ब्रह्मसामं भवति, रश्मिना वा अश्वः।। 57।। यत, ईश्वरो वा अश्वोऽयतोऽप्रतिष्ठितः परां परावत.ङ्गन्तो, र्यत्पार्थुरश्मं ब्रह्मसामं भव-त्यश्वस्य यत्यै धृत्यै, सङ्कृ.त्यच्छावाकसामं भव-त्युत्सन्नयज्ञो वा एष यदश्वमेधः- कस्तद्वेदेत्याहु, र्यदि सर्वो वा क्रियते - न वा सर्व इति, यत्सङ्कृ.त्यच्छावाकसामं भव-त्यश्वस्य सर्वत्वाय- पर्याप्त्या- अनन्तरायाय, सर्वस्तोमोऽतिरात्र उत्तम महर्भवति- सर्वस्याऽऽप्त्यै - सर्वस्य जित्यै - सर्वमेव तेनाऽऽप्नोति - सर्व.ञ्जयति।। 58।। (अह र्भवति वा अश्वोऽह र्भवति दश च। 12।)

(देवासुरा स्तेनर्तव्या रुद्रोऽश्म न्नृषदे वडुदेनं प्राचीमिति वसोर्धारा मग्नि र्देवेभ्य स्सुवर्गाय यत्राऽऽकूताय छन्दश्चितं पवस्व द्वादश। 12। देवासुरा अजायाँ वै ग्रमुष्टि स्सयोनित्वाय प्रथमो देवयता मेतद्वै छन्दसा मृद्नोत्यष्टौ पञ्चाशत्।। 58।। देवासुरा स्सर्व ञ्जयति)

आ।का। 5 अग्नि चयन ब्राह्मणम्, मन्त्राश्च – 5 (दशानुवाकाः 10)

यदेकेन सङ्स्थापयति- यज्ञस्य सन्तत्या अविच्छेदा,यैन्द्राः पशवो- ये मुष्कराः, यदैन्द्रा स्सन्तोऽग्निभ्य आलभ्यन्ते - देवताभ्य स्समद न्दधा,त्याग्नेयी स्त्रिष्टुभो याज्याऽनुवाक्याः कुर्या,द्यदाग्नेयी- स्तेनाऽऽग्नेयी, यत्त्रिष्टुभ- स्तेनैन्द्रा स्समृद्ध्यै, न देवताभ्य स्समद न्दधाति, वायवे नियुत्वते तूपर मालभते - तेजोऽग्ने र्वायु- स्तेजस एष आ लभ्यते, तस्माद्यद्रियङ् वायुः।। 1।। वाति - तद्रियङ्ङग्नि र्दहति - स्वमेव तत्तेजोऽन्वेति, यन्न नियुत्वते स्या-दुन्माद्ये द्यजमानो, नियुत्वते भवति - यजमान.स्यानुन्मादाय, वायुमती~ श्वेतवती[113]~-- याज्याऽनुवाक्ये ~ भवत स्सतेजस्त्वाय हिरण्यगर्भ स्समवर्तताग्रे[114]- इत्याघार मा घारयति, प्रजापति र्वै हिरण्यगर्भः - प्रजापते.रनुरूपत्वाय, सर्वाणि वा एष रूपाणि पशूनां प्रत्या लभ्यते, यच्छ्मश्रुण- स्तत्।। 2।। पुरुषाणाꣳ रूपँ, यत्तूपर- स्तदश्वानाँ, यदन्यतोद-न्तद्गवाँ, यदव्या इव शफा- स्तदवीनाँ, यदज- स्तदजानाँ, वायुर्वै पशूनां प्रिय.न्धाम, यद्वायव्यो भव-त्येत मेवैन मभि सञ्जानानाः पशव उप तिष्ठन्ते, वायव्यः कार्याः '3' प्राजापत्या '3' इत्याहु, र्यद्वायव्य.ङ्कुर्या- त्प्रजापते रिया,द्यत्प्राजापत्य.ङ्कुर्या- द्वायोः।। 3।। इया,द्यद्वायव्यः पशु र्भवति - तेन वायो.र्नैति, यत्प्राजापत्यः पुरोडाशो भवति - तेन प्रजापते र्नैति, यद्द्वादशकपाल- स्तेन वैश्वानरा न्नै,त्याग्नावैष्णव मेकादशकपाल.न्निर्वपति दीक्षिष्यमाणो,ऽग्नि स्सर्वा देवता- विष्णुर्यज्ञो- देवताश्चैव यज्ञञ्चाऽऽरभते,ऽग्नि रवमो देवतानाँ- विष्णुः परमो, यदाग्नावैष्णव मेकादशकपाल न्निर्वपति- देवताः।। 4।। एवोभयतः परिगृह्य यजमानोऽव रुन्धे, पुरोडाशेन वै देवा अमुष्मि.न्लोक आर्ध्नुव- न्चरुणाऽस्मिन्, यः कामयेतामुष्मिन्लोक ऋध्नुयामिति - स पुरोडाश.ङ्कुर्वीता-ऽमुष्मिन्नेव लोक ऋध्नोति, यदष्टाकपाल- स्तेनाऽऽग्नेयो, यत्त्रिकपाल- स्तेन वैष्णव स्समृद्ध्यै, यः कामयेतास्मिन्लोक ऋध्नुयामिति - स चरु.ङ्कुर्वीता,ऽग्ने र्घृतँ- विष्णो स्तण्डुला- स्तस्मात्।। 5।। चरुः कार्यो-ऽस्मिन्नेव लोक ऋध्नो,त्यादित्यो भव-तीयँ वा अदिति- रस्यामेव प्रति तिष्ठ-त्यथो~ अस्यामेवाधि यज्ञ न्तनुते, यो वै सँवथ्सर.मुख्य.मभृत्वाऽग्नि.ञ्चिनुते - यथा सामि गर्भोऽवपद्यते- तादृगेव त-दार्ति माच्र्छे,द्वैश्वानर

113

114

न्द्वादशकपालं पुरस्ता.न्निर्वपे,थ्सँवथ्सरो वा अग्नि वैश्वानरो- यथा सँवथ्सर.माप्त्वा।। 6।। ❀ काल आगते विजायते- एवमेव सँवथ्सर.माप्त्वा- काल आगतेऽग्नि.श्चिनुते, नाऽऽर्तिं माच्छं,त्येषा वा अग्नेः प्रिया तनू यद्वैश्वानरः- प्रियामेवास्य तनुव मव रुन्धे, त्रीण्येतानि हवीꣳषि भवन्ति - त्रय इमे लोका- एषाँ लोकानाꣳ रोहाय।। 7।। (यद्रियङ्ङ् वायु र्यच्छश्रुण स्तद्वायो र्निर्वपति देवता स्तस्मा दाप्त्वाऽष्टात्रिꣳशच्च। 1।)

❀ प्रजापतिः प्रजा स्सृष्ट्वा प्रेणाऽनु प्राविश- त्ताभ्यः पुन स्सम्भवितु न्नाशक्नो,थ्सोऽब्रवी- दृध्नवदि-थ्स यो मेतः पुन.स्सञ्चिनवदिति, तन्देवा स्समचिन्व- न्ततो वै त आर्ध्नुवन्, यथ्समचिन्व- न्तच्चित्यस्य चित्यत्वँ, य एवँ विद्वा.नग्नि ञ्चिनुत- ऋध्नोत्येव, कस्मै कमग्नि श्चीयत इत्याहु-रग्निवान्।। 8।। ❀ असा- नीति वा अग्नि श्चीयते-ऽग्निवानेव भवति, कस्मै कमग्नि श्चीयत इत्याहु- र्देवा मा वेद-न्निति वा अग्नि श्चीयते- विदुरेन न्देवाः, कस्मै कमग्नि श्चीयत इत्याहु- र्गृह्यसानीति वा अग्नि.श्चीयते- गृह्येव भवति, कस्मै कमग्नि श्चीयत इत्याहुः- पशुमा.नसानीति वा अग्निः।। 9।। ❀ चीयते- पशुमानेव भवति, कस्मै कमग्नि श्चीयत इत्याहु- स्सप्त मा पुरुषा उप जीवानिति वा अग्नि श्चीयते- त्रयः प्राञ्च- स्त्रयः प्रत्यञ्च - आत्मा सप्तमे- एतावन्त एवैन ममुष्मिन्लोक उप जीवन्ति, प्रजापति रग्नि मचिकीषत, तं पृथि.व्यब्रवी- न्न मय्यग्नि ञ्चेष्यसे-ऽति मा धक्ष्यति- सा त्वाऽतिदह्यमाना वि धविष्ये-।। 10।। ❀ स पापीया न्भविष्यसीति, सोऽब्रवी-त्तथा वा अह.ङ्करिष्यामि- यथा त्वा नातिधक्ष्यतीति, स इमा मभ्यमृश-त्प्रजापतिस्त्वा सादयतु - तया देवतयाऽङ्गिरस्व.द्ध्रुवा सीदे-तीमा.मेवेष्टका.ङ्कृत्वोपाधत्ताऽनतिदाहाय, यत्प्रत्यग्नि.ञ्चिन्वीत - तदभि मृशे,त्प्रजापतिस्त्वा सादयतु- तया देवतयाऽङ्गिरस्व.द्ध्रुवा सीद।। 11।। ❀ इतीमा.मेवेष्टका.ङ्कृत्वोप धत्तेऽनतिदाहाय, प्रजापति.रकामयत- प्र जायेयेति- स एतमुख्य मपश्य-त्तꣳ सँवथ्सर मबिभ- स्ततो वै स प्राजायत- तस्माथ्सँवथ्सरं भार्यः- प्रैव जायते, तँ वसवोऽब्रुव- न्प्र त्वमजनिष्ठा- वयं प्र जायामहा इति- तँ वसुभ्यः प्रायच्छ,त्त.न्त्रीण्यहा.न्यबिभरु- स्तेन।। 12।। ❀ त्रीणि च शता.न्यसृजन्त त्रयस्त्रिꣳशतञ्च, तस्मा.त्त्र्यहं भार्यः- प्रैव जायते, तान्रुद्रा अब्रुव- न्प्र यूय मजनिढ्वँ- वयं प्र जायामहा इति - तꣳ रुद्रेभ्यः प्रायच्छ,न्तꣳ षडहा.न्यबिभरु-स्तेन त्रीणि च शता.न्यसृजन्त त्रयस्त्रिꣳशतञ्च, तस्माथ्षडहं भार्यः- प्रैव जायते, तानादित्या अब्रुव- न्प्र यूय मजनिढ्वँ- वयम्।। 13।। ❀ प्र जायामहा इति- तमादित्येभ्यः प्रायच्छ,न्त.न्द्वादशाहान्यबिभरु-स्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतञ्च- तस्मा.द्द्वादशाहं भार्यः- प्रैव जायते, तेन वै ते सहस्र मसृज-न्तोखाꣳ

सहस्रतमीँ, ये एव मुख्य॰ साहस्रँ वेद - प्र सहस्रं पशू.नाप्नोति।। 14।। (अग्निवा न्पशुमानसानीति वा अग्नि र्धविष्ये मृशे त्प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद तेन तानादित्या अब्रुव न्प्र यूय मजनिद्वँ वय श्चत्वारि॰शच्च। 2।)

यजुषा वा एषा क्रियते - यजुषा पच्यते - यजुषा वि मुच्यते - यदुखा, सा वा एषैतर्हि यातयाम्नी - सा न पुनः प्रयुज्येत्याहु, रग्ने युक्ष्वा हि ये तव - युक्ष्वा हि देवहूतमा॰ इत्युखाया.ञ्जुहोति - तेनैवैनां पुनः प्र युङ्क्ते - तेनायातयाम्नी, यो वा अग्निँ योग आगते युनक्ति- युङ्क्ते युञ्जाने,ष्वग्ने।। 15।। युक्ष्वा हि ये तव - युक्ष्वा हि देवहूतमा॰ इत्या-हैष वा अग्ने र्योग- स्तेनैवैनँ युनक्ति- युङ्क्ते युञ्जानेषु, ब्रह्मवादिनो वदन्ति - न्य.ङ्ङग्नि श्चेतव्यो '3'- उत्तानो '3' इति, वयसाँ वा एष प्रतिमया चीयते - यदग्नि,र्यन्न्यञ्च.ञ्चिनुया- त्पृष्टित एन माहुतय ऋच्छेयु,र्यदुत्तान.न्न पतितु॰ शक्नुया- दसुवर्ग्योऽस्य स्या,त्प्राचीन मुत्तानम्।। 16।। पुरुषशीर्षमुप दधाति - मुखत एवैन माहुतय ऋच्छन्ति, नोत्तान ञ्चिनुते- सुवर्ग्योऽस्य भवति, सौर्या जुहोति[115] - चक्षुरेवास्मि न्प्रति दधाति, द्वि र्जुहोति - द्वे~ हि चक्षुषी~, समान्या जुहोति - समान॰ चक्षु स्समृद्ध्यै, देवासुरा.स्सँयत्ता आस-न्ते वामँ वसु स.न्न्यदधत - तद्देवा वामभृताऽवृञ्जत, तद्वामभृतो वामभृत्त्वँ, यद्वामभृत मुपदधाति - वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते, हिरण्यमूर्ध्नी भवति - ज्योतिर्वै हिरण्य-ञ्ज्योति र्वाम-ञ्ज्योतिषैवास्य ज्योति र्वामँ वृङ्क्ते, द्वियजुर्भवति प्रतिष्ठित्यै।। 17।। (युञ्जानेष्वग्ने प्राचीन मुत्तानँ वामभृत श्चतुर्वि॰शतिश्च। 3।)

आपो वरुणस्य पत्नय आस-न्ता अग्नि रभ्यध्याय-त्ता स्समभव- त्तस्य रेतः पराऽपत-त्तदिय मभव,द्यद्वितीयं पराऽपत-त्तदसा.वभव,दियँ वै विरा-डसौ स्वरा,ड्यद्विराजा.वुपदधा-तीमे~ एवोप धत्ते, यद्वा असौ रेत.स्सिञ्चति - तदस्यां प्रति तिष्ठति - तत्प्रजायते - ता ओषधयः।। 18।। वीरुधो भवन्ति - ता अग्निरत्ति, य एवँ वेद - प्रैव जायते-ऽन्नादो भवति, यो रेतस्वी स्या-त्प्रथमाया न्तस्य चित्या मुभे~ उप दध्या- दिमे~ एवास्मै समीची~ रेत स्सिञ्चतो, यस्सिक्तरेता स्स्या-त्प्रथमाया न्तस्य चित्या मन्या.मुप दध्या- दुत्तमाया मन्या॰, रेत एवास्य सिक्त.माभ्या मुभयतः परि गृह्णाति, सँवथ्सर.न्न कम्।। 19।। चन प्रत्यवरोहे- न्न हीमे~ कञ्चन प्रत्यवरोहत,स्तदेनयो र्व्रतँ, यो वा अपशीर्षाण मग्नि.ञ्चिनुते-ऽपशीर्षाऽमुष्मिन्लोके भवति, य.स्सशीर्षाण.ञ्चिनुते - सशीर्षाऽमुष्मिन्लोके भवति, चित्ति ञ्जुहोमि मनसा घृतेन यथा देवा इहाऽगमन्वीतिहोत्रा ऋतावृध

115

स्समुद्रस्य वयुनस्य पत्म न्जुहोमि विश्वकर्मणे विश्वाऽहाऽमर्त्यꣳ हवि- रिति स्वयमातृण्णा.मुपधाय जुहोति,।। 20।।❀ एतद्वा अग्ने श्शिर- स्सशीर्‌षाण मेवाग्नि.श्चिनुते, सशीर्‌षाऽमुष्मिन्लोके भवति - य एवँ वेद, सुवर्गाय वा एष लोकाय चीयते यदग्नि,स्तस्य यदयथापूर्व.ङ्क्रियते-ऽसुवर्ग्यमस्य त,थ्सुवर्ग्योऽग्नि,श्चितिमुपधायाभि मृशे- 卐 चित्ति मचित्ति ञ्चिनव-द्वि विद्वा न्पृष्ठेव वीता वृजिना च मर्ता-न्राये च न स्स्वपत्याय देव- दितिञ्च रास्वादिति मुरुष्ये-ति यथापूर्व मेवैना मुप धत्ते, प्राञ्च.मेन.ञ्चिनुते-सुवर्ग्योऽस्य भवति।। 21।। (ओषधयः क ञ्जुहोति स्वपत्यायाष्टादश च।। 4।)

❀卐विश्वकर्मा- दिशां पति- स्स नः पशू.न्पातु- सोऽस्मान्पातु- तस्मै नमः 卐 प्रजापती- 卐 रुद्रो- 卐 वरुणो- 卐ऽग्नि- र्दिशां पति- स्स नः पशू.न्पातु - सोऽस्मा न्पातु - तस्मै नम,- एता वै देवता एतेषां पशूना मधिपतय,स्ताभ्यो वा एष आ वृश्च्यते - यः पशुशीर्‌षा.ण्युपदधाति, हिरण्येष्टका उप दधा-त्येताभ्य एव देवताभ्यो नमस्करोति, ब्रह्मवादिनः।। 22।।❀ वद-न्त्यग्नौ ग्राम्या न्पशू न्प्र दधाति-शुचाऽऽरण्या नर्पयति - कि.न्ततै उच्छिꣳषतीति, यद्धिरण्येष्टका उपदधा- त्यमृतँ वै हिरण्य- ममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषज.ङ्करोति - नैनान् हिनस्ति, प्राणो वै प्रथमा स्वयमातृण्णा - व्यानो द्वितीया-ऽपान स्तृतीया,ऽनु प्राण्या.त्प्रथमाꣳ स्वयमातृण्णा.मुपधाय - प्राणेनैव प्राणꣳ समर्धयति, व्यन्यात्।। 23।।❀ द्वितीया.मुपधाय - व्यानेनैव व्यानꣳ समर्धय,त्यपान्या.त्तृतीया.मुपधाया-ऽपानेनैवापानꣳ समर्धय,त्यथो~ प्राणैरेवैनꣳ समिन्धे, 卐 भू 卐 र्भुव 卐 स्सुव- रिति स्वयमातृण्णा उप दधा,तीमे वै लोका स्स्वयमातृण्णा- एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत, यदेताभि र्व्याहृतीभि स्स्वयमातृण्णा उपदधा-तीमानेव लोका.नुपधायैषु।। 24।।❀ लोकेष्वधि प्र जायते, 卐 प्राणाय- 卐 व्यानाया- 卐ऽपानाय- 卐 वाचे त्वा चक्षुषे त्वा- तया देवतयाऽङ्गिरस्व.द्ध्रुवा सीदा-ऽग्निना वै देवा स्सुवर्गँ लोक मजिगाꣳस- न्तेन पतितु न्नाशक्नुव-न्त एता श्चतस्र स्स्वयमातृण्णा अपश्य-न्ता दिक्षूपादधत - तेन सर्वतश्चक्षुषा सुवर्गँ लोकमायन्, यच्चतस्र स्स्वयमातृण्णा दिक्षूपदधाति- सर्वतश्चक्षुषैव तदग्निना यजमान स्सुवर्गँ लोक.मेति।। 25।। (ब्रह्मवादिनो व्यन्या देषु यजमान स्त्रीणि च। 5।)

❀卐अग्न आ याहि वीतये[116]❀ इत्याहा-ऽह्वतैवैन,卐मग्नि न्दूतँ वृणीमहे[117]❀ इत्याह - हूत्वैवैनँ वृणीते, 卐ऽग्निनाऽग्नि स्समिध्यते[118]❀ इत्याह - समिन्ध एवैन, 卐 मग्नि र्वृत्राणि जङ्घन[119]❀ दित्याह -

116

117

118

119

समिद्ध एवास्मि.न्निन्द्रिय न्दधा, ॐ त्यग्ने स्स्तोमं मनामहे[120] इत्याह - मनुत एवैन, मेतानि वा अह्नाः रूपाणि-।। 26।। अन्वह मेवैन ञ्चिनुते-ऽवाह्नाः रूपाणि रुन्धे, ब्रह्मवादिनो वदन्ति - कस्माथ्सत्या.द्यातयाम्नी रन्या इष्टका- अयातयाम्नी लोकं पृणे,त्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूया, दिन्द्राग्नी च हि देवानां बृहस्पति श्चायतयामानो,ऽनुचरवती भव-त्यजामित्वाया,ऽनुष्टुभाऽनु चर-त्यात्मा वै लोकंपृणा - प्राणोऽनुष्टु-प्तस्मा.त्प्राण स्सर्वा.ण्यङ्गा.न्यनु चरति, ता अस्य सूददोहसः।। 27।। इत्याह - तस्मात्परुषिपरुषि रस,स्सोमं श्रीणन्ति पृश्नय इत्याहा-ऽन्नँ वै पृ-श्न्यन्न.मेवाव रुन्धे,ऽर्को वा अग्नि-रर्कोऽन्न- मन्नमेवाव रुन्धे, जन्म.न्देवानाँ विश स्त्रिष्वा रोचने दिव इत्या-हेमा नेवास्मै लोका.न्ज्योतिष्मतः करोति, यो वा इष्टकानां प्रतिष्ठाँ वेद - प्रत्येव तिष्ठति, ॐ तया देवतयाऽङ्गिरस्व.द्ध्रुवा सीदे.त्या-हैषा वा इष्टकानां प्रतिष्ठा, य एवँ वेद- प्रत्येव तिष्ठति।। 28।। (रूपाणि सूददोहस स्तया षोडश च। 6।)

सुवर्गाय वा एष लोकाय चीयते - यदग्नि,र्वज्र एकादशिनी, यदग्ना.वेकादशिनीं मिनुया- द्वज्रेणैनः सुवर्गा ल्लोका दन्तर्दध्या,द्य.न्न मिनुया-थ्स्वरुभिः पशू.न्व्यर्धये,देकयूपं मिनोति - नैनँ वज्रेण सुवर्गा ल्लोका दन्तर्दधाति - न स्वरुभिः पशू.न्व्यर्धयति, वि वा एष इन्द्रियेण वीर्येणर्ध्यते - योऽग्नि.ञ्चिन्व न्नधिक्राम,ॐ त्यैन्द्रिया।। 29।। ऋचा[121]-ऽक्रमणं प्रतीष्टका.मुप दध्या- न्नेन्द्रियेण वीर्येण व्यृध्यते, रुद्रो वा एष- यदग्नि,स्तस्य तिस्र श्शरव्याः- प्रतीची- तिर-श्च्यनूची, ताभ्यो वा एष आ वृश्च्यते - योऽग्नि.ञ्चिनुते,ऽग्नि.ञ्चित्वा तिसृधन्व मयाचितं ब्राह्मणाय दद्या- त्ताभ्य एव नमस्करो-त्यथो~ ताभ्य एवाऽत्मान न्निष्क्रीणीते, ॐ यत्ते रुद्र पुरः।। 30।। धनु- स्तद्वातो अनु वातु ते - तस्मै ते रुद्र सँवथ्सरेण नमस्करोमि, ॐ यत्ते रुद्र दक्षिणा धनु- स्तद्वातो अनु वातु ते - तस्मै ते रुद्र परिवथ्सरेण नमस्करोमि, ॐ यत्ते रुद्र पश्चा.द्धनु- स्तद्वातो अनु वातु ते - तस्मै ते रुद्रेदावथ्सरेण नमस्करोमि, ॐ यत्ते रुद्रोत्तरा.द्धनु-स्तत्।। 31।। वातो अनु वातु ते- तस्मै ते रुद्रेदुवथ्सरेण नमस्करोमि, ॐ यत्ते रुद्रोपरि धनु - स्तद्वातो अनु वातु ते - तस्मै ते रुद्र वथ्सरेण नमस्करोमि,- रुद्रो वा एष- यदग्नि,स्स यथा व्याघ्रः क्रुद्ध स्तिष्ठ-त्येवँ वा एष- एतर्हि सञ्चित,मेतै रुप तिष्ठते नमस्कारै रेवैनः शमयति ॐ येऽग्नयः।। 32।। पुरीष्याः प्रविष्टाः पृथिवीमनु। तेषा न्त्वमस्युत्तमः प्र णो जीवातवे सुव। ॐ आपन्त्वाऽग्ने मनसा ॐऽऽपन्त्वाऽग्ने तपसा ॐऽऽप न्त्वाऽग्ने दीक्षया ॐऽऽपन्त्वाग्न उपसद्भि ॐ

---

120

121

रापन्त्वाऽग्ने सुत्यया ऽऽप न्त्वाऽग्ने दक्षिणाभि रापन्त्वाऽग्नेऽवभृथेना ऽऽप न्त्वाऽग्ने वशया ऽऽप न्त्वाऽग्ने स्वगाकारेणे-त्याहैषा वा अग्ने.राप्ति- स्तयैवैन माप्नोति।। 33।। (ऐन्द्रिया पुर उत्तरा द्धनु स्तदग्नय आहाष्टौ च। 7।)

गायत्रेण पुरस्ता दुप तिष्ठते - प्राणमेवास्मि न्दधाति, बृहद्रथन्तराभ्यां पक्षा-वोज एवास्मि न्दधा,त्यृतुस्थायज्ञायज्ञियेन पुच्छ-मृतुष्वेव प्रति तिष्ठति, पृष्ठैरुप तिष्ठते - तेजो वै पृष्ठानि - तेज एवास्मि न्दधाति, प्रजापति रग्नि मसृजत - सोऽस्मात्सृष्टः पराङै-त्तँ वारवन्तीयेनावारयत- तद्वारवन्तीयस्य वारवन्तीयत्वꣳ, श्यैतेन श्येती अकुरुत - तच्छ्यैतस्य श्यैतत्वम्,।। 34।। यद्वारवन्तीये.नोपतिष्ठते - वारयत एवैनꣳ, श्यैतेन श्येती कुरुते, प्रजापतेर्हृदये.नापिपक्षं प्रत्युप तिष्ठते - प्रेमाण.मेवास्य गच्छति, प्राच्या त्वा दिशा सादयामि- गायत्रेण छन्दसा-ऽग्निना देवतया-ऽग्ने श्शीर्ष्णाऽग्ने श्शिर उप दधामि- दक्षिणया त्वा दिशा सादयामि- त्रैष्टुभेन छन्द-सेन्द्रेण देवतया-ऽग्नेः पक्षेणाग्नेः पक्ष.मुप दधामि, प्रतीच्या त्वा दिशा सादयामि-।। 35।। जागतेन छन्दसा- सवित्रा देवतया-ऽग्नेः पुच्छेनाग्नेः पुच्छमुप दधा, म्युदीच्या त्वा दिशा सादया.म्यानुष्टुभेन छन्दसा- मित्रावरुणाभ्या न्देवतया-ऽग्नेः पक्षेणाग्नेः पक्ष.मुप दधा, म्यूर्ध्वया त्वा दिशा सादयामि- पाङ्क्तेन छन्दसा- बृहस्पतिना देवतया-ऽग्नेः पृष्ठेनाग्नेः पृष्ठमुप दधामि,- यो वा अपाऽऽत्मान मग्नि.श्चिनुते-ऽपाऽऽत्माऽमुष्मिन्लोके भवति, यस्साऽऽत्मान.श्चिनुते- साऽऽत्माऽमुष्मिन्लोके भव,त्यात्मेष्टका उप दधा-त्येष वा अग्ने रात्मा - साऽऽत्मान.मेवाग्नि.श्चिनुते, साऽऽत्माऽमुष्मिन्लोके भवति - य एवँ वेद।। 36।। (श्यैतत्वं प्रतीच्या त्वा दिशा सादयामि यस्साऽऽत्मान श्चिनुते द्वाविꣳशतिश्च। 8।)

अग्न- उदधे- या त इषु र्युवा नाम - तया नो मृड - तस्यास्ते नम- स्तस्यास्त उप जीवन्तो भूयास्मा,ऽग्ने दुध्र- --गह्य- --किꣳशिल- --वन्य- या त इषु र्युवा नाम - तया नो मृड - तस्यास्ते नम- स्तस्यास्त उप जीवन्तो भूयास्म,- पञ्च वा एतेऽग्नयो - यच्चितय, उदधिरेव नाम प्रथमो- दुध्रः।। 37।। द्वितीयो- गह्य स्तृतीयः- किꣳशिल श्चतुर्थो- वन्यः पञ्चम,स्तेभ्यो यदाहुतीर्न जुहुया- दध्वर्युश्च यजमानश्च प्र दहेयु,र्यदेता आहुती र्जुहोति - भागधेयेनैवाना न्छमयति, नाऽऽर्ति मार्च्छे.त्यध्वर्यु-र्न यजमानो, वाङ्म आस- न्नसोः प्राणो-ऽक्ष्यो श्चक्षुः- कर्णयो श्श्रोत्रं- बाहुवो र्बल- मूरुवो रोजो-ऽरिष्टा विश्वा.न्यङ्गानि तनूः-।। 38।। तनुवा मे सह- नमस्ते अस्तु मा मा हिꣳसी,रप वा एतस्मात्प्राणाः क्रामन्ति - योऽग्नि.श्चिन्व.न्नधिक्रामति, वाङ्म आस.न्नसोः प्राण इत्याह -

प्राणानेवाऽऽत्म न्धत्ते, 卐 यो रुद्रो अग्नौ- यो अफ्सु- यै ओषधीषु- यो रुद्रो विश्वा भुवनाऽऽविवेश- तस्मै रुद्राय- नमो अ,स्त्वाहुतिभागा वा अन्ये रुद्री- हविर्भागाः।। 39।।❀ अन्ये, शतरुद्रीयꣳ हुत्वा गावीधुक.ञ्चरु मेतेन यजुषा चरमाया मिष्टकाया.न्नि दध्या- द्भागधेयेनैवैनꣳ शमयति, तस्य त्वै शतरुद्रीयꣳ हुत.मित्याहु- र्यस्यैतदग्नौ क्रियत इति, 卐 वसवस्त्वा रुद्रैः पुरस्ता.त्पान्तु- 卐 पितरस्त्वा यमराजानः पितृभि र्दक्षिणतः पा- 卐न्त्वादित्यास्त्वा विश्वै र्देवैः पश्चा.त्पान्तु- 卐 द्युतानस्त्वा मारुतो मरुद्भि रुत्तरतः पातु-।। 40।।❀卐 देवा स्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ता च्चोपरिष्टाच्च पान्तु,- न वा एतेन पूतो- न मेध्यो- न प्रोक्षितो, यदेन मतः प्राचीनं प्रोक्षति - यथ्सञ्चित माज्येन प्रोक्षति - तेन पूत- स्तेन मेध्य- स्तेन प्रोक्षितः।। 41।। (दुध्र स्तनूर् हविर्भागाः पातु द्वात्रिꣳशच्च। 9।)

❀卐समीची नामासि प्राची दि-क्तस्यास्तेऽग्नि रधिपति- रसितो- रक्षिता - यश्चाधिपति र्यश्च गोप्ता - ताभ्या न्नम- स्तौ नो मृडयता- न्ते य.न्द्विष्मो- यश्च नो द्वेष्टि- तँ वा.ञ्जम्भे दधा- 卐म्योजस्विनी नामासि दक्षिणा दि-क्तस्यास्त इन्द्रोऽधिपतिः- पृदाकुः,- 卐 प्राची नामासि प्रतीची दि-क्तस्यास्ते।। 42।।❀ सोमोऽधिपति- स्स्वजो- 卐ऽवस्थावा नामास्युदीची दि-क्तस्यास्ते वरुणोऽधिपति- स्तिरश्चराजि,- 卐 रधिपत्नी नामासि बृहती दि-क्तस्यास्ते बृहस्पति रधिपति- श्श्वित्रो,- 卐 वशिनी नामासीय न्दि-क्तस्यास्ते यमोऽधिपतिः- कल्माषग्रीवो- रक्षिता- यश्चाधिपति र्यश्च गोप्ता- ताभ्या न्नम- स्तौ नो मृडयता- न्ते य.न्द्विष्मो- यश्च।। 43।।❀ नो द्वेष्टि- तँ वा.ञ्जम्भे दधा,-म्येता वै देवता अग्निञ्चितꣳ रक्षन्ति, ताभ्यो यदाहुती.र्न जुहुया- दध्वर्युञ्च यजमानञ्च ध्यायेयु, र्यदेता आहुती र्जुहोति - भागधेयेनैवैना न्छमयति - नाऽऽर्ति मार्च्छ त्यध्वर्यु- र्न यजमानो, 卐 हेतयो नाम स्थ - तेषाँ वः पुरो गृहा - अग्नि र्वै इषव- स्सलिलो,- 卐 निलिम्पा नाम।। 44।।❀ स्थ - तेषाँ वो दक्षिणा गृहाः- पितरो वै इषव- स्सगरो,- 卐 वज्रिणो नाम स्थ - तेषाँ वः पश्चा.द्गृहा- स्स्वप्नो वै इषवो- गह्वरो,- 卐ऽवस्थावानो नाम स्थ - तेषाँ वै उत्तरा.द्गृहा- आपो वै इषव- स्समुद्रो,- 卐ऽधिपतयो नाम स्थ - तेषाँ वै उपरि गृहा- वर्षँ वै इषवो- ऽवस्वा- 卐 न्क्रव्या नाम स्थ- पार्थिवा स्तेषाँ वै इह गृहाः-।। 45।।❀ अन्नँ वै इषवो- निमिषो- वातनाम- न्तेभ्यो वो नम- स्ते नो मृडयत- ते य.न्द्विष्मो - यश्च नो द्वेष्टि - तँ वो जम्भे दधामि,- हुतादो वा अन्ये देवा- अहुतादोऽन्ये, ता.नग्निचि देवोभया न्प्रीणाति, दध्ना मधुमिश्रेणैता आहुती.र्जुहोति - भागधेयेनैवैना न्प्रीणा- त्यथो~ खल्वाहु,रिष्टका वै देवा- अहुतादे इति।। 46।।❀ अनुपरिक्राम ञ्जुहो-

त्यपरिवर्ग मेवैना न्प्रीणा,फ्रतीमङ्ग स्तन मूर्जस्वन्त न्धयापां प्रप्यातमग्ने सरिरस्य मध्ये। उथ्स.ञ्जुषस्व मधुमन्त मूर्व समुद्रियꣳ सदन मा विशस्व।

यो वा अग्निं प्रयुज्य न विमुञ्चति - यथाऽश्वो युक्तोऽविमुच्यमानः≈ क्षुध्य न्पराभव-त्येव.मस्याग्निः पराभवति - तं पराभवन्तँ यजमानोऽनु परा भवति, सोऽग्नि.ञ्चित्वा लूक्षः।। 47।। ❀ भव,तीमङ्ग स्तन मूर्जस्वन्त न्धयापा मि-त्याज्यस्य पूर्णाꣳ स्रुच.ञ्जुहो,त्येष वा अग्ने र्विमोको - विमुच्यैवास्मा अन्नमपि दधाति, तस्मादाहु- र्यश्चैवँ वेद- यश्चन सुधायꣳ ह वै वाजी सुहितो दधाती,त्यग्नि र्वाव वाजी - तमेव तत्प्रीणाति - स एनं प्रीतः प्रीणाति - वसीया न्भवति।। 48।। (प्रतीची दिक्तस्यास्ते द्विष्मो यश्च निलिम्पा नामेह गृहा इति लूक्षो वसीयान्भवति। 10।)

**वै।का। 13 अश्वमेध ब्राह्मणम् – 3 (चतुर्दश अनुवाकाः 14)**

❀ इन्द्राय राज्ञे सूकरो- वरुणाय राज्ञे कृष्णो- यमाय राज्ञ ऋश्य - ऋषभाय राज्ञे गवय- श्शार्दूलाय राज्ञे गौरः- पुरुषराजाय मर्कटः≈ क्षिप्रश्येनस्य वर्तिका - नीलङ्गोः क्रिमि- स्सोमस्य राज्ञः कुलुङ्ग- स्सिन्धो श्शिꣳशुमारो- हिमवतो हस्ती।। 49।। (इन्द्राय राज्ञेऽष्टाविꣳशतिः। 11।)

❀ मयुः प्राजापत्य- ऊलो हलीक्ष्णो वृषदꣳश.स्ते धातु-स्सरस्वत्यै शारि.श्श्येता पुरुषवा-क्सरस्वते शुक.श्श्येतः पुरुषवा-गारण्योऽजो नकुल.श्शका ते पौष्णा- वाचे क्रौञ्चः।। 50।। (मयु स्त्रयोविꣳशतिः। 12।)

❀ अपा.न्नप्त्रे जषो- नाक्रो मकरः कुलीकय स्तेऽकूपारस्य- वाचे पैङ्गराजो- भगाय कुषीतके- आती वाहसो दर्विदा ते वायव्या -दिग्भ्य श्चक्रवाकः।। 51।। (अपामेकान्न विꣳशतिः। 13।)

❀ बलायाजगर- आखु स्सृजया शयण्डकस्ते मैत्रा- मृत्यवेऽसितो- मन्यवे स्वजः- कुम्भीनसः पुष्करसादो लोहिताहि.स्ते त्वाष्ट्राः- प्रतिश्रुत्कायै वाहसः।। 52।)

❀ पुरुषमृग.श्चन्द्रमसे- गोधा कालका दार्वाघाट.स्ते वनस्पतीना- मेण्यह्ने- कृष्णो रात्रियै- पिकः≈ क्ष्विङ्का नीलशीर्ष्णी तेऽर्यम्णे- धातुः कत्कटः।। 53।)

❀ सौरी बला.कश्यो मयूर श्श्येन.स्ते गन्धर्वाणाँ- वसूना.ङ्कपिञ्जलो- रुद्राणा न्तित्तिरी- रोहि.त्कुण्डृणाची गोलत्तिका ता अप्सरसा- मरण्याय सृमरः।। 54।।

❀ पृषतो वैश्वदेवः- पित्वो न्यङ्कुः कश.स्तेऽनुमत्या- अन्यवापोऽर्धमासानां मासा-ङ्कश्यपः क्वयिः कुटरु र्दात्यौह.स्ते सिनीवाल्यै- बृहस्पतये शित्पुटः।। 55।।

🏺❀ शका भौमी- पान्त्रः कशो मान्थीलव स्ते पितृणा- मृतूना.ञ्जहका- सँवथ्सराय लोपा - कपोत उलूक श्शशस्ते नैर्ऋता:- कृकवाकु स्सावित्रः।। 56।। (बलाय पुरुषमृग स्सौरी पृषत श्शकाऽष्टादशाष्टादश। 18।)

🏺❀ रुरू रौद्रः- कृकलास श्शकुनिः पिप्पका ते शरव्यायै- हरिणो मारुतो- ब्रह्मणे शार्ग- स्तरक्षुः कृष्ण.श्श्वा चतुरक्षो गर्दभ.स्त इतरजनाना- मग्नये धूङ्क्षा।। 57।। (रुरु र्विꣳशतिः। 19।)

🏺❀ आलजे आन्तरिक्षि- उद्रो मद्गुः प्लवस्तेऽपा- मदित्यै हꣳससाचि- रिन्द्राण्यै कीर्शा- गृध्र श्शितिकक्षी वार्ध्राणस.स्ते दिव्यै- द्यावापृथिव्या श्वावित्।। 58।।)

🏺❀ सुपर्णः पार्जन्यो- हꣳसो वृको वृषदꣳश.स्त ऐन्द्री- अपा मुद्रो-ऽर्यम्णे लोपाश- स्सिꣳहो नकुलो व्याघ्र.स्ते महेन्द्राय - कामाय परस्वान्।। 59।। (अलज स्सुपर्णोऽष्टादशाष्टादश। 20। 21।)

🏺❀ आग्नेयः कृष्णग्रीव- स्सारस्वती मेषी- बभ्रु स्सौम्यः- पौष्ण श्श्याम- श्शितिपृष्ठो बार्हस्पत्य- श्शिल्पो वैश्वदेवे- ऐन्द्रोऽरुणो- मारुतः कल्माष - ऐन्द्राग्न स्सꣳहितो -ऽधोराम स्सावित्रो- वारुणः पेत्वः।। 60।।(आग्नेयो द्वाविꣳशतिः। 22।)

🏺❀ अश्व स्तूपरो गोमृग.स्ते प्राजापत्या- आग्नेयौ कृष्णग्रीवौ- त्वाष्ट्रौ लोमशसक्थौ - शितिपृष्ठौ बार्हस्पत्यौ- धात्रे पृषोदर- स्सौर्यो बलक्षः पेत्वः।। 61।। (अश्व ष्षोडश। 23।)

🏺❀ अग्नयेऽनीकवते रोहिताञ्जि रनड्वा- नधोरामौ सावित्रौ- पौष्णौ रजतनाभी~ वैश्वदेवौ पिशङ्गौ तूपरौ- मारुतः कल्माष - आग्नेयः कृष्णोऽज- स्सारस्वती मेषी - वारुणः कृष्ण एकशितिपा त्पेत्वः।। 62।। (अग्नयेऽनीकवते द्वाविꣳशतिः। 24।)

(यदेकेन प्रजापतिः प्रेणाऽनु यजुषाऽऽपो विश्वकर्माऽग्न आ याहि सुवर्गाय वज्रो गायत्रेणाग्न उदधे समीचीन्द्राय मयु रपां बलाय पुरुषमृग स्सौरी पृषत श्शका रुरु रलज स्सुपर्ण आग्नेयोऽश्वोऽग्नयेऽनीकवते चतुर्विꣳशतिः। 24। यदेकेन स पापीया नेतद्वा अग्ने र्धनु स्तद्देवा स्त्वेन्द्रज्येष्ठा अपा न्नम्रेऽश्व स्तूपरो द्विषष्टिः। 62। यदेकेनैकशितिपात्पेत्वः।)

**ꣽꣽ ꣽꣽपञ्चमकाण्डे षष्ठः प्रपाठकः**

**आ।का। 5 अग्नि चयन ब्राह्मणम्, मन्त्राश्च – 6 (दशानुवाका: 10)**

🏺❀卐हिरण्यवर्णा श्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निँ या गर्भ न्दधिरे विरूपा स्ता न आप श्शꣳ स्योना भवन्तु।।

卐 यासा॑ राजा वरु॑णो याति मध्ये॑ सत्यानृते अ॑वपश्य न्जना॑नाम्। मधुश्चुत श्शुच॑यो या॑ पा॑वका स्ता न आप श्शः स्योना भवन्तु।।

卐 यासा॑ न्देवा दिवि कृण्वन्ति॑ भक्षँ या अन्तरि॑क्षे बहुधा भव॑न्ति। या॑ पृथिवीं पय॑सोन्दन्ति॑।। 1।। ❀ शुक्रा स्ता न आप श्शः स्योना भवन्तु।।

卐 शिवे॑न मा चक्षुषा पश्यता॒ऽप श्शिवया॑ तनुवो॑प स्पृशत त्वचं॑ मे। सर्वा॑ अग्नी॑ रफ्सुषदो॑ हुवे वो मयि वर्चो॑ बल मोजो नि धत्त।।

卐 यदद स्सं॑प्रयती रहा॑ वनदता हते। तस्मादा नद्यो॑ नाम॑ स्थ ता वो॑ नामा॑नि सिन्धवः।।

卐 यत्प्रेषिता वरुणेन ता श्शीभ॑ समवल्गती॑।। 2।। ❀ तदाप्नो दिन्द्रो वो यती स्तस्मा दापो अनु स्थन।।

卐 अपकाम॑ स्यन्द॑माना अवीवरत वो हि॑कम्। इन्द्रो॑ व श्शक्ति॑भि र्दैवी स्तस्मा द्वार्णा॑म वो हितम्।।

卐 एको देवो अप्य॑तिष्ठ थ्स्यन्द॑माना यथावशम्। उदा॑निषु म॑हीरिति तस्मा दुदक मुच्यते।।

卐 आपो॑ भद्रा घृत मिदाप॑ आसु रग्नीषोमौ॑ बिभ्र त्याप इत्ताः। तीव्रो॑ रसो॑ मधुपृचाम्।। 3।। ❀ अरङ्गम आ मा॑ प्राणेन सह वर्च॑सा गन्न्।।

卐 आदित्पश्या म्युत वा श्शृणोम्या मा घोषो॑ गच्छति वाङ्ग आसाम्। मन्ये॑ भेजानो अमृत॑स्य तर्हि हिर॑ण्यवर्णा अतृप॑ँ यदा वः।।

卐 आपो॑ हि ष्ठा मयो॑भुव स्ता न ऊर्जे॑ दधातन। महे रणाय चक्षसे।।

卐 यो व श्शिवतमो रस स्तस्य भाजयतेह नः। उशती रिव मातरः।।

卐 तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः।।

卐 दिवि श्रयस्वान्तरिक्षे यतस्व- पृथिव्या सम्भव- ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा।। 4।। (उन्दन्ति समवल्गात मधुपृचां मातरो द्वावि॑शतिश्च। 1।)

❀ अपा.ङ्ग्रहा.न्गृह्णा,त्येतद्वाव राजसूयँ- यदेते ग्रहा,स्सवो॑ऽग्नि र्वरुणसवो- राजसूय मग्निसव श्चित्य-स्ताभ्यामेव सूयते,ऽथो~ उभा.वेव लोका.वभि जयति - यश्च राजसूयेनेजानस्य - यश्चाग्निचिते, आपो भव-न्त्यापो वा॑ अग्ने र्भ्रातृव्या, यदपो॑ऽग्ने रधस्ता दुपदधाति - भ्रातृव्याभिभूत्यै, भव.त्यात्मना - परा॑ऽस्य भ्रातृव्यो भव,त्यमृतम्।। 5।। ❀ वा॑ आप- स्तस्मा.दद्भि रवतान्त मभि षिञ्चन्ति, नाऽर्ति माच्छति - सर्वमायु.रेति- यस्यैता उपधीयन्ते - य उ चैना एवँ वेदा,ऽन्नँ वा॑ आपः- पशव आपो-ऽन्नं

पशवो-ऽन्नाद॰ पशुमा न्भवति- यस्यैतो उपधीयन्ते - ये उ चैनो एवँ वेद, द्वादश भवन्ति - द्वादश मासा स्सँवथ्सर- स्सँवथ्सरेणैवास्मै।। 6।।❀ अन्नमव रुन्धे, पात्राणि भवन्ति - पात्रे वा अन्न मद्यते - सयोन्येवान्न मव रुन्धे- आ द्वादशा.त्पुरुषा दन्न म-त्त्यथो पात्रा.न्न छिद्यते - यस्यैतो उपधीयन्ते- ये उ चैनो एवँ वेद, कुम्भाश्च कुम्भीश्च मिथुनानि भवन्ति - मिथुनस्य प्रजात्यै, प्र प्रजया पशुभि र्मिथुनै र्जायते - यस्यैतो उपधीयन्ते - ये उ।। 7।।❀ चैनो एवँ वेद, शुग्वा अग्नि- स्सोऽध्वर्युँ यजमानं प्रजा श्शुचाऽर्पयति, यदपे उपदधाति - शुच मेवास्य शमयति, नाऽर्ति माच्र्छत्यध्वर्यु-र्न यजमान- श्शाम्यन्ति प्रजा- यत्रैता उपधीयन्ते,ऽपाँ वा एतानि हृदयानि - यदेता आपो, यदेता अप उपदधाति - दिव्याभि रेवैना स्सꣳसृजति - वर्षुक॰ पर्जन्यः।। 8।।❀ भवति, यो वा एतासा मायतन.क्लृप्तिं वेदा- ऽऽयतनवा न्भवति - कल्पतेऽस्मा, अनुसीत मुप दधा-त्येतद्वा आसा मायतन- मेषा क्लृप्ति-र्य एवँ वेदा- ऽऽयतनवा न्भवति- कल्पतेऽस्मै द्वन्द्व, मन्यो उप दधाति - चतस्रो मध्ये धृत्या, अन्नँ वा इष्टको- एतत्खलु वै साक्षा.दन्नँ- यदेषे चरु- र्यदेत.श्चरु मुपदधाति- साक्षात्।। 9।।❀ एवास्मा अन्न मव रुन्धे, मध्यते उप दधाति - मध्यते एवास्मा अन्न न्दधाति - तस्मा न्मध्यतोऽन्न मद्यते, बार्हस्पत्यो भवति - ब्रह्म वै देवानां बृहस्पति- र्ब्रह्मणैवास्मा अन्न मव रुन्धे, ब्रह्मवर्चस.मसि ब्रह्मवर्चसाय त्वेत्याह - तेजस्वी ब्रह्मवर्चसी भवति - यस्यैष उपधीयते - ये उ चैन मेवँ वेद।। 10।। (अमृत मस्मै जायते यस्यैतो उपधीयन्ते य उ पर्जन्य उपदधाति साक्षा थ्सप्तचत्वारिꣳशच्च। 2।)

❀ भूतेष्टको उप दधा,त्यत्रात्र वै मृत्यु र्जायते - यत्रयत्रैव मृत्यु र्जायते - तत एवैन मव यजते - तस्मा.दग्निचि.थ्सर्व मायु रेति, सर्वे ह्यस्य मृत्यवोऽवेष्टा- स्तस्मादग्निचि न्नाभिचरितवै- प्रत्यगेन मभिचार स्स्तृणुते, सूयते वा एष- योऽग्नि.श्चिनुते, देवसुवा मेतानि हवीꣳषि भव-न्त्येतावन्तो वै देवानाꣳ सवा- स्त एव।। 11। अस्मै सवान्प्र यच्छन्ति - त एनꣳ सुवन्ते, सवोऽग्नि र्वरुणसवो - राजसूयं ब्रह्मसव श्चित्यो, 卐 देवस्य त्वा सवितु॰ प्रसव[122] इत्याह - सवितृप्रसूते एवैनं ब्रह्मणा देवताभि रभिषिञ्च,त्यन्नस्यान्नस्याभिषिञ्च- त्यन्नस्यान्नस्यावरुद्ध्यै, पुरस्ता त्प्रत्यञ्च मभि.षिञ्चति - पुरस्ताद्धि प्रतीचीन मन्न मद्यते, शीर्षतोऽभिषिञ्चति- शीर्षतो ह्यन्न मद्यते, आ मुखा दन्ववस्रावयति- ।। 12। मुखते एवास्मा अन्नाद्य न्दधा,त्यग्नेस्त्वा साम्राज्येनाभि षिञ्चामी-त्याहैष वा अग्ने.स्सव- स्तेनैवैन मभि षिञ्चति,卐--बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामी-त्याह- ब्रह्म वै देवानां बृहस्पति-

122

ब्रह्मणैवैन मभि षिञ्च-फ़तीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामी-त्याहेन्द्रिय मेवास्मि न्नुपरिष्टा द्दधा,त्येतत्।। 13।।❀ वै राजसूयस्य रूपँ- य एवँ विद्वा नग्नि ञ्चिनुते- उभा.वेव लोका.वभि जयति - यश्च राजसूयेनेजानस्य- यश्चाग्निचिति, इन्द्रस्य सुषुवाणस्य दशधेन्द्रियँ वीर्यं परा॓पत- त्तद्देवा स्सौत्रामण्या समभर'2',न्थ्सूयते वा एषे- यो॓ग्नि ञ्चिनुते,॓ग्नि.ञ्चित्वा सौत्रामण्या यजे-तेन्द्रिय.मेव वीर्य॑ सम्भृत्या॓॓त्म न्धत्ते।। 14।। (त एवान्वव स्त्रावय त्येत दृष्टाचत्वारि॑शच्च। 3।)

❀फ़ सजू.रब्दो॓यावभि- फ़ स्सजू.रुषा अरुणीभि- फ़ स्सजू स्सूर्य एतशेन- फ़ सजोषा.वश्विना द॑सोभि-- फ़ स्सजू रग्नि वैश्वानरै इडाभि- र्घृतेन स्वाहा- सँवथ्सरो वा अब्दो- मासा अयावा- उषा अरुणी- सूर्य एतशि- इमे॓ अश्विना- सँवथ्सरो॓ग्नि वैश्वानरः- पशवि इडा- पशवो घृत॑- सँवथ्सरं पशवो॓नु प्र जायन्ते- सँवथ्सरेणैवास्मै पशू न्प्र जनयति, दर्भस्तम्बे जुहोति, यत्।। 15।।❀ वा अस्या अमृतँ यद्वीर्य- न्तद्दर्भा- स्तस्मि न्जुहोति, प्रैव जायते॓न्नादो भवति - यस्यैव.ञ्जुह्व,त्येता वै देवता अग्नेः पुरस्ता.द्भागा-स्ता एव प्रीणा,त्यथो~ चक्षुरेवाग्नेः पुरस्ता.त्प्रति दधा,त्यनन्धो भवति - य एवँ वेदा,॓॓पो वा इद.मग्रे सलिल मासी-थ्स प्रजापतिः पुष्करपर्णे वातो भूतो॓लेलाय,थ्सः।। 16।।❀ प्रतिष्ठा न्नाविन्दत - स एत.दपा ङ्कुलाय मपश्य- त्तस्मि न्नग्नि मचिनुत- तदिय मभव- त्ततो वै स प्रत्यतिष्ठ,द्यां पुरस्ता.दुपदधा- त्तच्छिरो॓भव-थ्सा प्राची दि,ग्या.न्दक्षिणते उपादधा-थ्स दक्षिणः पक्षो॓भव-थ्सा दक्षिणा दि,ग्यां पश्चा.दुपदधा- त्तत्पुच्छ मभव-थ्सा प्रतीची दि,ग्या.मुत्तरते उपादधात्-।। 17।।❀ स उत्तरः पक्षो॓भव-थ्सोदीची दि,ग्या.मुपरिष्टा दुपदधा- त्तत्पृष्ठ मभव-थ्सोर्ध्वा दि,गियँ वा अग्निः पञ्चेष्टक- स्तस्मा.द्यदस्या.ङ्खन-न्त्यभीष्टका न्तृन्द-न्त्यभि शर्करा॑, सर्वा वा इयँ वयोभ्यो नक्त न्दृशे दीप्यते - तस्मा दिमा॑ वया॑सि नक्त.न्नाध्यासते, य एवँ विद्वा नग्नि.ञ्चिनुते - प्रत्येव।। 18।।❀ तिष्ठ-त्यभि दिशो जय,त्याग्नेयो वै ब्राह्मण- स्तस्मा.द्ब्राह्मणाय सर्वासु दिक्ष्वर्धुकः- स्वामेव तद्दिश मन्वे,त्यपाँ वा अग्निः कुलाय- न्तस्मा.दापो॓ग्नि॑ हारुका- स्स्वामेव तद्योनिं प्र विशन्ति।। 19।। (यदलेलायथ्स उत्तरत उपदधादेव द्वात्रि॑शच्च। 4।)

❀ सँवथ्सर मुख्यं भृत्वा- द्वितीये सँवथ्सर आग्नेय मष्टाकपाल न्निर्वपे- दैन्द्र मेकादशकपालँ- वैश्वदेव न्द्वादशकपालं- बार्हस्पत्य.ञ्चरुँ- वैष्णव.न्त्रिकपाल,न्तृतीये सँवथ्सरे॓भिजिता यजेत, यदष्टाकपालो भव-त्यष्टा॓क्षरा गाय-त्र्याग्नेय ङ्गायत्रं प्रातस्सवनं - प्रातस्सवन मेव तेन दाधार- गायत्री.ञ्छन्दो, यदेकादशकपालो भव-त्येकादशाक्षरा त्रिष्टु- गैन्द्र न्त्रैष्टुभं माध्यन्दिन॑ सवनं - माध्यन्दिन मेव सवन

न्तेन दाधार, त्रिष्टुभम्।। 20।। ❀ छन्दो, यद्वादशकपालो भवति - द्वादशाक्षरा जगती - वैश्वदेव.ञ्जागत
न्तृतीयसवन- न्तृतीयसवन मेव तेन दाधार- जगती.ञ्छन्दो, यद्वार्हस्पत्य.श्चरु र्भवति - ब्रह्म वै देवानां
बृहस्पति- र्ब्रह्मैव तेन दाधार, यद्वैष्णव.स्त्रिकपालो भवति - यज्ञो वै विष्णु- र्यज्ञमेव तेन दाधार, यत्तृतीये
सँवथ्सरेऽभिजिता यजतेऽभिजित्यै, यथ्सँवथ्सर मुख्यं बिभ-र्तीममेव।। 21।। ❀ तेन लोकꣳ
स्पृणोति, यद्वितीये सँवथ्सरेऽग्नि.श्चिनुते-ऽन्तरिक्षमेव तेन स्पृणोति, यत्तृतीये सँवथ्सरे यजते-ऽमुमेव
तेन लोकꣳ स्पृणो,त्येतँ वै पर आह्णारः कक्षीवाꣳ औशिजो वीतहव्य श्श्रायस स्त्रसदस्युः पौरुकुथ्स्यः
प्रजाकामा अचिन्वत - ततो वै ते सहस्रꣳसहस्रं पुत्रा नविन्दन्त, प्रथते प्रजया पशुभि- स्तां
मात्रा.माप्नोति- यान्तेऽगच्छन्- य एवँ विद्वा नेत मग्नि.श्चिनुते।। 22।। (दाधार त्रिष्टुभ मिम मेवैव
श्चत्वारि च। 5।)

❀ प्रजापति रग्नि मचिनुत - स क्षुरपवि र्भूत्वाऽतिष्ठ-त्त.न्देवा बिभ्यतो नोपाऽऽय-न्ते छन्दोभि
रात्मान.ञ्छादयित्वोपाऽऽय,न्तच्छन्दसा ञ्छन्दस्त्वं, ब्रह्म वै छन्दाꣳसि, ब्रह्मणे एतद्रूपँ-
यत्कृष्णाजिन,ङ्कार्ष्णी॒ उपानहा.वुप मुञ्चते - छन्दोभि रेवाऽऽत्मान.ञ्छादयित्वाऽऽग्नि मुप चर-
त्यात्मनोऽहिꣳसायै, देवनिधिर्वा एष निधीयते - यदग्निः,।। 23। अन्ये वा वै निधि मगुप्तँ विन्दन्ति - न
वा प्रति प्र जाना,त्युखा माक्राम-त्यात्मान मेवाधिपा.ङ्कुरुते गुप्त्या- अथो॒ खल्वाहु- र्नाऽऽक्राम्येति,
नैर्ऋत्युखा, यदाक्रामे- न्निर्ऋत्या आत्मान मपि दध्या,त्तस्मा न्नाऽऽक्रम्या, पुरुषशीर्ष मुप दधाति
गुप्त्या, अथो यथा ब्रूया- देतन्मे गोपायेति - तादृगेव तत्,।। 24।। ❀ प्रजापतिर्वा अथर्वा-ऽग्नि रेव
दध्य ङ्ङाथर्वण- स्तस्येष्टका अस्था,न्येतꣳ ह वाव तदृषि रभ्यनूवा-चेन्द्रो दधीचो अस्थभि.रिति,
यदिष्टकाभि रग्नि.श्चिनोति - साऽऽत्मान मेवाग्नि.श्चिनुते, साऽऽत्माऽमुष्मिन्लोके भवति - य एवँ वेद,
शरीरँ वा एत.दग्ने- र्यच्चित्य आत्मा वैश्वानरो, यच्चिते वैश्वानर.ञ्जुहोति - शरीरमेव सꣳस्कृत्य।।
25।। ❀ अभ्यारोहति, शरीरँ वा एतद्यजमान स्सꣳस्कुरुते - यदग्नि.श्चिनुते, यच्चिते वैश्वानर,ञ्जुहोति -
शरीरमेव सꣳस्कृत्याऽऽत्मनाऽभ्यारोहति, तस्मा.त्तस्य नाव द्यन्ति - जीवन्नेव देवा.नप्येति, 卐
वैश्वानर्यर्चा[123] ❀ पुरीष मुप दधा-तीयँ वा अग्नि र्वैश्वानर- स्तस्यैषा चिति- र्यत्पुरीष,मग्नि.मेव
वैश्वानर.श्चिनुते, एषा वा अग्नेः प्रिया तनू- र्यद्वैश्वानरः, प्रिया.मेवास्य तनुव मव रुन्धे।। 26।। (अग्निष्ट
थ्सꣳस्कृत्याग्ने र्दश च। 6।)

123

अ॒ग्नेर्वै दी॒क्षया॑ दे॒वा वि॒राज॑ माप्नुव,न्ति॒स्रो रात्री॑ र्दीक्षि॒त स्स्या॒-त्त्रिप॑दा वि॒रा-ड्वि॒राज॑ माप्नोति॒, षड्रात्री॑ र्दीक्षि॒त स्स्या-थ्षड्वा॑ ऋ॒तव स्सँव॑थ्सर- स्सँव॑थ्सरो वि॒रा-ड्वि॒राज॑ माप्नोति॒, दश॒ रात्री॑ र्दीक्षि॒त स्स्या-द्दशा॑क्षरा वि॒रा-ड्वि॒राज॑ माप्नोति॒, द्वाद॑श॒ रात्री॑ र्दीक्षि॒त स्स्या-द्द्वाद॑श॒ मासा॑ स्सँव॑थ्स॒र- स्सँव॑थ्स॒रो वि॒रा-ड्वि॒राज॑ माप्नोति॒, त्रयो॑द॒श रात्री॑ र्दीक्षि॒त स्स्या॒- त्त्रयो॑दश।। 27।। मासा॑ स्सँव॑थ्स॒र- स्सँव॑थ्स॒रो वि॒रा-ड्वि॒राज॑ माप्नोति॒, पञ्च॑द॒श रात्री॑ र्दीक्षि॒त स्स्या॒-त्पञ्च॑द॒श वा॑ अ॒र्धमा॒सस्य॒ रात्र॑यो-ऽर्धमा॒सश॒ स्सँव॑थ्स॒र॒ आ॑प्यते - सँव॑थ्स॒रो वि॒रा-ड्वि॒राज॑ माप्नोति॒, स॒प्तद॑श॒ रात्री॑ र्दीक्षि॒त स्स्या-द्द्वाद॑श॒ मासाः॒-पञ्च॒र्तव॒- स्से॒ सँव॑थ्स॒र- स्सँव॑थ्स॒रो वि॒रा-ड्वि॒राज॑ माप्नोति॒, च॒तुर्विं॑शति॒ꣳ रात्री॑ र्दीक्षि॒त स्स्या-च्च॒तुर्विं॑शति रर्धमा॒सा स्सँव॑थ्स॒र- स्सँव॑थ्स॒रो वि॒रा-ड्वि॒राज॑ माप्नोति॒, त्रि॒ꣳश॒तꣳ॒ रात्री॑ र्दीक्षि॒त स्स्यात्-।। 28।। त्रि॒ꣳशद॑क्षरा वि॒रा-ड्वि॒राज॑ माप्नोति॒, मास॑ न्दीक्षि॒त स्स्या-द्यो मास॒ स्से॒ सँव॑थ्स॒र- स्सँव॑थ्स॒रो वि॒रा-ड्वि॒राज॑ माप्नोति॒, च॒तुरो॑ मासो॑ दीक्षि॒त स्स्या॑,च्च॒तुरो॑ वा॑ ए॒तं मा॒सो व॒सवो॑ऽबिभरु- स्ते पृ॑थि॒वी मा॑ऽजय न्गाय॒त्री ञ्छन्दो॑,ऽष्टौ रु॒द्रा-स्ते॑ऽन्तरि॑क्ष मा॑ऽजय- न्त्रि॒ष्टुभ॒ ञ्छन्दो॑, द्वाद॑शा॒ऽऽदि॒त्या-स्ते दि॒वमा॑ऽजय- न्जग॑ती॒ ञ्छन्द॒,स्ततो॑ वै ते व्यावृ॑त मगच्छ-ञ्छ्रैष्ठ्य न्दे॒वाना,न्तस्मा॒द्द्वाद॑श मा॒सो भृ॒त्वाऽग्नि.ञ्चि॑न्वीत॒, द्वाद॑श॒ मासा॑ स्सँव॑थ्स॒र- स्सँव॑थ्स॒रो॑ऽग्नि श्चित्य- स्तस्याहोरा॒त्राणी॒ष्टका॑, आप्तेष्टक मेन.ञ्चिनुते-ऽथो॑ व्यावृ॑तमेव ग॑च्छति॒ - श्रैष्ठ्य॑ꣳ समा॒नाना॑म्।। 29।। (स्याच्चयो॑दश त्रि॒ꣳश॒तꣳ॒ रात्री॑ र्दीक्षि॒त स्स्याद्वै ते॑ऽष्टावि॑ꣳशतिश्च। 7।)

सु॒व॒र्गाय॒ वा॑ ए॒ष लो॒काय॑ चीयते॒ यद॒ग्नि,स्तँ॑ यन्नान्वा॑रो॒हे- थ्सुव॒र्गाल्लो॒का द्यज॑मानो हीयेत, पृ॑थि॒वी मा॑ऽक्रमिषं - प्रा॒णो मा॒ मा हा॑सी, द॒न्तरि॑क्ष॒ मा॑ऽक्रमिषं - प्र॒जा मा॒ मा हा॑सी, दि॒व मा॑ऽक्रमिषꣳ॒ - सुव॑ रग॒न्मे-त्या,हैष वा॑ अ॒ग्ने र॑न्वारो॒ह- स्तेनै॒वैन॑ म॒न्वारो॑हति- सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै, य॒त्पक्ष॑संमितां मिनु॒यात्-।। 30।। कनी॑याꣳसँ य॒ज्ञक्र॑तु मु॒पेया॒-त्पापी॑य.स्यस्या॒ऽऽत्मनः॑ प्र॒जा स्या॒,द्वेदि॑संमितां मिनोति॒ - ज्याया॑ꣳसमे॒व य॒ज्ञक्र॑तु मु॒पैति॒ - नास्या॒ऽऽत्मनः॑ पापी॑यसी प्र॒जा भ॑वति, सा॒ह॒स्र.ञ्चि॑न्वीत प्रथ॒म ञ्चि॑न्वा॒न- स्स॒ह॒स्र॑संमितो॒ वा॑ अ॒यँ लो॒क- इ॒ममे॒व लो॒क म॒भि ज॑यति, द्वि॒षा॒ह॒स्र.ञ्चि॑न्वीत द्वि॒ती॑य ञ्चि॑न्वा॒नो- द्वि॒षा॒ह॒स्रँ॑ वा॑ अ॒न्तरि॑क्ष- म॒न्तरि॑क्ष मे॒वाभि ज॑यति, त्रि॒षा॒ह॒स्र.ञ्चि॑न्वीत तृ॒तीय॑ ञ्चि॑न्वा॒नः-।। 31।। त्रि॒षा॒ह॒स्रो वा॑ अ॒सौ लो॒को-ऽमुमे॒व लो॒क म॒भि ज॑यति, जा॒नु॒द॒घ्न.ञ्चि॑न्वीत प्रथ॒म.ञ्चि॑न्वा॒नो- गा॒य॒त्रियै॒वेमँ॑ लो॒क म॒भ्यारो॑हति, ना॒भि॒द॒घ्न.ञ्चि॑न्वीत द्वि॒तीय.ञ्चि॑न्वा॒न- स्त्रि॒ष्टुभै॒वान्तरि॑क्ष म॒भ्यारो॑हति, ग्री॒व॒द॒घ्न.ञ्चि॑न्वीत तृ॒तीय.ञ्चि॑न्वा॒नो - जग॑त्यै॒वामुँ लो॒क म॒भ्यारो॑हति,

नाग्नि.श्चित्वा रामा मुपेया- दयोनौ रेतो धास्यामीति, न द्वितीय.श्चित्वा-ऽन्यस्य स्त्रियम्।। 32।। ❀ उपेया,न्न तृतीय.श्चित्वा- काञ्चनोपेया,द्रेतो वा एत.न्नि धत्ते - यदग्नि.श्चिनुते - यदुपेया- द्रेतसा व्यृध्येता,ऽथो~ खल्वाहु रप्रजस्य- न्तद्य.न्नोपेयादिति, यद्रेतस्सिचा.वुपदधाति - ते~ एव यजमानस्य रेतो बिभृत- स्तस्मा.दुपेया- द्रेतसोऽस्कन्दाय, त्रीणि वाव रेताꣳसि - पिता पुत्रः पौत्रः,।। 33।। ❀ यद्वे~ रेतस्सिचा.वुपदध्या-द्रेतोऽस्य विच्छिन्द्या,त्तिस्र उप दधाति - रेतस स्सन्तत्या, इयँ वाव प्रथमा रेतस्सि-ग्वाग्वा इय- न्तस्मा.त्पश्य.न्तीमां- पश्यन्ति वाचँ वदन्ती, मन्तरिक्ष.न्द्वितीया- प्राणो वा अन्तरिक्ष- न्तस्मा.न्नान्तरिक्षं पश्यन्ति- न प्राण,मसौ तृतीया - चक्षुर्वा असौ - तस्मा त्पश्य.न्त्यमूं- पश्यन्ति चक्षु, र्यजुषेमाञ्च।। 34।। ❀ अमू.श्चोप दधाति- मनसा मध्यमा-मेषाँ लोकानां क्लृप्त्या- अथो~ प्राणाना,-卐 मिष्टो यज्ञो भृगुभि राशीर्दा वसुभि 卐 स्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीये-त्याह स्तुतशस्त्रे~ एवैतेन दुहे, 卐 पिता मातरिश्वाऽच्छिद्रा पदा धा अच्छिद्रा उशिजः पदाऽनु तक्षु- स्सोमो विश्ववि.न्नेता नेष.द्बृहस्पति रुक्थामदानि शꣳसिष-दित्या हैतद्वा अग्ने.रुक्थ- न्तेनैवैन मनु शꣳसति।। 35।। (मिनुया त्तृतीय श्चिन्वान स्त्रियं पौत्रश्च वै सप्त च। 8।)

❀ सूयते वा एषोऽग्नीनाँ- य उखायां भ्रियते, यदध.स्सादये- द्गर्भाः प्रपादुका.स्स्यु,रथो~ यथा सवा.त्प्रत्यवरोहति - तादृगेव.त,दासन्दी सादयति - गर्भाणा न्धृत्या अप्रपादाया-ऽथो~ सव.मेवैन.ङ्करोति, गर्भो वा एष यदुख्यो- योनि श्शिक्यँ, यच्छिक्या.दुखा.न्निरूहे- द्योने र्गर्भ न्निरूहण्या,थ्षडुद्यामꣳ शिक्यं भवति - षोढाविहितो वै।। 36।। ❀ पुरुष- आत्मा च शिरश्च चत्वार्यङ्गा- न्यात्मन्नेवैनं बिभर्ति, प्रजापतिर्वा एष यदग्नि- स्तस्योखा चोलूखलञ्च स्तनौ- ता.वस्य प्रजा उप जीवन्ति, यदुखा.ञ्चोलूखल.ञ्चोपदधाति - ताभ्यामेव यजमानोऽमुष्मि न्लोकेऽग्नि न्दुहे, सँवथ्सरो वा एष यदग्नि- स्तस्य त्रेधाविहिता इष्टकाः- प्राजापत्या वैष्णवीः।। 37।। ❀ वैश्वकर्मणी,रहोरात्राण्येवास्य प्राजापत्या, यदुख्यं बिभर्ति- प्राजापत्या एव तदुप धत्ते, यथ्समिध आदधाति - वैष्णवा वै वनस्पतयो - वैष्णवीरेव तदुप धत्ते, यदिष्टकाभि रग्नि.श्चिनो-तीयँ वै विश्वकर्मा- वैश्वकर्मणी रेव तदुप धत्ते, तस्मादाहु- स्त्रिवृ.दग्नि.रिति, तँ वा एतँ यजमान एव चिन्वीत, यदस्यान्य श्चिनुया- द्य.त्त न्दक्षिणाभि र्न राधये- दग्निमस्य वृञ्जीत, योऽस्याग्नि.श्चिनुया- त्तन्दक्षिणाभी राधये- दग्निमेव तथ्स्पृणोति।। 38।। (षोढाविहितो वै वैष्णवी रन्यो विꣳशतिश्च। 9।)

❀ प्रजापति.रग्नि.मचिनु.तर्तुभि स्सँवथ्सरँ- वसन्तेनैवास्य पूर्वार्ध मचिनुत- ग्रीष्मेण दक्षिणं पक्षँ- वर्षाभिः पुच्छ९- शरदोत्तरं पक्ष९- हेमन्तेन मध्यं, ब्रह्मणा वा अस्य तत्पूर्वार्ध मचिनुत- क्षत्रेण दक्षिणं पक्षं - पशुभिः पुच्छँ- विशोत्तरं पक्ष- माशया मध्यँ, य एवँ विद्वा नग्नि.श्चिनुते- ऋतुभि रेवैन श्चिनुते,ऽथो~ एतदेव सर्वमव।। 39।। ❀ रुन्धे, शृण्व.न्त्येन मग्नि श्चिक्यान- मत्त्यन्न९- रोचते, इयँ वाव प्रथमा चिति- रोषधयो वनस्पतयः पुरीष, मन्तरिक्ष न्द्वितीया - वया९सि पुरीष,मसौ तृतीया - नक्षत्राणि पुरीषँ, यज्ञ श्चतुर्थी - दक्षिणा पुरीषँ, यजमानः पञ्चमी - प्रजा पुरीषँ, यत्त्रिचितीक.श्चिन्वीत - यज्ञ न्दक्षिणा मात्मानं प्रजा मन्तरिया-त्तस्मा त्पञ्चचितीक श्चेतव्य - एतदेव सर्वङ्ग स्पृणोति, यत्तिस्र श्चितयः-।। 40।। ❀ त्रिवृद्ध्यग्नि, र्यद्वे~ द्विपा.द्यजमानः प्रतिष्ठित्यै, पञ्च चितयो भवन्ति - पाङ्क्तः पुरुषे- आत्मानमेव स्पृणोति, पञ्च चितयो भवन्ति - पञ्चभिः पुरीषै रभ्यूहति - दश सं पद्यन्ते, दशाक्षरो वै पुरुषो- यावानेव पुरुष- स्तङ्स्पृणो,त्यथो~ दशाक्षरा विरा-डन्नँ विरा-ड्विराज्येवान्नाद्ये प्रति तिष्ठति, सँवथ्सरो वै षष्ठी चितिर्-ऋतवः पुरीष९- षड्चितयो भवन्ति- षड्पुरीषाणि- द्वादश सं पद्यन्ते, द्वादश मासा स्सँवथ्सर- स्सँवथ्सर एव प्रति तिष्ठति।। 41।। (अव चितयः पुरीषं पञ्चदश च। 10।)

**वै।का। 13 अश्वमेध ब्राह्मणम् – 4 (त्रयोदशानुवाका: 13)**

❀ रोहितो धूम्ररोहितः कर्कन्धुरोहित.स्ते प्राजापत्या- बभ्रु ररुणबभ्रु श्शुकबभ्रु स्ते रौद्रा- श्श्येत श्श्येताक्ष श्शेतग्रीवस्ते पितृदेवत्या- स्तिस्रः कृष्णा वशा वारुण्य- स्तिस्र श्श्वेता वशा.स्सौर्यो- मैत्राबार्हस्पत्या धूम्रललामा.स्तूपराः।। 42।।

❀ पृश्ञि स्तिरश्चीनपृश्ञि रूर्ध्वपृश्ञि.स्ते मारुताः- फल्गू लोहितोर्णी बलक्षी ता.स्सारस्वत्यः- पृषती स्थूलपृषती क्षुद्रपृषती ता वैश्वदेव्य- स्स्तिस्र श्श्यामा वशाः पौष्णिय- स्तिस्रो रोहिणी र्वशा मैत्रिय- ऐन्द्राबार्हस्पत्या अरुणललामा.स्तूपराः।। 43।। (रोहितः पृश्नि ष्षड्वि९शतिष्षड्वि९शतिः। 11। 12।)

❀ शितिबाहु रन्यत.श्शितिबाहु स्समन्त.शितिबाहु स्त ऐन्द्रवायवा- श्शितिरन्ध्रोऽन्यत श्शितिरन्ध्र स्समन्तशितिरन्ध्र.स्ते मैत्रावरुणा- श्शुद्धवाल स्सर्वशुद्धवालो मणिवाल स्त आश्विना- स्तिस्र श्शिल्पा वशा वैश्वदेव्य- स्तिस्र श्श्येनीः परमेष्ठिने- सोमापौष्णा श्श्यामललामा स्तूपराः।। 44।

❀ उन्नत ऋषभो वामन स्त ऐन्द्रावरुणा- श्शितिककु च्छितिपृष्ठ श्शितिभस त्त ऐन्द्राबार्हस्पत्या- श्शितिपा च्छित्योष्ठ श्शितिभ्रु स्त ऐन्द्रावैष्णवा- स्तिस्र स्सिध्मा वशा वैश्वकर्मण्य- स्तिस्रो धात्रे

पृषोदरी- ऐन्द्रापौष्णा श्श्येतललामा स्तूपराः।। 45।। (शितिबाहु रुन्नतः पञ्चविꣳशतिः पञ्चविꣳशतिः। 13। 14।)

🏺❀ कर्णा स्त्रयो यामा- स्सौम्या स्त्रय श्श्वितिङ्गा- अग्नये यविष्ठाय त्रयो नकुला- स्तिस्रो रोहिणी स्त्र्यव्य.स्ता वसूना- न्तिस्रोऽरुणा दित्यौह्य स्ता रुद्राणाꣳ- सोमैन्द्रा बभ्रुललामा स्तूपराः।। 46।। (कर्णा स्त्रयोविꣳशतिः। 15।)

🏺❀ शुण्ठा स्त्रयो वैष्णवा- अधीलोधकर्णा स्त्रयो विष्णव उरुक्रमाय- लप्सुदिन स्त्रयो विष्णव उरुगायाय- पञ्चावी स्तिस्र आदित्याना- न्त्रिवथ्सा स्तिस्रोऽङ्गिरसा- मैन्द्रावैष्णवा गौरललामा स्तूपराः।। 47। (शुण्ठा विꣳशतिः। 16।)

🏺❀ इन्द्राय राज्ञे त्रय श्शितिपृष्ठा- इन्द्रायाधिराजाय त्रय श्शितिककुदा- इन्द्राय स्वराज्ञे त्रय श्शितिभसद- स्तिस्र स्तुर्यौह्य स्साध्याना- न्तिस्रः पष्ठौह्यो विश्वेषा न्देवाना- माग्नेन्द्राः कृष्णललामा स्तूपराः।। 48।। (इन्द्राय राज्ञे द्वाविꣳशतिः। 17।)

🏺❀ अदित्यै त्रयो रोहितैता- इन्द्राण्यै त्रयः कृष्णैताः- कुहै त्रयोऽरुणैता- स्तिस्रो धेनवो राकायै - त्रयोऽनड्वाह स्सिनीवाल्या- आग्नावैष्णवा रोहितललामा स्तूपराः।। 49।। (अदित्या अष्टादश। 18।)

🏺❀ सौम्या स्त्रयः पिशङ्गा- स्सोमाय राज्ञे त्रय स्सारङ्गाः- पार्जन्या नभोरूपा- स्तिस्रोऽजा मल्हा इन्द्राण्यै- तिस्रो मेष्य आदित्या- द्यावापृथिव्या मालङ्गा.स्तूपराः।। 50।। (सौम्या एकान्न विꣳशतिः। 19।)

🏺❀ वारुणा स्त्रयः कृष्णललामा- वरुणाय राज्ञे त्रयो रोहितललामा- वरुणाय रिशादसे त्रयोऽरुणललामा- श्शिल्पा स्त्रयो वैश्वदेवा- स्त्रयः पृश्ञय स्सर्वदेवत्या- ऐन्द्रासूरा श्श्येतललामा स्तूपराः।। 51।। (वारुणा विꣳशतिः। 20।)

🏺❀ सोमाय स्वराज्ञेऽनोवाहा,वनड्वाहा-विन्द्राग्निभ्या मोजोदाभ्या मुष्टारा,विन्द्राग्निभ्यां बलदाभ्याꣳ सीरवाहा ववी~, द्वे~ धेनू~ भौमी~, दिग्भ्यो- वडबे~, द्वे~ धेनू~ भौमी~, वैराजी~ पुरुषी~, द्वे~ धेनू~ भौमी~, वायव आरोहणवाहा.वनड्वाहौ, वारुणी~ कृष्णे~ वशे~ अराड्यौ, दिव्या.वृषभौ परिमरौ।। 52।। (सोमाय चतुस्त्रिꣳशत्। 21।)

एकादश प्रात.र्गव्याः पशव आ लभ्यन्ते - छगलः कल्माषः किकिदीवि र्विदीगय स्ते त्वाष्ट्रा- स्सौरी र्नव श्श्वेता वशा अनूबन्ध्या भव-न्त्याग्नेय ऐन्द्राग्न आश्विन स्ते विशालयूप आ लभ्यन्ते।। 53। (एकादश पञ्चवि॰शतिः। 22।)

पिशङ्गा स्त्रयो वासन्ता- स्सारङ्गा स्त्रयो ग्रैष्माः- पृषन्त स्त्रयो वार्षिकाः- पृश्ञ्चय स्त्रय श्शारदाः- पृश्ञिसक्था स्त्रयो हैमन्तिका- अवलिप्ता स्त्रय श्शैशिरा- स्सँवथ्सराय निवक्षसः।। 54।। (पिशङ्गा वि॰शतिः। 23।)

(रोहितः कृष्णा धूम्रललामाः पृश्ञि श्श्यामा अरुणललामा श्शितिबाहु श्शिल्पा श्श्येनी श्श्यामललामा उन्नत स्सिध्मा धात्रे पौष्णा श्श्येतललामाः कर्णा बभ्रुललामा श्शुण्ठा गौरललामा इन्द्राय कृष्णललामा अदित्यै रोहितललामा स्सौम्या मालङ्गा वारुणा स्सूरा श्श्येतललामा दश।)

(हिरण्यवर्णा अपा ङ्ब्रह्मान्भूतेष्टका स्सजू स्सँवथ्सरं प्रजापति स्स क्षुरपवि रग्ने वैं दीक्षया सुवर्गाय तँ यन्न सूयते प्रजापतिर् ऋतुभी रोहितः पृश्ञि श्शितिबाहु रुन्नतः कर्णा श्शुण्ठा इन्द्रायादित्यै सौम्या वारुणा स्सोमायैकादश पिशङ्गा स्त्रयोवि॰शतिः। 23। हिरण्यवर्णा भूतेष्टका श्छन्दो यत्कनीया॰स त्रिवृद्ध्यग्नि र्वारुणा श्चतुःपञ्चाशत्। 54। हिरण्यवर्णा निवक्षसः।)

## पञ्चम काण्डे सप्तमः प्रपाठकः

### आ।का। 5 अग्नि चयन ब्राह्मणम्, मन्त्राश्च – 7 (दशानुवाकाः 10)

यो वा अयथादेवत मग्नि.श्चिनुते- आ देवताभ्यो वृश्च्यते - पापीया न्भवति, यो यथादेवत-न्न देवताभ्य आ वृश्च्यते - वसीया न्भव, त्याग्नेय्या[124] गायत्रिया प्रथमा.श्चिति मभि मृशे- त्रिष्टुभा[125] द्वितीया- ञ्जगत्या[126] तृतीया- मनुष्टुभा[127] चतुर्थी- पङ्क्त्या[128] पञ्चमीं- यथादेवत मेवाग्नि.श्चिनुते- न देवताभ्य आ वृश्च्यते- वसीया न्भव,तीडायै वा एषा विभक्तिः- पशव इडा- पशुभि रेनम्।। 1।। चिनुते, यो वै प्रजापतये प्रतिप्रोच्याग्नि.श्चिनोति - नाऽर्ति मार्च्छ,त्यश्वा.वभित स्तिष्ठेता-ङ्कृष्ण उत्तरत- श्श्वेतो दक्षिण, स्ता.वालभ्येष्टका उप दध्या-देतद्वै प्रजापते रूपं- प्राजापत्योऽश्व- स्साक्षादेव प्रजापतये प्रतिप्रोच्याग्नि.श्चिनोति - नाऽर्ति मार्च्छ,त्येतद्वा अह्नो रूपँ-

124

125

126

127

128

यच्छ्वेतोऽश्वो, रात्रियै कृष्णि, एतदह्नः।। 2।। ❀ रूपँ- यदिष्टकी रात्रियै पुरीष,मिष्टकी उपधास्य.न्छ्वेत मश्व मभि मृशे- त्पुरीष मुपधास्य न्कृष्ण-महोरात्राभ्या मेवैन.श्चिनुते, हिरण्यपात्रं मधोः पूर्ण न्ददाति - मधव्योऽसानीति, 卐 सौर्या चित्रवत्या[129]❀-ऽवेक्षते - चित्रमेव भवति, मध्यन्दिनेऽश्व मव घ्रापय-त्यसौ वा आदित्य इन्द्र- एष प्रजापतिः- प्राजापत्योऽश्व-स्तमेव साक्षादृध्नोति।। 3।। (एन मेत दह्नोऽष्टाचत्वारि॰शच्च। 1।)

❀卐त्वामग्ने वृषभ.श्चेकितानं पुनर्युवान.ञ्जनय न्नुपागाम्। अस्थूरि णो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा स॰ शिशाधि।।

पशवो वा एते यदिष्टका,श्चित्याञ्चित्या मृषभ मुप दधाति- मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय - तस्मा.द्यूथेयूथ ऋषभः।

卐 सँवथ्सरस्य प्रतिमाँ यान्त्वा रात्र्युपाऽऽसते। प्रजा॰ सुवीरा.ङ्कृत्वा विश्वमायु र्व्यश्नवत्।।

प्राजापत्याम्।। 4।।❀ एता मुपदधा-तीयँ वावैषैकाष्टका, यदेवैकाष्टकाया मन्न.ङ्क्रियते - तदेवैतयाऽवरुन्धे, एषा वै प्रजापतेः कामदुघा - तयैव यजमानोऽमुष्मि न्लोकेऽग्नि न्दुहे-

卐 येन देवा ज्योतिषोर्ध्वा उदायन् येनाऽऽदित्या वसवो येन रुद्राः। येनाङ्गिरसो महिमान मानशु स्तेनैतु यजमान स्स्वस्ति।।

सुवर्गाय वा एषि लोकाय।। 5।।❀ चीयते - यदग्नि,र्येन देवा ज्योतिषोर्ध्वा उदाय.न्नित्युख्य॰ समिन्धे- इष्टकी एवैती उप धत्ते वानस्पत्या- स्सुवर्गस्य लोकस्य समष्ट्यै-

卐शताऽऽयुधाय शतवीर्याय शतोतयेऽभिमातिषाहे। शतँ यो न श्शरदो अजीता निन्द्रो नेषदति दुरितानि विश्वा।।

卐 ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी~ वियन्ति। तेषाँ यो अज्यानि मजीति मावहा त्तस्मै नो देवाः।। 6।।❀ परि दत्तेह सर्वे।।

卐 ग्रीष्मो हेमन्त उत नो वसन्त श्शरद्वर्षा स्सुवित.न्नो अस्तु। तेषा मृतूना॰ शतशारदाना न्निवात एषा मभये स्याम।।

卐 इदुवथ्सराय परिवथ्सराय सँवथ्सराय कृणुता बृहन्नमः। तेषाँ वय॰ सुमतौ यज्ञियाना ञ्ज्यो.गजीता अहता स्स्याम।।

---

129

卐 भद्रा.न्न श्श्रेय स्समनैष्ट देवा स्त्वयाऽवसेन समशीमहि त्वा। स नो मयोभूः पितो~।। 7।।❀ आ विशस्व शन्तोकाय तनुवे स्योनः।।

अज्यानी रेतो उप दधा-त्येतो वै देवतो अपराजिता-स्तो एव प्र विशति- नैव जीयते, ब्रह्मवादिनो वदन्ति - यदर्धमासो मासा ऋतव स्सँवथ्सरे ओषधीः पच-न्त्यथ कस्मा दन्याभ्यो देवताभ्य आग्रयण न्निरुप्यत इ-त्येतो हि तद्देवता उदजयन्- यद्दतुभ्यो निर्वपे- द्देवताभ्य स्समद न्दध्या, दाग्रयण न्निरुप्यैतो आहुती जुहो-त्यर्धमासानेव मासा नृतू न्थ्सँवथ्सरं प्रीणाति - न देवताभ्य स्समद न्दधाति, भद्रान्न श्श्रेय स्समनैष्ट देवा इत्याह - हुताद्याय यजमानस्याऽपराभावाय।। 8।। (प्राजापत्याँ लोकाय देवाः पितो दध्या दाग्रयणं पञ्चवि॰शतिश्च। 2।)

❀卐इन्द्रस्य वज्रोऽसि वार्त्रघ्न स्तनूपा नः प्रतिस्पशः। यो नः- पुरस्ता- 卐 -- द्दक्षिणतः- 卐 --पश्चा- 卐 --दुत्तरतो-ऽघायु रभिदास- त्येत॰ सोऽश्मान मृच्छतु।।

देवासुरा स्सँयत्ता आस-न्तेऽसुरा दिग्भ्य आऽबाधन्त - तान्देवा इष्वा च वज्रेण चापानुदन्त, यद्वज्रिणी रुपदधा-तीष्वा चैव तद्वज्रेण च यजमानो भ्रातृव्या नप नुदते, दिक्षूप।। 9।।❀ दधाति, देवपुरा एवैता स्तनूपानीः पर्यूहते, 卐ऽग्नाविष्णू सजोषसेमा वर्धन्तु वा.ङ्गिरः। द्युम्नै र्वाजेभि.रा गतम्।।

ब्रह्मवादिनो वदन्ति - यन्न देवतायै जुह्व,त्यथ किन्देवत्या वसो र्धारे-त्यग्नि र्वसु स्तस्यैषा धारा- विष्णु र्वसु स्तस्यैषा धारा,ऽग्नावैष्णव्यर्चा वसो र्धारा.ञ्जुहोति- भागधेये.नैवैनौ समर्धय-त्यथो एताम्।। 10।।❀ एवाऽऽहुति मायतनवती.ङ्करोति, यत्काम एना.ञ्जुहोति - तदेवाव रुन्धे, रुद्रो वा एष यदग्नि-स्तस्यैते~ तनुवौ- घोराऽन्या- शिवाऽन्या, यच्छतरुद्रीय.ञ्जुहोति - यैवास्य घोरा तनू- स्तान्तेन शमयति, यद्वसोर्धारा.ञ्जुहोति - यैवास्य शिवा तनू-स्ता न्तेन प्रीणाति, यो वै वसो र्धारायै।। 11।।❀ प्रतिष्ठाँ वेद - प्रत्येव तिष्ठति, यदाज्य मुच्छिष्येत - तस्मि न्ब्रह्मौदनं पचे-त्तं ब्राह्मणा श्चत्वारः प्राश्नीयु,रेष वा अग्नि र्वैश्वानरो - यद्ब्राह्मण, एषा खलु वा अग्नेः प्रिया तनू-र्यद्वैश्वानरः- प्रियाया मेवैना न्तनुवां प्रतिष्ठापयति, चतस्रो धेनू र्दद्या- त्ताभि रेव यजमानोऽमुष्मिन्लोकेऽग्नि न्दुहे।। 12।। (उपैता न्धारायै षट्चत्वारि॰शाच्च। 3।)

❀卐चित्ति.ञ्जुहोमि मनसा घृतेन[130]❀-त्याहा-ऽदाभ्या वै नामैषाऽऽहुति र्वैश्वकर्मणी, नैन.ञ्चिक्यानं भ्रातृव्यो दभ्नो-त्यथो देवता एवावरुन्धे, 卐ऽग्ने तमद्ये-ति पङ्क्त्या जुहोति - पङ्क्त्याऽऽहुत्या यज्ञमुखमा

130

रभते, 卐 सप्त ते अग्ने समिध स्सप्त जिह्वा[131]- इत्याह - होत्रा एवाव रुन्धे,ऽग्नि र्देवेभ्योऽपाक्राम.द्भागधेयम्।। 13।।❀ इच्छमान- स्तस्मा एतद्भागधेयं प्रायच्छ- न्नेतद्वा अग्ने रग्निहोत्र- मेतर्हि खलु वा एष जातो- यर्हि सर्व श्चितो, जातायैवास्मा अन्नमपि दधाति, स एनं प्रीतः प्रीणाति - वसीया.न्भवति, ब्रह्मवादिनो वदन्ति - यदेष गार्हपत्य श्चीयते-ऽथ क्वास्याऽऽहवनीय इ-त्यसावादित्य इति ब्रूया- देतस्मिन् हि सर्वाभ्यो देवताभ्यो जुह्वति,।। 14।।❀ य एवँ विद्वा नग्नि.श्चिनुते - साक्षादेव देवता ऋध्नो-

卐त्यग्ने यशस्विन् यशसेम मर्पयेन्द्रावती मपचितीमिहाऽऽवह। अयं मूर्धा परमेष्ठी सुवर्चा स्समानाना मुत्तमश्लोको अस्तु।।

卐 भद्रं पश्यन्त उप सेदु रग्रे तपो दीक्षा मृषय स्सुवर्विदः। ततः क्षत्रं बल मोजश्च जात न्तदस्मै देवा अभि सन्नमन्तु।।

卐 धाता विधाता परमा।। 15।।❀ उत सन्दृ-क्प्रजापतिः परमेष्ठी विराजा। स्तोमा श्छन्दाꣳसि निविदो म आहु रेतस्मै राष्ट्र मभि स.न्नमाम।।

卐 अभ्यावर्तध्व मुप मेत साक मयꣳ शास्ताऽधिपतिर्वो अस्तु। अस्य विज्ञान मनु सꣳ रभध्व मिमं पश्चादनु जीवाथ सर्वे।।

राष्ट्रभृत एता उप दधा-त्येषा वा अग्ने श्चिती राष्ट्रभृ- त्तयैवास्मि न्राष्ट्र न्दधाति - राष्ट्रमेव भवति - नास्माद्राष्ट्रं भ्रꣳशते।। 16।। (भागधेय ञ्जुह्वति परमा राष्ट्र न्दधाति सप्त च। 4।)

❀ यथा वै पुत्रो जातो म्रियत - एवँ वा एष म्रियते - यस्याग्नि.रुख्य उद्वायति, यन्निर्मन्थ्य.ङ्कुर्या-द्विच्छिन्द्या- द्भ्रातृव्यमस्मै जनये,थ्स एव पुनः परीध्य- स्स्वादेवैनँ योने र्जनयति- नास्मै भ्रातृव्य.ञ्जनयति, तमो वा एत.ङ्गृह्णाति - यस्याग्नि रुख्य उद्वायति, मृत्यु स्तमः- कृष्णँ वासः- कृष्णा धेनु र्दक्षिणा, तमसा।। 17।।❀ एव तमो मृत्युमप हते, हिरण्य न्ददाति - ज्योतिर्वै हिरण्य-ञ्ज्योतिषैव तमोऽप हते,ऽथो तेजो वै हिरण्य न्तेज एवाऽऽत्म न्धत्ते, 卐सुवर्न घर्म स्स्वाहा 卐 सुवर्नार्क स्स्वाहा 卐 सुवर्न शुक्र स्स्वाहा 卐 सुवर्न ज्योति स्स्वाहा 卐 सुवर्न सूर्य स्स्वाहा-ऽर्को वा एष यदग्नि,रसा.वादित्यः।। 18।।❀ अश्वमेधो- यदेता आहुती र्जुहो-त्यर्काश्वमेधयो रेव ज्योतीꣳषि सन्दधा,त्येष ह त्वा अर्काश्वमेधी - यस्यैत.दग्नौ क्रियत, आपो वा इद.मग्रे सलिल मासी-थ्स एतां

131

प्रजापतिः प्रथमा.श्चिति मपश्य- त्तामुपाधत्त- तदिय मभव,त्ताँ विश्वकर्मोऽब्रवी-दुप त्वाऽऽयानीति- नेह लोकोऽस्तीति।। 19।। ❀ अब्रवी,थ्स एता न्द्वितीया.श्चिति मपश्य- त्तामुपाधत्त- तदन्तरिक्ष मभव,थ्स यज्ञः प्रजापति मब्रवी- दुप त्वाऽऽयानीति - नेह लोकोऽस्ती.त्यब्रवी,थ्स विश्वकर्माण मब्रवी- दुप त्वाऽऽयानीति- केन मोपैष्यसीति- दिश्याभि रित्यब्रवी,त्तन्दिश्याभि रुपै-त्तौ उपाधत्त - तौ दिशः।। 20।। ❀ अभव'2',न्थ्स परमेष्ठी प्रजापति मब्रवी- दुप त्वाऽऽयानीति - नेह लोकोऽस्ती.त्यब्रवी,थ्स विश्वकर्माणञ्च यज्ञ.ञ्चाब्रवी- दुप वा.मायानीति- नेह लोकोऽस्तीत्यब्रूता॰, स एता न्तृतीया.श्चिति मपश्य- त्तामुपाधत्त - तदसा.वभव,थ्स आदित्यः प्रजापति मब्रवी-दुप त्वा।। 21।। ❀ आऽयानीति - नेह लोकोऽस्ती.त्यब्रवी,थ्स विश्वकर्माणञ्च यज्ञञ्चाब्रवी- दुप वामाऽयानीति- नेह लोकोऽस्तीत्यब्रूता॰, स परमेष्ठिन मब्रवी-दुप त्वाऽऽयानीति - केन मोपैष्यसीति - लोकंपृणये.त्यब्रवी, त्ताँ लोकंपृणयोपै- त्तस्मा.दयातयाम्नी लोकंपृणा-ऽयातयामा ह्यसौ।। 22।। ❀ आदित्य, स्ता.नृषयोऽब्रुव- न्नुप वै आऽयामेति- केन नै उपैष्यथेति - भूम्नेत्यब्रुव, न्तान्द्वाभ्या.श्चितीभ्या मुपाऽऽय-न्थ्स पञ्चचितीक स्समपद्यत, यै एवँ विद्वा.नग्नि.श्चिनुते - भूयानेव भव-त्यभीमा न्लोका.न्जयति, विदुरेन न्देवा - अथो एतासा मेव देवताना॰ सायुज्य.ङ्गच्छति।। 23।। (तमसाऽऽदित्योऽस्तीति दिशः आदित्यः प्रजापति मब्रवी दुप त्वाऽसौ पञ्चचत्वारि॰शच्च। 5।)

❀ वयो वा अग्नि- र्यदग्निचि.त्पक्षिणोऽश्नीया- त्तमेवाग्नि मद्या- दार्ति मार्च्छे,थ्सँवथ्सरँ व्रत.ञ्चरे- थ्सँवथ्सर॰ हि व्रत.न्नाति, पशुर्वा एषे यदग्निर्, हिनस्ति खलु वै तं पशु-र्यै एनं पुरस्ता त्प्रत्यञ्च मुपचरति - तस्मा.त्पश्चा.त्प्राङुपचर्य- आत्मनोऽहि॰सायै 卐 तेजोऽसि तेजो मे यच्छ- पृथिवीँ यच्छ-।। 24।। ❀ पृथिव्यै मा पाहि, 卐 ज्योतिरसि ज्योतिर्मे यच्छा-ऽन्तरिक्षँ यच्छान्तरिक्षा न्मा पाहि 卐 सुवरसि सुवर्मे यच्छ - दिवँ यच्छ दिवो मा पाही- त्या,हैताभिर्वा इमे लोका विधृता, यदेता उपदधा- त्येषाँ लोकानाँ विधृत्यै, स्वयमातृण्णा उपधाय हिरण्येष्टका उप दधा,तीमे वै लोका स्स्वयमातृण्णा- ज्योतिर् हिरण्यँ, यथ्स्वयमातृण्णा उपधाय।। 25।। ❀ हिरण्येष्टका उपदधा-तीमा नेवैताभि र्लोका न्ज्योतिष्मतः कुरुते-ऽथो~ एताभि रेवास्मा इमे लोकाः प्र भान्ति-

卐 यास्ते अग्ने सूर्ये रुच उद्यतो दिव मातन्वन्ति रश्मिभिः। ताभि स्सर्वाभी रुचे जनाय न.स्कृधि।।

卐 या वो देवा स्सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभि स्सर्वाभी रुच.न्नो धत्त बृहस्पते।।

卐 रुच.न्नो धेहि।। 26।।❀ ब्राह्मणेषु रुच॰ राजसु नस्कृधि। रुचँ विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्।।

द्वेधा वा अग्नि.श्चिक्यानस्य यश इन्द्रिय.ङ्गच्छ-त्यग्निँ वा चित-मीजानँ वा, यदेते आहुती जुहो-त्यात्मन्नेव यश इन्द्रिय न्धत्त, ईश्वरो वा एष आर्ति माऽर्तो- योऽग्नि.श्चिन्व.न्नधिक्रामति, 卐 तत्त्वा यामि ब्रह्मणा वन्दमान[132]❋ इति वारुण्यर्चा।। 27।।❀ जुहुया-च्छान्ति रेवैषाऽग्ने- र्गुप्ति रात्मनो- हविष्कृतो वा, एष योऽग्निश्चिनुते - यथा वै हवि स्स्कन्द-त्येवँ वा एष स्स्कन्दति, योऽग्नि.श्चित्वा स्त्रिय मुपैति-मैत्रावरुण्याऽऽमिक्षया यजेत- मैत्रावरुणता मेवोपै-त्यात्मनोऽस्कन्दाय, यो वा अग्नि मृतुस्थाँ वेदर्तुरृतुरस्मै कल्पमाने एति - प्रत्येव तिष्ठति, सँवथ्सरो वा अग्निः-।। 28।।❀ ऋतुस्था.स्तस्य वसन्त श्शिरो- ग्रीष्मो दक्षिण॰ पक्षो- वर्षा॰ पुच्छ॰- शर.दुत्तर॰ पक्षो- हेमन्तो मध्यं-पूर्वपक्षा.श्चितयो-ऽपरपक्षा॰ पुरीष- महोरात्राणीष्टका, एष वा अग्निर्.ऋतुस्था- य एवँ वेदर्तुरृतुरस्मै कल्पमाने एति - प्रत्येव तिष्ठति, प्रजापतिर्वा एत.ञ्ज्यैष्ठ्यकामो न्यधत्त - ततो वै स ज्यैष्ठ्य मगच्छ-द्य एवँ विद्वा नग्नि.श्चिनुते - ज्यैष्ठ्यमेव गच्छति।। 29।। (पृथिवीँ यच्छ यथ्स्वयमातृण्णा उपधाय धेह्यृचाऽग्नि श्चिनुते त्रीणि च। 6।)

❀卐 यदाकूता थ्समसुस्रो.द्धृदो वा मनसो वा सम्भृत.ञ्चक्षुषो वा। तमनु प्रेहि सुकृतस्य लोकँ यत्रर्षय॰ प्रथमजा ये पुराणाः।।

卐 एत॰ सधस्थ परि ते ददामि यमावहा च्छेवधि ञ्जातवेदाः। अन्वागन्ता यज्ञपतिर्वो अत्र त॰ स्म जानीत परमे व्योमन्न्।।

卐 जानीता देनं परमे व्योम न्देवा स्सधस्था विद रूपमस्य। यदागच्छात्।। 30।।❀ पथिभि र्देवयानै रिष्टापूर्ते~ कृणुता दाविरस्मै।।

卐 सं प्र च्यवध्व मनु सं प्र यातान्ने पथो देवयाना न्कृणुध्वम्। अस्मि'2'न्थ्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत।।

卐 प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा। ऋचेमँ यज्ञन्नो वह सुवर्देवेषु गन्तवे।।

卐 यदिष्टँ यत्परादानँ यद्दत्तँ या च दक्षिणा। तत्।। 31।।❀ अग्नि र्वैश्वकर्मण स्सुव र्देवेषु नो दधत्।।

卐 येना सहस्रँ वहसि येनाग्ने सर्ववेदसम्। तेनेमँ यज्ञ.न्नो वह सुवर्देवेषु गन्तवे।।

132

卐 येनाग्ने दक्षिणा युक्ता यज्ञँ वहन्त्यृत्विजः। तेनेमँ यज्ञ.न्नो वह सुव र्देवेषु गन्तवे।।
卐 येनाग्ने सुकृतः पथा मधो र्धारा व्यानशुः। तेनेमँ यज्ञ.न्नो वह सुव र्देवेषु गन्तवे।।
卐 यत्र धारा अनपेता मधो र्घृतस्य च याः। तदग्नि र्वैश्वकर्मण स्सुव र्देवेषु नो दधत्।। 32।। (आगच्छा त्तद्व्यानशु स्तेनेमँ यज्ञ न्नो वह सुव र्देवेषु गन्तवे चतुर्दश च। 7।)
卐यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः। ये ते अग्ने मेडयो य इन्दव स्तेभि रात्मान.ञ्चिनुहि प्रजानन्न्।।
उथ्सन्नयज्ञो वा एष यदग्निः- किं वाऽहैतस्य क्रियते - किं वा न यद्वा अध्वर्यु रग्ने श्चिन्व.न्नन्तरे-त्यात्मनो वै तदन्तरेति, यास्ते अग्ने समिधो यानि।। 33।। धामेत्या-हैषा वा अग्ने स्स्वयञ्चिति- रग्नि रेव तदग्नि.ञ्चिनोति - नाध्वर्यु रात्मनोऽन्तरेति,-
卐 चतस्र आशाः प्र चरन्त्वग्नय इम.न्नो यज्ञ न्नयतु प्रजानन्न्। घृतं पिन्व न्नजरँ सुवीरं ब्रह्म समिद्भव त्याहुतीनाम्।।
सुवर्गाय वा एष लोकायोप धीयते - यत्कूर्म,श्चतस्र आशाः प्र चरन्त्वग्नय इत्याह-।। 34।। दिश एवैतेन प्रजाना,तीमन्नो यज्ञ न्नयतु प्रजान.न्नित्याह -सुवर्गस्य लोकस्याभिनीत्यै, ब्रह्म समिद्भव.त्याहुतीना मित्याह - ब्रह्मणा वै देवा स्सुवर्गँ लोकमायन्, यद्ब्रह्मण्वत्योपदधाति - ब्रह्मणैव तद्यजमान स्सुवर्गँ लोकमेति, प्रजापतिर्वा एष यदग्नि- स्तस्य प्रजाः पशव श्छन्दाँसि रूपँ, सर्वान् वर्णा निष्टकाना.ङ्कुर्या- द्रूपेणैव प्रजां पशू न्छन्दाँस्यव रुन्धे-ऽथो प्रजाभ्य एवैनं पशुभ्य श्छन्दोभ्योऽवरुध्य चिनुते।। 35।। (यान्यग्नय इत्याहेष्टकानाँ षोडश च। 8।)
卐मयि गृह्णा.म्यग्रे अग्निँ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मयि प्रजां मयि वर्चो दधाम्यरिष्टा स्स्याम तनुवा सुवीराः।।
卐 यो नो अग्निः पितरो हृथ्स्वन्त रमर्त्यो मर्त्याँ आविवेश। तमात्म न्परि गृह्णीमहे वयं मा सो अस्माँ अवहाय परा गात्।।
यदध्वर्यु रात्म.न्नग्नि मगृहीत्वाऽग्नि.ञ्चिनुया-द्योऽस्य स्वोऽग्नि- स्तमपि।। 36।। यजमानाय चिनुया,दग्नि.ङ्खलु वै पशवोऽनूप तिष्ठन्ते-ऽपक्रामुका अस्मा त्पशव स्स्यु,र्मयि गृह्णाम्यग्रे अग्नि मित्याहा-ऽऽत्मन्नेव स्वमग्नि न्दाधार - नास्मा.त्पशवोऽप क्रामन्ति, ब्रह्मवादिनो वदन्ति - यन्मृच्चाऽऽप.श्चाग्ने रनाद्य- मथ कस्मा.न्मृदा चाद्भि श्चाग्नि श्चीयत इति, यदद्भि स्सँयौति-।। 36।।

आपो वै सर्वा देवता - देवताभि रेवैन॑ स॑ सृजति, यन्मृदा चिनो-तीयँ वा अग्नि वैश्वानरो-ऽग्निनैव तदग्नि.श्चिनोति, ब्रह्मवादिनो वदन्ति - यन्मृदा चाद्भि श्चाग्नि श्चीयते-ऽथ कस्मा.दग्नि रुच्यत इति, यच्छन्दोभि श्चिनो-त्यग्नयो वै छन्दा॑सि - तस्मा.दग्नि.रुच्यते,ऽथो इयँ वा अग्नि वैश्वानरो- यत्।। 38।। ❀ मृदा चिनोति - तस्मादग्नि रुच्यते, हिरण्येष्टका उप दधाति - ज्योतिर्वै हिरण्य-ञ्ज्योतिरेवास्मि न्दधा,त्यथो~ तेजो वै हिरण्य- न्तेज एवाऽऽत्म न्धत्ते, यो वा अग्नि॑ सर्वतोमुख.श्चिनुते - सर्वासु प्रजास्वन्न.मत्ति- सर्वा दिशोऽभि जयति, 卐 गायत्री[133]❈ पुरस्तादुप दधाति- 卐 त्रिष्टुभ[134]❈ न्दक्षिणतो- 卐 जगती[135]❈ पश्चा- 卐 दनुष्टुभ[136]❈ मुत्तरतः- 卐 पङ्क्ति[137]❈ मध्य,- एष वा अग्नि स्सर्वतोमुख- स्तँ य एवँ विद्वा॑श्चिनुते - सर्वासु प्रजास्वन्नमत्ति- सर्वा दिशोऽभि जय-त्यथो~ दिश्येव दिशं प्र वयति - तस्माद्दिशि दिक्प्रोता।। 39।। (अपि सँयौति वैश्वानरो यदेष वै पञ्चवि॑शतिश्च। 9।)

❀ प्रजापति रग्नि मसृजत - सोऽस्मात्सृष्टः प्रा.ङ्गाद्रव- त्तस्मा अश्वं प्रत्यास्य,त्स दक्षिणाऽऽऽवर्तत- तस्मै वृष्णिं प्रत्यास्य,त्स प्रत्यङ्ङाऽवर्तत - तस्मा ऋषभं प्रत्यास्य,त्स उदङ्ङाऽवर्तत - तस्मै बस्तं प्रत्यास्य,त्स ऊर्ध्वोऽद्रव-त्तस्मै पुरुषं प्रत्यास्य,द्यत्पशुशीर्षा.ण्युपदधाति - सर्वत एवैनम्।। 40।। ❀ अवरुध्य चिनुते, एता वै प्राणभृत श्चक्षुष्मती रिष्टका- यत्पशुशीर्षाणि, यत्पशुशीर्षा.ण्युपदधाति - ताभि रेव यजमानोऽमुष्मिन्लोके प्राणि-त्यथो~ ताभिरेवास्मा इमे लोकाः प्र भान्ति, मृदाऽभिलिप्योप दधाति मेध्यत्वाय, पशुर्वा एष यदग्नि- रन्नं पशव- एष खलु वा अग्नि- र्यत्पशुशीर्षाणि, यङ्कामयेत कनीयोऽस्यान्नम्।। 41।। ❀ स्यादिति - सन्तरा न्तस्य पशुशीर्षाण्युप दध्या- त्कनीय एवास्यान्नं भवति, यङ्कामयेत समाव.दस्यान्नꣳ स्यादिति - मध्यत स्तस्योप दध्या- त्समाव.देवास्यान्नं भवति, यङ्कामयेत भूयोऽस्यान्नꣳ स्या-दित्यन्तेषु तस्य व्युदूह्योप दध्या- दन्तत एवास्मा अन्नमव रुन्धे - भूयोऽस्यान्नं भवति।। 42।। (एन मस्यान्नं भूयोस्यान्नं भवति। 10।)

133

134

135

136

137

卐स्तेगा न्दꣳष्ट्राभ्यां 卐 मण्डूका न्जम्भ्येभि 卐 रादका ङ्खादे 卐नोर्जꣳ सꣳसूदे 卐नाऽऽरण्य ञ्जाम्बीलेन 卐 मृदं बर्स्वेभि 卐श्शर्कराभि रवका 卐 मवकाभि श्शर्करा 卐 मुथ्सादेन जिह्वा 卐 मवक्रन्देन तालुꣳ 卐 सरस्वती ञ्जिह्वाऽग्रेण।। 43।। (स्तेगा न्द्वाविꣳशतिः। 11।)

卐वाजꣳ हनूभ्या 卐 मपे आस्येना 卐ऽऽदित्यान्छ्मश्रुभि 卐रुपयाम मधरेणौष्ठेन 卐 सदुत्तरेणा 卐ऽन्तरेणानूकाशं 卐 प्रकाशेन बाह्यꣳ 卐 स्तनयित्नु न्निर्बाधेन 卐 सूर्याग्नी~ चक्षुभ्याँ 卐 विद्युतौ कनिनकाभ्या 卐 मशनिं मस्तिष्केण 卐 बलं मज्जभिः।। 44।। (वाजं पञ्चविꣳशतिः। 12।)

卐कूर्मान्छफै 卐 रच्छलाभिः कपिञ्जला 卐न्थ्साम कुष्ठिकाभि 卐र्जव ञ्जङ्घाभि 卐रगद ञ्जानुभ्याँ 卐वीर्य ङ्कुहाभ्यां 卐 भयं प्रचालाभ्या 卐ङ्गुहोपपक्षाभ्या 卐 मश्विना वꣳसाभ्या 卐मदितिꣳ शीर्ष्णा 卐 निरृति न्निर्जाल्मकेन शीर्ष्णा।। (45।। ❀ कूर्मा न्त्रयोविꣳशतिः। 13।)

卐योक्र ङ्गृध्राभि 卐 र्युग मानतेन 卐 चित्तं मन्याभि 卐 स्सङ्क्रोशा न्प्राणैः 卐 प्रकाशेन त्वचं 卐 पराकाशेनान्तरां 卐 मशका न्केशै 卐 रिन्द्रꣳ स्वपसा वहेन 卐 बृहस्पतिꣳ शकुनिसादेन 卐 रथ मुष्णिहाभिः।। 46।।(योक्र मेकविꣳशतिः। 14।)

卐मित्रावरुणौ श्रोणीभ्या 卐मिन्द्राग्नी~ शिखण्डाभ्या 卐 मिन्द्राबृहस्पती~ ऊरुभ्या 卐 मिन्द्राविष्णू~ अष्ठीवद्ध्याꣳ 卐 सवितारं पुच्छेन 卐 गन्धर्वा न्छेफेना 卐ऽप्सरसो मुष्काभ्यां 卐 पवमानं पायुना 卐 पवित्रं पोत्राभ्या 卐 माक्रमणꣳ स्थूराभ्यां 卐 प्रतिक्रमण ङ्कुष्ठाभ्याम्।। 47।।

卐इन्द्रस्य क्रोडो 卐ऽदित्यै पाजस्य 卐 न्दिशा ञ्जत्रवो 卐 जीमूता न्हृदयौपशाभ्या 卐 मन्तरिक्षं पुरितता 卐 नभ उदर्यं 卐णेन्द्राणीं प्लीह्ना 卐 वल्मीका न्क्लोम्ना 卐 गिरी न्प्लाशिभि 卐 स्समुद्र मुदरेण 卐 वैश्वानरं भस्मना।। 48।। (मित्रावरुणा विन्द्रस्य द्वाविꣳशति र्द्वाविꣳशतिः। 15। 16।)

卐पूष्णो वनिष्ठु 卐 रन्धाहे स्स्थूरगुदा 卐 सर्पा न्गुदाभिर् 卐 ऋतू न्पृष्टीभि 卐 र्दिवं पृष्ठेन वसूनां प्रथमा 卐 कीकसा रुद्राणा न्द्वितीया 卐ऽऽदित्याना न्तृतीया 卐ऽङ्गिरसा ञ्चतुर्थी 卐 साध्यानां पञ्चमी 卐 विश्वेषा न्देवानाꣳ षष्ठी।। 49।। (पूष्ण श्चतुर्विꣳशतिः। 17।)

卐ओजो ग्रीवाभि 卐र्निरृति मस्थभि 卐 रिन्द्रꣳ स्वपसा वहेन 卐 रुद्रस्य विचल स्स्कन्धो 卐ऽहोरात्रयो र्द्वितीयो 卐ऽर्धमासाना न्तृतीयो 卐 मासा ञ्चतुर्थ 卐 ऋतूनां पञ्चम 卐 स्सँवथ्सरस्य षष्ठः।। 50।। (ओजो विꣳशतिः। 18।)

☸❀卐आनन्द न्नन्दथुना 卐 कामं प्रत्यासाभ्यां 卐 भयꣳ शितीमभ्यां 卐 प्रशिषं प्रशासाभ्याꣳ 卐 सूर्याचन्द्रमसौ वृक्याभ्याꣳ 卐 श्यामशबलौ मतस्नाभ्याँ 卐 व्युष्टिꣳ रूपेण 卐 निम्रुक्ति मरूपेण।। 51।। (आनन्दꣳ षोडश। 19।)

☸❀卐अह र्मांꣳसेन 卐 रात्रिं पीवसा 卐ऽपो यूषेण 卐 घृतꣳ रसेन 卐 श्याँ वसया 卐 दूषीकाभि र्ह्रादुनि 卐 मश्रुभिः पृष्वा 卐 न्दिवꣳ रूपेण 卐 नक्षत्राणि प्रतिरूपेण 卐 पृथिवी.ञ्चर्मणा 卐 छवी.ञ्छव्यो卐पाऽऽकृताय स्वाहा 卐ऽऽलब्धाय स्वाहा 卐 हुताय स्वाहा।। 52।। (अह रष्टाविꣳशतिः। 20।)

☸❀卐अग्नेः पक्षति 卐 स्सरस्वत्यै निपक्षति 卐 स्सोमस्य तृतीया 卐ऽपा ञ्चतु 卐र्थ्योषधीनां पञ्चमी 卐 सँवथ्सरस्य षष्ठी 卐 मरुताꣳ सप्तमी 卐 बृहस्पते रष्टमी 卐 मित्रस्य नवमी 卐 वरुणस्य दश 卐मीन्द्रस्यैकादशी 卐 विश्वेषा न्देवाना न्द्वादशी 卐 द्यावापृथिव्योः पार्श्वँ 卐 यमस्य पाटूरः।। 53।। (अग्ने रेकान्न त्रिꣳशत्। 21।)

☸❀卐वायोः पक्षति 卐 स्सरस्वतो निपक्षति 卐 श्चन्द्रमस स्तृतीया 卐 नक्षत्राणा ञ्चतुर्थी 卐 सवितुः पञ्चमी 卐 रुद्रस्य षष्ठी 卐 सर्पाणाꣳ सप्त 卐म्यर्यम्णोऽष्टमी 卐 त्वष्टु र्नवमी 卐 धातु र्दश 卐मीन्द्राण्या एकाद 卐श्यदित्यै द्वादशी 卐 द्यावापृथिव्योः पार्श्वँ 卐 यम्यै पाटूरः।। 54।। (वायो रष्टाविꣳशतिः। 22।)

☸❀卐पन्था मनूवृग्भ्याꣳ 卐 सन्ततिꣳ स्नावन्याभ्याꣳ 卐 शुका न्पित्तेन 卐 हरिमाणँ यक्ना 卐 हलीक्ष्णा न्पापवातेन 卐 कूश्मा न्छकभि 卐 श्शवर्ता नूवध्येन 卐 शुनो विशसनेन 卐 सर्पा न्लोहितगन्धेन 卐 वयाꣳसि पक्वगन्धेन 卐 पिपीलिकाः प्रशादेन।। 55।। (पन्था न्द्वाविꣳशतिः। 23।)

**वै।का। 13 अश्वमेध मन्त्राः – 15 (त्रयोऽनुवाकाः 3)**

☸❀卐क्रमै रत्यक्रमी.द्वाजी विश्वै र्देवै र्यज्ञियै स्सँविदानः। स नो नय सुकृतस्य लोक न्तस्य ते वयꣳ स्वधया मदेम।। 56।। (क्रमै रष्टादश। 24।)

☸❀卐द्यौस्ते पृष्ठं- पृथिवी सधस्थ- मात्माऽन्तरिक्षꣳ- समुद्रो योनि- स्सूर्यस्ते चक्षु- र्वातः प्राण- श्चन्द्रमा श्श्रोत्रं- मासा श्चार्धमासाश्च पर्वा-ण्यृतवोऽङ्गानि- सँवथ्सरो महिमा।। 57।। (द्यौः पञ्चविꣳशतिः। 25।)

🏺❀卐अग्निः पशु रासी- त्तेनायजन्त- स एतँ लोक मजय,द्यस्मिन्नग्नि- स्स ते लोक- स्तञ्जेष्य-स्यथाव जिघ्र, 卐 वायुः पशु रासी- त्तेनायजन्त- स एतँ लोक मजय- द्यस्मिन्वायु- स्स ते लोक- स्तस्मात्वाऽन्त रेष्यामि- यदि नावजिघ्र, 卐स्यादित्यः पशु रासी-त्तेनायजन्त - स एतँ लोक मजय- द्यस्मि.न्नादित्य- स्स ते लोक- स्तञ्जेष्यसि - यद्यवजिघ्रसि।। 58।। (यस्मिन्नष्टौ च। 26।)

(यो वा अयथादेवत न्त्वामग्न इन्द्रस्य चित्तिँ यथा वै वयो वै यदाकूता द्यास्ते अग्ने मयि गृह्णामि प्रजापति स्सोऽस्माथ्स्तेगान् वाजङ्कूर्मान् योक्रं मित्रावरुणाविन्द्रस्य पूष्ण ओज आनन्द मह रग्ने वायोः पन्थाङ्कमै द्यौस्तेऽग्निः पशु रासीथ्षड्विंशतिः। 26। यो वा एवाऽऽहुति मभव न्पथिभि रवरुध्याऽऽनन्द मष्टौपञ्चाशत्। 58। यो वा अयथादेवतँ यद्यवजिघ्रसि।)

## ℧षष्ठकाण्डम्

## षष्ठकाण्डे प्रथमः प्रपाठकः

### सौ।का।1। आध्वर्यव ब्राह्मणम् 1 (एकादशानुवाका: 11)

🏺❀ प्राचीनवꣳशङ्करोति, देवमनुष्या दिशो व्यभजन्त - प्राची न्देवा- दक्षिणा पितरः- प्रतीचीं मनुष्या - उदीचीꣳ रुद्रा, यत्प्राचीनवꣳश.ङ्करोति- देवलोक मेव तद्यजमान उपाऽऽवर्तते, परिश्रय-त्यन्तर्हितो हि देवलोको मनुष्यलोका,न्नास्माल्लोका थ्स्वेतव्य मिवेत्याहुः - को हि तद्वेद- यद्यमुष्मि न्लोकेऽस्ति वा न वेति, दिक्ष्वतीकाशा न्करोति-।। 1।।❀ उभयो र्लोकयो रभिजित्यै, केशश्मश्रु वपते - नखानि निकृन्तते, मृता वा एषा त्वगमेध्या- यत्केशश्मश्रु- मृतामेव त्वच ममेध्या मपहत्य यज्ञियो भूत्वा मेध मुपै,त्यङ्गिरस स्सुवर्गँ लोकँ यन्तो-ऽफ्सु दीक्षातपसी प्रावेशय,न्नफ्सु स्नाति - साक्षादेव दीक्षातपसी~ अवरुन्धे, तीर्थे स्नाति - तीर्थे हि ते तां प्रावेशय,न्तीर्थे स्नाति-।। 2।।❀ तीर्थमेव समानानां भव, त्यपोऽश्ञा-त्यन्तरत एव मेध्यो भवति, वाससा दीक्षयति - सौम्यँ वै क्षौम न्देवतया - सोम मेष देवता मुपैति - यो दीक्षते, सोमस्य तनू रसि तनुवं मे पाहीत्याह - स्वामेव देवता मुपै-त्यथो~ आशिष मेवैता माशास्ते,ऽग्ने स्तूषाधानँ- वायो र्वातपानं- पितृणा न्नीवि- रोषधीनां प्रघातः-।। 3।।❀ आदित्यानां प्राचीनतानो- विश्वेषा न्देवाना मोतु- र्नक्षत्राणा मतीकाशा,स्तद्वा एत त्सर्वदेवत्यँ यद्वासो, यद्वाससा दीक्षयति - सर्वाभि रेवैन न्देवताभि र्दीक्षयति, बहिःप्राणो वै मनुष्य- स्तस्याशनं प्राणोऽश्ञाति - सप्राण एव दीक्षित आशितो भवति - यावा नेवास्य प्राण- स्तेन सह मेध मुपैति, घृत न्देवानां- मस्तु पितृणा- न्निष्पक्कं मनुष्याणा- न्तद्वै।। 4।।❀ एत त्सर्वदेवत्यँ यन्नवनीतँ, यन्नवनीतेनाभ्यङ्क्ते - सर्वा एव देवताः

प्रीणाति, प्रच्युतो वा एषोऽस्मा ल्लोका- दगतो देवलोकँ- यो दीक्षितो,ऽन्तरेव नवनीत- न्तस्मा न्नवनीतेनाभ्यङ्क्ते-ऽनुलोमँ यजुषा व्यावृत्त्या, इन्द्रो वृत्र मह- न्तस्य कनीनिका पराऽपत- त्तदाऽञ्जन मभव,द्यदाऽङ्क्ते - चक्षु रेव भ्रातृव्यस्य वृङ्क्ते, दक्षिणं पूर्व माऽङ्क्ते-।। 5।। ❀ सव्य९ हि पूर्वं मनुष्या आऽञ्जते, न निधावते - नीव हि मनुष्या धावन्ते, पञ्च कृत्व आऽङ्क्ते - पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञ मेवाव रुन्धे, परिमित माऽङ्क्ते-ऽपरिमित९ हि मनुष्या आऽञ्जते, सतूलयाऽऽङ्क्ते-ऽपतूलया हि मनुष्या आऽञ्जते व्यावृत्त्यै, यदपतूलयाऽऽञ्जीत- वज्र इव स्या-थ्सतूलयाऽऽङ्क्ते मित्रत्वाय, 6।। ❀ इन्द्रो वृत्र मह '2' न्थ्सो1(ओ)ऽपो1(ओ) ऽभ्यम्रियत, तासाँ यन्मेध्यँ यज्ञिय९ सदेव मासी- त्तदपोदक्राम-त्ते दर्भा अभवन्, यद्दर्भपुञ्जीलैः पवयति - या एव मेध्या यज्ञिया स्सदेवा आप- स्ताभि रेवैनं पवयति, द्वाभ्यां पवय- त्यहोरात्राभ्या मेवैनं पवयति, त्रिभिः पवयति - त्रय इमे लोका- एभिरेवैनँ लोकैः पवयति, पञ्चभिः।। 7।। ❀ पवयति - पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञायैवैनं पवयति, षड्भिः पवयति - षड्वा ऋतव -ऋतुभि रेवैनं पवयति, सप्तभिः पवयति- सप्त छन्दा९सि- छन्दोभि रेवैनं पवयति, नवभिः पवयति - नव वै पुरुषे प्राणा- स्सप्राण मेवैनं पवय, त्येकवि९शत्या पवयति - दश हस्त्या अङ्गुलयो- दश पद्या -आत्मैकवि९शो- यावानेव पुरुष- स्तमपरिवर्गं।। 8।। ❀ पवयति, चित्पतिस्त्वा पुना त्वित्याह - मनो वै चित्पति- र्मनसैवैनं पवयति, वाक्पति.स्त्वा पुना त्वित्याह - वाचैवैनं पवयति, देव स्त्वा सविता पुना त्वित्याह - सवितृप्रसूत एवैनं पवयति, तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेय मित्याहा-ऽऽशिष मेवैता मा शास्ते।। 9।। (अतीकाशा न्करो त्यवेशय न्तीर्थे स्नाति प्रघातो मनुष्याणा न्तद्वा आऽङ्क्ते मित्रत्वाय पञ्चभि रपरिवर्ग मष्टाचत्वारि९शच्च। 1।)

❀ यावन्तो वै देवा यज्ञायापुनत- त एवाभवन्, य एवँ विद्वान् यज्ञाय पुनीते - भवत्येव, बहिः पवयित्वाऽन्तः प्रपादयति - मनुष्यलोक एवैनं पवयित्वा पूत न्देवलोकं प्रणय,त्यदीक्षिति एकयाऽऽहुत्येत्याहु,स्स्रुवेण चतस्रो जुहोति दीक्षितत्वाय - स्रुचा पञ्चमीं, पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञ मेवाव रुन्धे, आकूत्यै प्रयुजेऽग्नये।। 10।। ❀ स्वाहेत्याहा-ऽऽकूत्या हि पुरुषो यज्ञ मभि प्रयुङ्क्ते यजेयेति, मेधायै मनसेऽग्नये स्वाहेत्याह - मेधया हि मनसा पुरुषो यज्ञ मभिगच्छति, सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह - वाग्वै सरस्वती- पृथिवी पूषा- वाचैव पृथिव्या यज्ञं प्रयुङ्क्त, आपो देवी बृहती र्विश्वशम्भुव इत्याह- या वै वर्ष्या- स्ताः।। 11।। ❀ आपो देवी बृहती र्विश्वशम्भुवो, यदेत.द्यजुर्न ब्रूया- द्दिव्या आपोऽशान्ता इमँ लोक मागच्छेयु,रापो देवी बृहती र्विश्वशम्भुव इत्याहा-ऽस्मा एवैना लोकाय

शमयति- तस्माच्छान्तौ इमँ लोक मागच्छन्ति, द्यावापृथिवी~ इत्याह- द्यावापृथिव्योर्हि यज्ञ, उर्वन्तरिक्ष मित्याहा-ऽन्तरिक्षे हि यज्ञो, बृहस्पति.र्नो हविषा वृधातु।। 12।।❀ इत्याह - ब्रह्म वै देवानां बृहस्पति- र्ब्रह्मणैवास्मै यज्ञ मवरुन्धे, यद्व्या- द्विधे रिति - यज्ञस्थाणु मृच्छे द्वृधात्वित्याह- यज्ञस्थाणु मेव परिवृणक्ति, प्रजापति र्यज्ञ मसृजत - सोऽस्माथ्सृष्टः पराङै-थ्स प्र यजु रव्लीना- त्प्रसाम तमृगुदयच्छ,द्यद्गुदयच्छ- त्तदौद्ग्रहण.स्यौद्ग्रहणत्व,मृचा।। 13।।❀ जुहोति - यज्ञस्योद्यत्यै, अनुष्टुप्छन्दसा मुदयच्छ दित्याहु- स्तस्मा दनुष्टुभा जुहोति- यज्ञस्योद्यत्यै, द्वादश वाथ्सबन्धा न्युदयच्छ न्नित्याहु- स्तस्मा.द्वादशभि र्वाथ्सबन्धविदो दीक्षयन्ति, सा वा एषर्गनुष्टु.ग्वागनुष्टु,ग्यदेतयर्चा दीक्षयति- वाचैवैनꣳ सर्वया दीक्षयति, विश्वे देवस्य नेतु रित्याह- सावित्र्येतेन, मर्तो वृणीत सख्यं।। 14।।❀ इत्याह - पितृदेवत्यैतेन, विश्वे राय इषुध्यसीत्याह- वैश्वदेव्येतेन, द्युम्नँ वृणीत पुष्यस इत्याह- पौष्ण्येतेन, सा वा एषर्ख्सर्वदेवत्या, यदेतयर्चा दीक्षयति- सर्वाभि रेवैन न्देवताभि र्दीक्षयति, सप्ताक्षरं प्रथमं पद- मष्टाऽक्षराणि त्रीणि, यानि त्रीणि ता.न्यष्टावुप यन्ति, यानि चत्वारि- तान्यष्टौ, यदष्टाक्षरा- तेन।। 15।।❀ गायत्री, यदेकादशाक्षरा- तेन त्रिष्टु,ग्यद्वादशाक्षरा- तेन जगती, सा वा एषर्ख्सर्वाणि छन्दाꣳसि, यदेतयर्चा दीक्षयति- सर्वैभिरेवैन.ञ्छन्दोभि र्दीक्षयति, सप्ताक्षरं प्रथमं पदꣳ- सप्तपदा शक्करी- पशव श्शक्करी- पशू नेवावरुन्धे, एकस्मा.दक्षरा दनाप्तं प्रथमं पद, न्तस्माद्य.द्वाचोऽनाप्त- न्तन्मनुष्या उप जीवन्ति, पूर्णया जुहोति- पूर्ण इव हि प्रजापतिः- प्रजापते राप्त्यै, न्यूनया जुहोति - न्यूनाद्धि प्रजापतिः प्रजा असृजत - प्रजानाꣳ सृष्ट्यै।। 16।। (अग्नये ता वृधा त्वचा सख्य न्तेन जुहोति पञ्चदश च। 2।)

❀ ऋख्सामे~ वै देवेभ्यो यज्ञायातिष्ठमाने~ कृष्णो रूप.ङ्कृत्वाऽपक्रम्यातिष्ठता, न्तेऽमन्यन्त - यँ वा इमे~ उपावथ्स्र्यत- स्स इदं भविष्यतीति, ते~ उपामन्त्रयन्त - ते~ अहोरात्रयो र्महिमान मपनिधाय देवा नुपाऽऽवर्तेता,मेषे वा ऋचो वर्णो- यच्छुक्ल ङ्कृष्णाजिन,स्यैषे साम्नो- यत्कृष्ण,मृख्सामयो श्शिल्पे~ स्थे इत्या.हर्ख्सामे~ एवाव रुन्धे, एषः।। 17।।❀ वा अह्नो वर्णो- यच्छुक्ल.ङ्कृष्णाजिन,स्यैषे रात्रियै - यत्कृष्णँ, यदेवैनयो स्तत्र न्यक्त- न्तदेवाव रुन्धे, कृष्णाजिनेन दीक्षयति, ब्रह्मणो वा एतद्रूपँ- यत्कृष्णाजिनं - ब्रह्मणैवैन न्दीक्षय,तीमा न्धियꣳ शिक्षमाणस्य देवेत्याह - यथायजु.रेवैत,द्गर्भो वा एषे- यद्दीक्षित उल्बँ वासः प्रोर्णुते - तस्मात्।। 18।।❀ गर्भाः प्रावृता जायन्ते, न पुरा सोमस्य क्रया.दपोर्ण्वीत, यत्पुरा सोमस्य क्रया दपोर्ण्वीत - गर्भाः प्रजानां परापातुका.स्स्युः, क्रीते

सोमेऽपोर्णुते, जायते एव त,दथो~ यथा वसीयाꣳसं प्रत्यपोर्णुते- तादृगेव त,दङ्गिरस स्सुवर्गँ लोकँ यन्ते- ऊर्जँ व्यभजन्त, ततो यदत्यशिष्यत - ते शरा अभव,न्नूर्ग्वै शरो- यच्छरमयी।। 19।। ❀ मेखला भव- त्यूर्ज मेवाव रुन्धे, मध्यत स्सन्नह्यति - मध्यते एवास्मा ऊर्ज न्दधाति - तस्मा न्मध्यते ऊर्जा भुञ्जते, ऊर्ध्वँ वै पुरुषस्य नाभ्यै मेध्य- मवाचीन ममेध्यँ, यन्मध्यत स्सन्नह्यति - मेध्य.ञ्चैवास्यामेध्यञ्च व्यावर्तय,तीन्द्रो वृत्राय वज्रं प्राहर-थ्से त्रेधा व्यभव-थ्स्फ्य स्तृतीयꣳ- रथ स्तृतीयँ- यूप स्तृतीयम्,।। 20।। ❀ येऽन्तश्शरो अशीर्यन्त - ते शरो अभव- न्तच्छराणाꣳ शरत्वँ, वज्रो वै शराः~ क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो, यच्छरमयी मेखला भवति - वज्रेणैव साक्षात्क्षुधं भ्रातृव्यं मध्यतोऽपहते, त्रिवृद्भवति - त्रिवृद्वै प्राण-स्त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति, पृथ्वी भवति - रज्जूनाँ व्यावृत्त्यै, मेखलया यजमान न्दीक्षयति - योक्त्रेण पत्नीं मिथुनत्वाय,।। 21।। ❀ यज्ञो दक्षिणा मभ्यध्याय- त्ताꣳ समभव- त्तदिन्द्रोऽचाय,थ्सोऽमन्यत - यो वा इतो जनिष्यते- स इदं भविष्यतीति - तां प्राविश- त्तस्या इन्द्र एवाजायत, सोऽमन्यत - यो वै मदितोऽपरो जनिष्यते - स इदं भविष्यतीति, तस्या अनुमृश्य योनि माऽच्छिन-थ्सा सूतवशाऽभव-त्तथ्सूतवशायै जन्म,।। 22।। ❀ ताꣳ हस्ते न्यवेष्टयत - तां मृगेषु न्यदधा-थ्सा कृष्णाविषाणाऽभव,दिन्द्रस्य योनिरसि मा मा हिꣳसी.रिति कृष्णविषाणां प्रयच्छति - सयोनि मेव यज्ञ.ङ्करोति - सयोनि.न्दक्षिणाꣳ- सयोनि मिन्द्रꣳ सयोनित्वाय, कृष्यै त्वा सुसस्याया इत्याह - तस्मा.दकृष्टपच्या ओषधयः पच्यन्ते, सुपिप्पलाभ्य.स्त्वौषधीभ्य इत्याह - तस्मा.दोषधयः फल.ङ्गृह्णन्ति, यद्धस्तेन।। 23।। ❀ कण्डूयेत - पामनम्भावुकाः प्रजास्स्यु, र्यथ्स्मयेत - नग्नम्भावुकाः, कृष्णविषाणया कण्डूयते,ऽपिगृह्य स्मयते - प्रजाना.ङ्गोपीथाय, न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणा मवचृते, द्यत्पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणा मवचृते- द्योनिः प्रजानां परापातुका स्या,न्नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति, योनि र्वै यज्ञस्य चात्वालँ - योनिः कृष्णविषाणा - योना.वेव योनि न्दधाति - यज्ञस्य सयोनित्वाय।। 24।। (रुन्ध एष तस्मा च्छरमयी यूप स्तृतीयं मिथुनत्वाय जन्म हस्तेनाष्टाचत्वारिꣳशच्च। 3।)

❀ वाग्वै देवेभ्योऽपाक्राम.द्यज्ञायातिष्ठमाना, सा वनस्पतीन्प्राविश- थ्सैषा वाग्वनस्पतिषु वदति - या दुन्दुभौ - या तूणवे - या वीणायाँ, यद्दीक्षितदण्डं प्रयच्छति - वाच मेवाव रुन्धे, औदुम्बरो भव-त्यूर्ग्वा उदुम्बरे- ऊर्ज मेवावरुन्धे, मुखेन संमितो भवति - मुखते एवास्मा ऊर्ज न्दधाति - तस्मा न्मुखते ऊर्जा भुञ्जते,।। 25।। ❀ क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति, मैत्रावरुणो हि पुरस्ता दृत्विग्भ्यो वाचँ

विभजति - तामृत्विजो यजमाने प्रतिष्ठापयन्ति, स्वाहा यज्ञं मनसेत्याह - मनसा हि पुरुषो यज्ञ मभिगच्छति, स्वाहा द्यावापृथिवीभ्या मित्याह - द्यावापृथिव्योर्हि यज्ञ,स्स्वाहोरो रन्तरिक्षा दित्याहा-ऽन्तरिक्षे हि यज्ञ, स्स्वाहा यज्ञँ वाता दारभ इत्याहा-ऽयम्।। 26।। ❀ वाव यः पवते - स यज्ञ-स्तमेव साक्षा दारभते, मुष्टी~ करोति - वाचँ यच्छति - यज्ञस्य धृत्यै, 卐 अदीक्षिष्टायं ब्राह्मण- इति त्रिरुपा॰श्वाह - देवेभ्य एवैनं प्राऽऽह, त्रिरुच्चै- रुभयेभ्य एवैन न्देवमनुष्येभ्यः प्राऽऽह, न पुरा नक्षत्रेभ्यो वाचँ विसृजे,द्यत्पुरा नक्षत्रेभ्यो वाचँ विसृजे- द्यज्ञँ विच्छिन्द्यात्,।। 27।। ❀ उदितेषु नक्षत्रेषु- 卐व्रत ङ्कृणुते-ति वाचँ विसृजति, यज्ञव्रतो वै दीक्षितो- यज्ञ मेवाभि वाचँ विसृजति, यदि विसृजे- द्वैष्णवी मृच मनु ब्रूया,द्यज्ञो वै विष्णु- र्यज्ञेनैव यज्ञ॰ सन्तनोति, दैवी न्धियं मनामहे इत्याह - यज्ञ मेव तन्म्रदयति, सुपारा नो अस द्वशे इत्याह - व्युष्टि मेवाव रुन्धे,।। 28।। ❀ ब्रह्मवादिनो वदन्ति - होतव्य न्दीक्षितस्य गृहा '3' इ - न होतव्या '3' मिति, हविर्वै दीक्षितो- यज्जुहुया- द्यजमानस्यावदाय जुहुया,द्यन्न जुहुया-द्यज्ञपरु रन्तरिया,द्ये देवा मनोजाता मनोयुजे इत्याह - प्राणा वै देवा मनोजाता मनोयुज- स्तेष्वेव परोऽक्ष.ञ्जुहोति, तन्नेव हुत- न्नेवाहुतङ्, स्वपन्तँ वै दीक्षित॰ रक्षा॰सि जिघा॰स,न्त्यग्निः।। 29।। ❀ खलु वै रक्षोहा-ऽग्ने त्व॰ सु जागृहि- वय॰ सुमन्दिषीमहीत्याहा-ऽग्नि मेवाधिपा.ङ्कृत्वा स्वपिति - रक्षसा मपहत्यै, अव्रत्य मिव वा एष करोति - यो दीक्षित स्स्वपिति, त्वमग्ने व्रतपा असीत्याहा-ऽग्नि र्वै देवानाँ व्रतपति- स्स एवैनँ व्रत मालम्भयति, देव आ मर्त्येष्वेत्याह - देवः।। 30।। ❀ ह्येष सन्मर्त्येषु, त्वँ यज्ञेष्वीड्य इत्या-हैत॰ हि यज्ञेष्वीडते,ऽप वै दीक्षिता थ्सुषुपुष इन्द्रिय न्देवताः क्रामन्ति, विश्वे देवा अभि मामाऽववृत्र न्नित्या-हेन्द्रियेणैवैन न्देवताभि स्सन्नयति, यदेत.द्यजुर्न ब्रूया- द्यावत एव पशू नभि दीक्षेत - तावन्तोऽस्य पशव स्स्यु, रास्वेयत्।। 31।। ❀ सोमाऽऽभूयो भरेत्याहा-ऽपरिमिता नेव पशू नव रुन्धे, चन्द्र.मसि मम भोगाय भवेत्याह - यथादेवत मेवैनाः प्रति गृह्णाति, वायवे त्वा वरुणाय त्वेति - यदेव मेता नानुदिशे- दयथादेवत न्दक्षिणा गमये- दा देवताभ्यो वृश्च्येत, यदेव मेता अनुदिशति - यथादेवत मेव दक्षिणा गमयति - न देवताभ्य आ।। 32।। ❀ वृश्च्यते, देवी रापो अपा न्नपा दित्याह - यद्वो मेध्यँ यज्ञिय॰ सदेव- न्तद्वो माऽव क्रमिष मिति वावैत दाहा,ऽच्छिन्न न्तन्तुं पृथिव्या अनु गेष मित्याह - सेतु मेव कृत्वाऽत्येति।। 33।। (भुञ्जतेऽय.ञ्छिन्द्या.द्रुन्धेऽग्नि राह देव इय द्देवताभ्य आ त्रयस्त्रि॰शच्च। 4।)

❀ देवा वै देवयजन मध्यवसाय - दिशो न प्राजान,न्ते2(ए)ऽन्यो ऽन्य मुपाधाव-न्त्वया प्रजानाम त्वयेति, तेऽदित्याꣳ समध्रियन्त - त्वया प्रजानामेति, साऽब्रवी.द्वरँ वृणै - मत्प्रायणा एव वो यज्ञा-मदुदयना अस.न्निति, तस्मा.दादित्यः प्रायणीयो यज्ञाना- मादित्य उदयनीयः, पञ्च देवता यजति - पञ्च दिशो- दिशां प्रज्ञात्यै,।। 34।। ❀ अथो~ पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञ मेवाव रुन्धे, पथ्याꣳ स्वस्ति मयज- न्प्राची मेव तया दिशं प्राजान,न्नग्निना दक्षिणा- सोमेन प्रतीचीꣳ- सवित्रोदीची-मदित्योर्ध्वां, पथ्याꣳ स्वस्तिँ यजति -प्राची मेव तया दिशं प्रजानाति, पथ्याꣳ स्वस्ति मिष्ट्वाऽग्नीषोमौ यजति - चक्षुषी~ वा एते~ यज्ञस्य - यदग्नीषोमौ - ताभ्या मेवानु पश्यति,।। 35।। ❀ अग्नीषोमा.विष्ट्वा सवितारँ यजति - सवितृप्रसूत एवानु पश्यति - सवितार मिष्ट्वाऽदितिँ यज,तीयँ वा अदिति- रस्या मेव प्रतिष्ठायानु पश्य,त्यदिति मिष्ट्वा मारुती.मृच.मन्वाह - मरुतो वै देवानाँ विशो- देवविश.ङ्खलु वै कल्पमानं मनुष्यविश मनु कल्पते, य.न्मारुती मृच मन्वाह[138]- विशा.ङ्कॢप्त्यै, ब्रह्मवादिनो वदन्ति - प्रयाजव.दननूयाजं प्रायणीय.ङ्कार्य- मनूयाजवत्।। 36।। ❀ अप्रयाज.मुदयनीय मि,तीमे वै प्रयाजा-अमी~ अनूयाजा- स्सैव सा यज्ञस्य सन्तति-स्तत्तथा न कार्य,मात्मा वै प्रयाजाः- प्रजाऽनूयाजा, यत्प्रयाजा नन्तरिया- दात्मान मन्तरिया,द्यदनूयाजा नन्तरिया- त्प्रजा मन्त रिया,द्यतः खलु वै यज्ञस्य विततस्य न क्रियते - तदनु यज्ञः परा भवति, यज्ञं पराभवन्तँ यजमानोऽनु।। 37।। ❀ परा भवति, प्रयाजव.देवानूयाजव. त्प्रायणीय.ङ्कार्य- प्रयाजव.दनूयाजव.दुदयनीय- न्नाऽऽत्मान मन्तरेति- न प्रजा.न्न यज्ञः पराभवति, न यजमानः प्रायणीयस्य निष्कासे उदयनीय मभि निर्वपति - सैव सा यज्ञस्य सन्तति, र्याः प्रायणीयस्य याज्या - यत्ता उदयनीयस्य याज्याः कुर्या- त्पराङमुँ लोक मा रोहे-त्प्रमायुक स्स्या,द्याः प्रायणीयस्य पुरोऽनुवाक्या- स्ता उदयनीयस्य याज्याः करो-त्यस्मि न्नेव लोके प्रति तिष्ठति।। 35।। (प्रज्ञात्यै पश्य त्यनूयाजव द्यजमानोऽनु पुरोऽनुवाक्या स्ता अष्टौ च। 5।)

❀ कद्रूश्च वै सुपर्णी चाऽऽत्मरूपयो रस्पर्धेताꣳ, सा कद्रू स्सुपर्णी मजय,थ्साऽब्रवी- त्तृतीयस्या मितो दिवि सोम- स्त मा हर- तेनाऽऽत्मान न्निष्क्रीणीष्वे,तीयँ वै कद्रू- रसौ सुपर्णी- छन्दाꣳसि सौपर्णेया,स्साऽब्रवी- दस्मै वै पितरौ पुत्रा न्बिभृत- स्तृतीयस्या मितो दिवि सोम- स्त मा हर- तेनाऽऽत्मान न्निष्क्रीणीष्व-।। 39।। ❀ इति मा कद्रू.रवोच.दिति, जग.त्युदपत.च्चतुर्दशाक्षरा सती, साऽप्राऽऽप्य न्यवर्तत - तस्यै द्वे~ अक्षरे~ अमीयेताꣳ- सा पशुभिश्च दीक्षया चाऽऽगच्छ- त्तस्मा

138

ज्जगती छन्दसां पशव्यतमा - तस्मा त्पशुमन्त न्दीक्षोप नमति, त्रिष्टु.गुदपत.त्त्रयोदशाक्षरा सती, साऽप्राऽऽप्य न्यवर्तत - तस्यै द्वे~ अक्षरे~ अमीयेताꣳ- सा दक्षिणाभिश्च।। 40।।❀ तपसा चाऽऽऽगच्छ-त्तस्मा त्त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्ते, एत त्खलु वाव तप इत्याहु-र्य स्स्वन्ददातीति, गायत्र्युदपत.च्चतुरक्षरा स.त्यजया ज्योतिषा - तमस्या अजाऽभ्यरुन्ध, तदजाया अजत्वꣳ, सा सोमञ्चाऽऽऽहर.च्चत्वारि चाक्षराणि - साऽष्टाऽक्षरा समपद्यत, ब्रह्मवादिनो वदन्ति।। 41।।❀ कस्मा त्सत्या-द्गायत्री कनिष्ठा छन्दसाꣳ सती यज्ञमुखं परीयायेति, यदेवाद.स्सोम माऽहर-त्तस्मा द्यज्ञमुखं पर्यै- त्तस्मा त्तेजस्विनीतमा, पद्भ्यान्द्वे~ सवने~ समगृह्णा- न्मुखेनैकँ, यन्मुखेन समगृह्णा- त्तदधय,त्तस्माद्द्वे~ सवने~ शुक्रवती~ प्रातस्सवनञ्च माध्यन्दिनञ्च, तस्मा.त्तृतीयसवन ऋजीष मभि षुण्वन्ति - धीत मिव हि मन्यन्ते,।। 42।।❀ आशिर मव नयति सशुक्रत्वाया,ऽथो~ सम्भर त्येवैन,त्तꣳ सोम माह्रियमाण.ङ्गन्धर्वो विश्वावसुः पर्यमुष्णा-त्स तिस्रो रात्रीः परिमुषितोऽवस- त्तस्मा त्तिस्रो रात्रीः क्रीत स्सोमो वसति, ते देवा अब्रुवन्'2'-त्स्त्रीकामा वै गन्धर्वा- स्स्त्रिया निष्क्रीणामेति, ते वाचꣳ स्त्रिय मेकहायनी.ङ्कृत्वा - तया निरक्रीण'2',न्त्सा रोहि.द्रूप.ङ्कृत्वा- गन्धर्वेभ्यः।। 43।।❀ अपक्रम्यातिष्ठ,त्तद्रोहितो जन्म, ते देवा अब्रुव- न्नप युष्म दक्रमी- न्नास्मा नुपाऽऽवर्तते - विह्वयामहा इति, ब्रह्म गन्धर्वा अवद- न्नगाय न्देवा,स्सा देवा न्गायत उपाऽऽवर्तत, तस्मा.द्गायन्तꣳ स्त्रियः कामयन्ते - कामुका एनꣳ स्त्रियो भवन्ति - य एवँ वेदा,ऽथो~ य एवँ विद्वा नपि जन्येषु भवति, तेभ्य एव दद-त्युत यद्बहुतयाः।। 44।।❀ भव, न्त्येकहायन्या क्रीणाति - वाचैवैनꣳ सर्वया क्रीणाति- तस्मा.देकहायना मनुष्या वाचँ वद,न्त्यकूटया ऽकर्णया ऽकाणया ऽश्लोणया ऽसप्तशफया क्रीणाति - सर्वयैवैन.ङ्क्रीणाति, यच्छ्वेतया क्रीणीया- दुश्चर्मा यजमान.स्स्या, द्यत्कृष्णया-ऽनुस्तरणी स्या-त्प्रमायुको यजमान.स्स्या, द्यद्द्विरूपया- वार्त्रघ्नी स्या,त्स वाऽन्य ञ्जिनीया- त्तँ वाऽन्यो जिनीया, दरुणया पिङ्गाक्ष्या क्रीणा- त्येतद्वै सोमस्य रूपꣳ- स्वयैवैन न्देवतया क्रीणाति।। 45।। (निष्क्रीणीष्व दक्षिणाभिश्च वदन्ति मन्यन्ते गन्धर्वेभ्यो बहुतयाः पिङ्गाक्ष्या दश च। 6।)

❀ तद्धिरण्य.मभव- त्तस्मादद्भ्यो हिरण्यं पुनन्ति, ब्रह्मवादिनो वदन्ति कस्मा.त्सत्या- दनस्थिकेन प्रजाः प्रवीयन्ते-ऽस्थन्वती जायन्त इति, यद्धिरण्य.ङ्घृतेऽवधाय जुहोति - तस्मा दनस्थिकेन प्रजाः प्रवीयन्ते - ऽस्थन्वती जायन्ते, एतद्वा अग्नेः प्रिय न्धाम - यद्घृत- न्तेजो हिरण्य, मिय.न्ते शुक्र तनू रिदँ वर्च इत्याह - सतेजस मेवैनꣳ सतनुम्।। 46।।❀ करो,त्यथो~ सं भर त्येवैनँ, यदबद्ध मवदध्या-

द्गर्भा॰ प्रजानां परापातुका.स्स्यु, र्बद्ध मव दधाति - गर्भाणा न्धृत्यै, निष्टर्क्यं बध्नाति -प्रजानां प्रजननाय, वाग्वा एषा - यथ्सोमक्रयणी, जूरसीत्याह - यद्धि मनसा जवते - तद्वाचा वदति, धृता मनसेत्याह - मनसा हि वाग्धृता, जुष्टा विष्णव इत्याह-।। 47।।❀ यज्ञो वै विष्णु- र्यज्ञायैवैना.ञ्जुष्टा. ङ्करोति, तस्यास्ते सत्यसवस॰ प्रसव इत्याह - सवितृप्रसूता मेव वाच मव रुन्धे, काण्डेकाण्डे वै क्रियमाणे यज्ञ॰ रक्षा॰सि जिघा॰स-,न्त्येष खलु वा अरक्षोहत॰ पन्था- योऽग्नेश्च सूर्यस्य च, सूर्यस्य चक्षु राऽरुह मग्ने रख्ष्ण॰ कनीनिकामित्याह - य एवारक्षोहत॰ पन्था-स्त॰ समारोहति,।। 48।।❀ वाग्वा एषा- यथ्सोमक्रयणी, चिदसि मनाऽसीत्याह - शास्त्येवैना मेत-त्तस्मा च्छिष्टा॰ प्रजा जायन्ते, चिदसीत्याह - यद्धि मनसा चेतयते - तद्वाचा वदति, मनाऽसीत्याह - यद्धि मनसाऽभिगच्छति - तत्करोति, धीरसीत्याह - यद्धि मनसा ध्यायति - तद्वाचा।। 49।।❀ वदति, दक्षिणाऽसीत्याह - दक्षिणा ह्येषा, यज्ञियासीऽत्याह - यज्ञिया मेवैना.ङ्करोति, क्षत्रियाऽसीत्याह - क्षत्रिया ह्येषा,ऽदिति.रस्युभयत.श्शीर्ष्णीत्याह - यदेवाऽऽदित्य॰ प्रायणीयो यज्ञाना - मादित्य उदयनीय- स्तस्मा.देव.माह, यदबद्धा स्या-दयता स्या,द्य.त्पदिबद्धा-ऽनुस्तरणी स्या-त्प्रमायुको यजमान स्स्यात,।। 50।।❀ यत्कर्णगृहीता - वार्त्रघ्नी स्या,थ्स वाऽन्य ज्जिनीया-त्तँ वाऽन्यो जिनीया,न्मित्रस्त्वा पदि बध्ना त्वित्याह - मित्रो वै शिवो देवाना -न्तेनैवैनां पदि बध्नाति, पूषाऽध्वन॰ पात्वित्या-हेयँ वै पू.षेमा मेवास्या अधिपा मक स्समष्ट्या, इन्द्रायाध्यक्षायेत्या-हेन्द्र मेवास्या अध्यक्ष.ङ्करोति,।। 51।।❀ अनु त्वा माता मन्यता- मनु पितेत्याहा-ऽनुमतयैवैनया क्रीणाति, सा देवि देव मच्छेहीत्याह - देवी ह्येषा देव स्सोम, इन्द्राय सोम मित्या-हेन्द्राय हि सोम आह्रियते, यदेत.द्यजुर्न ब्रूया- त्पराच्येव सोमक्रयणीया,द्रुद्रस्त्वाऽऽवर्तय त्वित्याह - रुद्रो वै क्रूरः।। 52।।❀ देवाना- न्तमेवास्यै परस्ता द्दधा.त्यावृत्त्यै, क्रूरमिव वा एत.त्करोति - यद्रुद्रस्य कीर्तयति, मित्रस्य पथेत्याह शान्त्यै, वाचा वा एष विक्रीणीते - यस्सोमक्रयण्या, स्वस्ति सोमसखा पुन रेहि सह रय्येत्याह - वाचैव विक्रीय पुनरात्मन्वाच न्धत्ते, ऽनुपदासुकाऽस्य वाग्भवति- य एवँ वेद।। 53।। (सतनुँ विष्णव इत्याह समारोहति ध्यायति तद्वाचा यजमान स्स्या त्करोति क्रूरो वेद। 7।)

❀ षड्पदा.न्यनु नि क्रामति - षडहँ वाङ्नाति वद-त्युत सँवथ्सरस्यायने यावत्येव वा-क्ता मवरुन्धे, सप्तमे पदे जुहोति - सप्तपदा शक्वरी - पशव श्शक्वरी - पशू नेवाव रुन्धे, सप्त ग्राम्या॰ पशव - स्सप्ताऽऽरण्या- स्सप्त छन्दा॰-स्युभयस्यावरुद्ध्यै, वस्व्यसि रुद्राऽसीत्याह -रूप मेवास्या एत

न्महिमानम्।। 54।।❀ व्याचष्टे, बृहस्पति.स्त्वा सुम्ने रण्वत्वित्याह - ब्रह्म वै देवानां बृहस्पति-ब्र्ह्मणैवास्मै पशूनव रुन्धे, रुद्रो वसुभि राचिके त्वित्याहाऽऽवृत्त्यै, पृथिव्यास्त्वा मूर्ध न्नाजिघर्मि देवयजन इत्याह - पृथिव्या ह्येषे मूर्धा- यद्देवयजन,मिडायाः पद इत्या-हेडायै ह्येत त्पदँ- यथ्सोमक्रयण्यै, घृतवति स्वाहा।। 55।।❀ इत्याह - यदेवास्यै पदा द्घृत मपीड्यत - तस्मा देव माह, यदध्वर्यु रनग्ना.वाहुति.ञ्जुहुया- दन्धोऽध्वर्यु.स्स्या-द्रक्षाꣳसि यज्ञꣳ हन्युर्, हिरण्य मुपास्य जुहो- त्यग्निवत्येव जुहोति - नान्धोऽध्वर्यु र्भवति - न यज्ञꣳ रक्षाꣳसि घ्नन्ति, काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति - परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह - रक्षसा मपहत्यै,।। 56।।❀ इद महꣳ रक्षसो ग्रीवा अपि कृन्तामि- योऽस्मा न्द्वेष्टि- यञ्च वय.न्द्विष्म इत्याह - द्वौ वाव पुरुषौ - यञ्चैव द्वेष्टि - यश्चैन.न्द्वेष्टि - तयो रेवानन्तराय.ङ्ग्रीवाः कृन्तति, पशवो वै सोमक्रयण्यै पदँ - यावत्त्मूतꣳ सँवपति - पशू नेवाव रुन्धे,ऽस्मे~ राय इति सँवप- त्यात्मान मेवाध्वर्युः।। 57।।❀ पशुभ्यो नान्तरेति, त्वे~ राय~ इति यजमानाय प्र यच्छति - यजमान एव रयि न्दधाति, तोते राय इति पत्निया, अर्धो वा एष आत्मनो - यत्पत्नी, यथा गृहेषु निधत्ते - तादृ.गेव त,त्त्वष्टीमती ते सपेयेत्याह - त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृ-द्रूप मेव पशुषु दधा, त्यस्मै वै लोकाय गार्हपत्य आधीयते-ऽमुष्मा आहवनीयो, यद्गार्हपत्य उपवपे- दस्मि न्लोके पशुमान्थ्स्या,द्यदाहवनीये-ऽमुष्मि न्लोके पशुमा.न्थ्स्या,दुभयो.रुपवप- त्युभयो रेवैनँ लोकयोः पशुमन्त.ङ्करोति।। 58।। (महिमानꣳ स्वाहाऽऽपहत्या अध्वर्यु र्धीयते चतुर्विꣳशतिश्च। 8।)

❀ ब्रह्मवादिनो वदन्ति- विचित्य स्सोमा '3'- न विचित्या '3' इति, सोमो वा ओषधीनाꣳ राजा - तस्मिन् यदापन्न-ङ्ग्रसित मेवास्य त,द्य द्विचिनुया-द्यथाऽऽस्या.द्ग्रसित.न्निष्खिदति- तादृगेव त,द्यन्न विचिनुया- द्यथाऽक्ष.न्नापन्नँ विधावति - तादृगेव त,त्क्षोधुकोऽध्वर्यु स्स्या-त्क्षोधुको यजमान, 卐 स्सोमविक्रयि'2'न्थ्सोमꣳ शोधये-त्येव ब्रूया, द्यदीतरम्।। 59।।❀ यदीतर मुभयेनैव सोमविक्रयिण मर्पयति, तस्मा थ्सोमविक्रयी क्षोधुको,ऽरुणो ह स्माऽऽहौपवेशि- स्सोमक्रयण एवाह न्तृतीयसवन मवरुन्ध इति, पशूना.ञ्चर्म न्मिमीते - पशू नेवाव रुन्धे - पशवो हि तृतीयꣳ सवनँ, यङ्कामयेतापशु स्या-दित्यृक्षत स्तस्य मिमी.तर्क्षँ वा अपशव्य- मपशु रेव भवति, यङ्कामयेत पशुमान्थ्यात्।। 60।।❀ इति - लोमत स्तस्य मिमी.तैतद्वै पशूनाꣳ रूपꣳ- रूपेणैवास्मै पशूनव रुन्धे - पशुमानेव भव,त्यपा.मन्ते क्रीणाति - सरस मेवैन.ङ्क्रीणा, त्यमात्योऽसीत्याहा-ऽमैवैन.ङ्कुरुते, शुक्रस्ते ग्रह इत्याह - शुक्रो ह्यस्य

ग्रहो,ऽनसाऽच्छ याति - महिमान मेवास्याच्छ या,त्यनसा।। 61।।❀ अच्छ याति - तस्मा दनोवाह्यꣳ समे जीवनँ, यत्र खलु वा एतꣳ शीर्ष्णा हरन्ति - तस्माच्छीर्षहार्य.ङ्गिरौ जीवन,मभि त्य.न्देवꣳ सवितार मित्यतिच्छन्दसर्चा मिमीते-ऽतिच्छन्दा वै सर्वाणि छन्दाꣳसि - सर्वेभि रेवैन.ञ्छन्दोभि.र्मिमीते, वर्ष्म वा एषा छन्दसाँ - यदतिच्छन्दा, यदतिच्छन्दसर्चा मिमीते - वर्ष्मैवैनꣳ समानाना.ङ्करो, त्येकयैकयोथ्सर्गम्।। 62।।❀ मिमीते-ऽयातयाम्नियाऽयातयाम्नि.यैवैनं मिमीते - तस्मा न्नानावीर्या अङ्गुलय, स्सर्वास्वङ्गुष्ठ मुप नि गृह्णाति - तस्मा.थ्समावद्वीर्योऽन्याभि रङ्गुलिभि-स्तस्मा.थ्सर्वा अनु सञ्चरति, यथ्सह सर्वाभि र्मिमीत - सꣳश्लिष्टा अङ्गुलयो जायेर,न्नेकयैकयोथ्सर्गं मिमीते - तस्मा.द्विभक्ता जायन्ते, पञ्च कृत्वो यजुषा मिमीते - पञ्चाक्षरा पङ्क्तिः - पाङ्क्तो यज्ञो - यज्ञ मेवाव रुन्धे, पञ्च कृत्व स्तूष्णीम्-।। 63।।❀ दश सं पद्यन्ते, दशाक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्य मव रुन्धे, यद्यजुषा मिमीते - भूत मेवाव रुन्धे, यत्तूष्णीं भविष्य,द्यद्वै तावानेव सोम.स्स्या- द्यावन्तं मिमीते - यजमानस्यैव स्या-न्नापि सदस्यानां, प्रजाभ्य स्त्वेत्युप समूहति - सदस्या नेवान्वा भजति, वाससोपनह्यति - सर्वदेवत्यँ वै।। 64।।❀ वास-स्सर्वाभि रेवैन न्देवताभि स्समर्धयति, पशवो वै सोमः, प्राणाय त्वेत्युप नह्यति - प्राण मेव पशुषु दधाति, व्यानाय त्वेत्यनु श्रन्थति - व्यान मेव पशुषु दधाति, तस्मा थ्स्वपन्तं प्राणा न जहति।। 65।। (इतरं पशुमान्थ्स्या द्यात्यनसोथ्सर्ग न्तूष्णीꣳ सर्वदेवत्यँ वै त्रयस्त्रिꣳशच्च। 9।)

❀卐यत्कलया ते- 卐शफेन ते- क्रीणा-नीति पणेता-ऽगोअर्घꣳ सोम.ङ्कुर्या- दगोअर्घँ यजमान-मगोअर्घ मध्वर्यु,ङ्गोस्तु महिमान न्नाव तिरे,卐द्गवा ते क्रीणानी-त्येव ब्रूया,द्गोअर्घ मेव सोम.ङ्करोति - गोअर्घँ यजमान - ङ्गोअर्घ मध्वर्यु,न्न गोर्महिमान मव तिर,त्यजया क्रीणाति -सतपस मेवैन.ङ्क्रीणाति, हिरण्येन क्रीणाति - सशुक्र मेव।। 66।।❀ एन.ङ्क्रीणाति, धेन्वा क्रीणाति - साऽऽशिर मेवैन.ङ्क्रीणा,त्यृषभेण क्रीणाति - सेन्द्र मेवैन.ङ्क्रीणा,त्यनडुहा क्रीणाति - वह्नि वा अनड्वान् - वह्निनैव वह्नि यज्ञस्य क्रीणाति, मिथुनाभ्या.ङ्क्रीणाति - मिथुनस्यावरुध्यै, वाससा क्रीणाति - सर्वदेवत्यँ वै वास-स्सर्वाभ्यि एवैन न्देवताभ्यः क्रीणाति, दश सं पद्यन्ते - दशाक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्य मवरुन्धे,।। 67।।❀ तपस स्तनू रसि प्रजापते वर्ण इत्याह - पशुभ्य एव तदध्वर्यु र्निह्नुत-आत्मनोऽनाव्रस्काय, गच्छति श्रियं- प्र पशू नाप्नोति - य एवँ वेद, शुक्र.न्ते शुक्रेण क्रीणामीत्याह - यथायजु रेवैत,द्देवा वै येन हिरण्येन सोम मक्रीण - न्तदभीषहा पुनराऽददत, को हि तेजसा विक्रेष्यत

इति - येन हिरण्येन।। 68।।❀ सोम.ङ्क्रीणीया- त्तदभीषहा पुन रा ददीत - तेज एवाऽऽत्म न्धत्ते,ऽस्मे~ ज्योति स्सोमविक्रयिणि तमि इत्याह - ज्योति रेव यजमाने दधाति - तमसा सोमविक्रयिण मर्पयति, यदनुपग्रथ्य हन्या- द्दन्दशूका स्ता९ समा९ सर्पा स्स्यु,- ऽ रिद मह९ सर्पाणा न्दन्दशूकाना.ङ्ग्रीवा उपग्रथ्नामी-त्याहादन्दशूका स्ता९ समा९ सर्पा भवन्ति - तमसा सोमविक्रयिणँ विध्यति, स्वान।। 69।।❀ भ्राजेत्या-हैते वा अमुष्मि न्लोके सोम मरक्ष-न्तेभ्योऽधि सोम माऽहरन्, यदेतेभ्य स्सोमक्रयणा न्नानुदिशे- दक्रीतोऽस्य सोम स्स्या-न्नास्यैते ऽमुष्मि न्लोके सोम९ रक्षेयु,र्यदेतेभ्य स्सोमक्रयणा.ननुदिशति- क्रीतोऽस्य सोमो भव-त्येतेऽस्यामुष्मि न्लोके सोम९ रक्षन्ति।। 70।। (सशुक्र मेव रुन्ध इति येन हिरण्येन स्वान चतुश्चत्वारि९शच्च। 10।)

❀ वारुणो वै क्रीत स्सोमि उपनद्धो, मित्रो न एहि सुमित्रधा इत्याह शान्त्या, इन्द्रस्योरु माविश दक्षिण मित्याह - देवा वै य९ सोम मक्रीण- न्तमिन्द्रस्योरौ दक्षिण आऽसादय,न्नेष खलु वा एतर्हीन्द्रो यो यजते- तस्मा.देवमा,होदायुषा स्वायुषेत्याह - देवता एवान्वारभ्योत्।। 71।।❀ तिष्ठ,त्युर्वन्तरिक्ष मन्विहीत्याहा-ऽन्तरिक्षदेवत्यो2 (ओ) ह्येतर्हि सोमो,ऽदित्या स्सदोऽस्यदित्या.स्सद आसीदेत्याह - यथायजु रेवैत,द्वि वा एन मेत दर्धयति - यद्वारुण९ सन्तं मैत्र.ङ्करोति, ऽ वारुण्यर्चा[139] ❀ऽऽसादयति - स्वयैवैन न्देवतया समर्धयति, वाससा पर्यानह्यति - सर्वदेवत्यँ वै वास - स्सर्वाभि रेव।। 72।।❀ एन न्देवताभि स्समर्धय,त्यथो~ रक्षसा मपहत्यै, वनेषु व्यन्तरिक्ष न्ततानेत्याह - वनेषु हि व्यन्तरिक्ष न्ततान, वाज मर्वथ्स्वित्याह - वाजङ्ग् ह्यर्वथ्सु, पयो अघ्नियास्वित्याह - पयो ह्यघ्नियासु, हृथ्सु क्रतु मित्याह - हृथ्सु हि क्रतुँ, वरुणो विक्ष्वग्नि मित्याह - वरुणो हि विक्ष्वग्नि, न्दिवि सूर्यम्।। 73।।❀ इत्याह - दिवि हि सूर्य९, सोम.मद्रा.वित्याह - ग्रावाणो वा अद्रय-स्तेषु वा एष सोम न्दधाति - यो यजते - तस्मादेव मा,होदु त्य.ञ्जातवेदस मिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति - रक्षसामपहत्या, उस्रा.वेत न्धूर्षाहा.वित्याह - यथायजु रेवैत,त्प्रच्यवस्व भुवस्पत इत्याह - भूताना९ हि।। 74।।❀ एष पति, र्विश्वा न्यभि धामानीत्याह विश्वानि ह्ये2(ए)षोऽभि धामानि प्रच्यवते, मा त्वा परिपरी विद.दित्याह - यदेवाद स्सोम माह्रियमाण.ङ्गन्धर्वो विश्वावसु॰ पर्यमुष्णा- त्तस्मा देव माहापरिमोषाय, यजमानस्य स्वस्त्यय.न्यसीत्याह - यजमान.स्यैवैष यज्ञस्यान्वारम्भो ऽनवच्छित्त्यै, वरुणो वा एष यजमान मभ्यैति - यत्।। 75।।❀ क्रीत स्सोम उपनद्धो, नमो मित्रस्य वरुणस्य चक्षस इत्याह

139

शान्त्यै, आ सोमँ वह-न्त्यग्निना प्रतितिष्ठते - तौ सम्भवन्तौ यजमान मभि सं भवतः, पुरा खलु वावैष मेधायाऽऽत्मान मारभ्य चरति - यो दीक्षितो, यदग्नीषोमीयं पशु मालभते- आत्मनिष्क्रयणे एवास्य सि- तस्मा त्तस्य नाऽऽश्यं, पुरुषनिष्क्रयणे इव ह्यथो~ खल्वाहु-रग्नीषोमाभ्याँ वा इन्द्रो वृत्र मह न्निति, यदग्नीषोमीयं पशु मालभते- वार्त्रघ्ने एवास्य सि- तस्माद्वाऽश्यँ, वारुण्यर्चा परिचरति - स्वयैवैन न्देवतया परिचरति।। 76।। (अन्वारभ्योथ्सर्वाभि रेव सूर्यं भूताना॰ ह्येति यदाहु स्सप्तवि॰शतिश्च। 11)

(प्राचीनव॰शँ यावन्त ऋख्सामे वाग्वै देवेभ्यो देवा वै देवयजन ङ्कद्रूश्च तद्धिरण्य॰ षद्दानि ब्रह्मवादिनो विचित्यो यत्कलया ते वारुणो वै क्रीत स्सोम एकादश। 11। प्राचीनव॰शङ् स्वाहेत्याह येऽन्तश्शरा ह्येष सन्तपसा च यत्कर्णगृहीतेति लोमतो वारुण ष्षट्थ्सप्ततिः। 76। प्राचीनव॰शं परिचरति।)

## षष्ठ काण्डे द्वितीयः प्रपाठकः

### सौ।का।1। आध्वर्यव ब्राह्मणम् 2 (एकादशानुवाका: 11)

❀ यदुभौ विमुच्याऽऽतिथ्य.ङ्गृह्णीया- द्यज्ञँ विच्छिन्द्या,द्यदुभा.वविमुच्य - यथाऽनागतायाऽऽतिथ्य.क्क्रियते- तादृगेव त,द्विमुक्तोऽन्योऽनड्वा न्भव- त्यविमुक्तोऽन्यो- ऽथाऽऽतिथ्य.ङ्गृह्णाति - यज्ञस्य सन्तत्यै, पत्न्यन्वारभते - पत्नी हि पारीणह्यस्येशे - पत्नियैवानुमत न्निर्वपति, यद्वै पत्नी यज्ञस्य करोति - मिथुन न्त,दथो~ पत्नियो एव।। 1।। ❀ एषे यज्ञस्यान्वारम्भो ऽनवच्छित्त्यै, यावद्भिर्वै राजाऽनुचरै रागच्छति - सर्वेभ्यो वै तेभ्य आतिथ्य.क्क्रियते, छन्दा॰सि खलु वै सोमस्य राज्ञो ऽनुचरा-ण्यग्ने रातिथ्यमसि विष्णवे त्वेत्याह - गायत्रिया एवैतेन करोति, सोमस्याऽऽतिथ्य मसि विष्णवे त्वेत्याह - त्रिष्टुभ एवैतेन करो,त्यतिथे रातिथ्य मसि विष्णवे त्वेत्याह - जगत्यै।। 2।। ❀ एवैतेन करो,त्यग्नये त्वा रायस्पोषदाव्न्ने विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति, श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह - गायत्रिया एवैतेन करोति, पञ्च कृत्वो गृह्णाति - पञ्चाक्षरा पङ्क्तिः - पाङ्क्तो यज्ञो - यज्ञ मेवाव रुन्धे, ब्रह्मवादिनो वदन्ति कस्मा.थ्सत्या- द्गायत्रिया उभयत आतिथ्यस्य क्रियत इति - यदेवाद स्सोम मा।। 3।। ❀ अह,रत्तस्मा.द्गायत्रियो उभयत आतिथ्यस्य क्रियते - पुरस्ता च्चोपरिष्टाच्च, शिरो वा एत.द्यज्ञस्य - यदाऽऽतिथ्य,न्नवकपालः पुरोडाशो भवति - तस्मा.न्नवधा शिरो विष्यूत-न्नवकपालः पुरोडाशो भवति, ते त्रय.स्त्रिकपाला.स्त्रिवृता स्तोमेन संमिता- स्तेज.स्त्रिवृ- त्तेज एव यज्ञस्य शीर्ष न्दधाति, नवकपालः पुरोडाशो भवति, ते त्रय.स्त्रिकपाला स्त्रिवृता प्राणेन संमिता-स्त्रिवृद्वै।। 4।। ❀ प्राण-स्त्रिवृत मेव प्राण मभिपूर्वँ यज्ञस्य शीर्ष न्दधाति, प्रजापतेर्वा एतानि

पक्ष्माणि - यदश्ववालो ऐक्षवी~ तिरश्ची~, यदाश्ववालः प्रस्तरो भव-त्यैक्षवी~ तिरश्ची~ प्रजापते रेव तच्चक्षु स्सं भरति, देवा वै या आहुती.रजुहवु- स्ता असुरा निष्काव माद,न्ते देवाः कार्ष्मर्य मपश्य-न्कर्मण्यो वै कर्मैनेन कुर्वीतेति, ते कार्ष्मर्यमया न्परिधीन्।। 5।। ❀ अकुर्वत - तै.र्वै ते रक्षा॑स्यपाघ्नत, यत्कार्ष्मर्यमयाः परिधयो भवन्ति - रक्षसा मपहत्यै, सꣳस्पर्शयति - रक्षसा मनन्ववचाराय, न पुरस्ता त्परि दधा- त्यादित्यो ह्येवोद्य.न्पुरस्ता.द्रक्षा॑स्यपह,न्त्यूर्ध्वे~ समिधा.वा दधा- त्युपरिष्टा.देव रक्षा॑स्यप हन्ति, यजुषाऽन्या- न्तूष्णी मन्यां- मिथुनत्वाय, द्वे~ आ दधाति - द्विपा.द्यजमानः प्रतिष्ठित्यै, ब्रह्मवादिनो वदन्ति-।। 6।। ❀ अग्निश्च वा एतौ सोमश्च- कथा सोमायाऽऽतिथ्य.क्क्रियते- नाग्नय इति, यदग्ना.वग्निं मथित्वा प्रहरति - तेनैवाग्नय आतिथ्य.क्क्रियते,ऽथो~ खल्वाहु- रग्नि स्सर्वा देवता इति, यद्धवि रासाद्याग्निं मन्थति - हव्यायैवाऽऽसन्नाय सर्वा देवता जनयति।। 7।। (पत्निया एव जगत्या आ त्रिवृद्वे परिधीन् वदन्त्येक चत्वारि॑शच्च। 1।)

❀ देवासुरा स्सँयत्ता आस- न्ते देवा मिथो विप्रिया आस- न्ते2(ए)ऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्राम-न्नग्नि र्वसुभि- स्सोमो रुद्रै-रिन्द्रो मरुद्भि- र्वरुण आदित्यै- र्बृहस्पति र्विश्वै र्देवै, स्तेऽमन्यन्ता-ऽसुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो - यन्मिथो विप्रिया स्स्मो, या न इमाः प्रिया स्तनुव- स्ता स्समवद्यामहै- ताभ्य स्स निरृच्छा-द्यः।। 8।। ❀ नः प्रथमो2(ओ) ऽन्योऽन्यस्मै द्रुह्या दिति, तस्मा.द्य.स्सतानूनप्त्रिणां प्रथमो द्रुह्यति - स आर्ति मार्च्छति, यत्तानूनप्त्र॑ समवद्यति भ्रातृव्याभिभूत्यै - भवत्यात्मना पराऽस्य भ्रातृव्यो भवति, पञ्च कृत्वोऽवद्यति - पञ्चधा हि ते तथ्समवाद्यन्ता-ऽथो~ पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञ मेवाव रुन्धे, आपतये त्वा गृह्णामीत्याह - प्राणो वै।। 9।। ❀ आपतिः- प्राण मेव प्रीणाति, परिपतय इत्याह - मनो वै परिपति- र्मन एव प्रीणाति, तनूनप्त्रे इत्याह - तनुवो हि ते ता.स्समवाद्यन्त, शाक्वरायेत्याह - शक्त्यै हि ते ता.स्समवाद्यन्त, शक्मन्नोजिष्ठायेत्या-हौजिष्ठ॑ हि ते तदात्मन स्समवाद्यन्ता,ऽनाधृष्ट मस्यनाधृष्य मित्याहा-ऽनाधृष्टꣳ ह्येत दनाधृष्य, न्देवाना मोजः।। 10।। ❀ इत्याह - देवाना॑ ह्येतदोजो,ऽभिशस्तिपा अनभिशस्तेन्य मित्याह-ऽभिशस्तिपा ह्येत,दनभिशस्तेन्य मनु मे दीक्षा न्दीक्षापति र्मन्यता मित्याह - यथायजुरेवैत,द्धृतँ वै देवा वज्र.ङ्कृत्वा सोम मघ्न-न्नन्तिक मिव खलु वा अस्यैत.च्चरन्ति - यत्तानूनप्त्रेण प्रचर, न्त्य॑शुर॑शु.स्ते देव सोमाऽऽप्यायता मित्याह - यत्।। 11।। ❀ एवास्यापुवायते - यन्मीयते - तदेवास्यै तेनाऽऽप्यायय,त्या तुभ्य मिन्द्रः प्यायता- मा त्व मिन्द्राय प्यायस्वेत्या-होभा.वेवेन्द्रञ्च

सोमञ्चाऽऽप्यायय, त्या प्यायय सखी.न्थसन्या मेधयेत्या-हर्त्विजो वा अस्य सखाय-स्तानेवाऽऽप्याययति, स्वस्ति ते देव सोम सुत्या मशीय।। 12।। ❀ इत्याहा-ऽऽशिष मेवैता मा शास्ते, प्र वा एतेऽस्मा ल्लोका.च्च्यवन्ते - ये सोम माप्यायय,न्त्यन्तरिक्षदेवत्यो हि सोम आप्यायिते, एष्टा रायः प्रेषे भगायेत्याह - द्यावापृथिवीभ्यामेव नमस्कृत्यास्मि न्लोके प्रति तिष्ठन्ति, देवासुरा स्सँयत्ता आस-न्ते देवा बिभ्यतोऽग्निं प्राविश-न्तस्मा दाहु- रग्नि स्सर्वा देवता इति, ते।। 13।।❀ अग्नि मेव वरूथ.ङ्कृत्वाऽसुरा नभ्यभव,न्नग्नि मिव खलु वा एष प्रविशति- योऽवान्तरदीक्षा मुपैति- भ्रातृव्याभिभूत्यै-भवत्यात्मना पराऽस्य भ्रातृव्यो भव,त्यात्मान मेव दीक्षया पाति - प्रजा मवान्तरदीक्षया, सन्तरां मेखला᳚ समायच्छते - प्रजा ह्यात्मनोऽन्तरतरा, तप्तव्रतो भवति - मदन्तीभि र्मार्जयते - निर्ह्यग्नि श्शीतेन वायति समिद्ध्यै, या ते अग्ने रुद्रिया तनू रित्याह - स्वयैवैन द्देवतया व्रतयति- सयोनित्वाय शान्त्यै।। 14।। (यो वा ओज आह यदशीयेति तेऽग्न एकादश च। 2।)

❀ तेषा मसुराणा न्तिस्रः पुर आस- न्नयस्मय्यवमाऽथ रजताऽथ हरिणी, ता देवा जेतु न्नाशक्नुव-न्ता उपसदैवाजिगीष,न्तस्मादाहु- र्यश्चैवँ वेद- यश्च.नोपसदा वै महापुर.ञ्जयन्तीति, त इषु᳚ समस्कुर्वता-ऽग्नि मनीक᳚ - सोम᳚ शल्यँ- विष्णु न्तेजन,न्तेऽब्रुव- न्क इमा मसिष्यतीति,।। 15।।❀ रुद्र इत्यब्रुव- न्रुद्रो वै क्रूर- स्सोऽस्यत्विति, सोऽब्रवी.द्वरँ वृणा- अह मेव पशूना मधिपति रसानीति-तस्मा.द्रुद्रः पशूना मधिपति,स्ता᳚ रुद्रोऽवासृज-थ्स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरा न्प्राणुदत, यदुपसद उपसद्यन्ते- भ्रातृव्यपराणुत्यै, नान्या माहुतिं पुरस्ता ज्जुहुया,द्यदन्या माहुतिं पुरस्ता.ज्जुहुयात्-।। 16।।❀ अन्य.न्मुख.ङ्कुर्या,थ्स्रुवेणाऽऽघार माघारयति - यज्ञस्य प्रज्ञात्यै, पराङतिक्रम्य जुहोति - पराच एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्या न्प्रणुदते, पुन रत्याक्रम्योपसद.ञ्जुहोति - प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्या न्जित्वा- भ्रातृव्यलोक मभ्यारोहति, देवा वै याः प्रात.रुपसद उपासीद- न्नह्न.स्ताभि रसुरा न्प्राणुदन्त, या स्सायं᳚- रात्रियै, ताभि.र्यथ्सायंप्रात रुपसदः।। 17।।❀ उपसद्यन्ते -ऽहोरात्राभ्या मेव तद्यजमानो भ्रातृव्या न्प्रणुदते, याः प्रात.र्याज्या स्स्यु-स्ता स्सायं पुरोऽनुवाक्याः कुर्या- दयातयामत्वाय, तिस्र उपसद उपैति - त्रय इमे लोका- इमा.नेव लोका न्प्रीणाति, षट्थ्सं पद्यन्ते - षड्वा ऋतव -ऋतू नेव प्रीणाति, द्वादशाहीने सोम उपैति - द्वादश मासा स्सँवथ्सर- स्सँवथ्सर मेव प्रीणाति, चतुर्वि᳚शति स्सम्।। 18।।❀ पद्यन्ते - चतुर्वि᳚शति रर्धमासा- अर्धमासा नेव प्रीणा,त्याराऽग्रा मवान्तरदीक्षा मुपेया- द्यः कामयेतास्मिन्मे लोकेऽर्धुकँ स्यादि,त्येक मग्रेऽथ द्वा.वथ

त्रीनथ चतुर- एषा वा आराऽग्राऽवान्तरदीक्षा-ऽस्मि न्नेवास्मै लोकेऽर्धुकं भवति, परोवरीयसी मवान्तरदीक्षा मुपेया- द्यः कामयेतामुष्मिन्मे लोकेऽर्धुकङ् स्यादिति, चतुरोऽग्रेऽथ त्रीनथ द्वावथैक,मेषा वै परोवरीय.स्यवान्तरदीक्षा-ऽमुष्मि न्नेवास्मै लोकेऽर्धुकं भवति।। 19।। (असिष्यतीति जुहुया थ्सायंप्रात रुपसद श्चतुर्विं॰शति स्सं चतुरोऽग्रे षोडश च। 3।)

ॐ❀ सुवर्गं वा एते लोकँ यन्ति - य उपसद उपयन्ति, तेषाँ य उन्नयते हीयत एव, स नोदनेषीति, सून्नीय मिव यो वै स्वार्थेताँ यता॰ श्रान्तो हीयत, उत स निष्ठाय सह वसति तस्मा.थ्सकृदुन्नीय नापर मुन्नयेत, दध्नोन्नये-तैतद्वै पशूना॰ रूप॰- रूपेणैव पशूनव रुन्धे,।। 20।। ❀ यज्ञो देवेभ्यो निलायत- विष्णू रूप.ङ्कृत्वा, स पृथिवीं प्राविश- त्तन्देवा हस्ता न्थ्स॰रभ्यैच्छ- न्तमिन्द्र उपर्युपर्यत्यक्राम,थ्सोऽब्रवी-त्को माऽय मुपर्युपर्य.त्यक्रमीदि-त्यह न्दुर्गे हन्ते,त्यथ कस्त्वमि-त्यह न्दुर्गा दाहर्तेति, सोऽब्रवी-दुर्गे वै हन्ताऽवोचथा- वराहोऽयँ वाममोषः।। 21।। ❀ सप्ताना.ङ्गिरीणां परस्ता द्वित्तँ वेद्य मसुराणां बिभर्ति- तञ्जहि- यदि दुर्गे हन्ताऽसीति, स दर्भपुञ्जील मुद्वृह्य सप्तगिरी न्भित्त्वा- तमह'2',न्थ्सोऽब्रवी- दुर्गा.द्वा आहर्ताऽवोचथा- एत माहरेति, तमेभ्यो यज्ञ एव यज्ञ माऽहर,द्यत्तद्वित्तँ वेद्य मसुराणा मविन्दन्त- तदेकँ वेद्यै वेदित्व,मसुराणाम्।। 22।। ❀ वा इय मग्र आसी-द्याव दासीनः परापश्यति - ताव द्देवाना,न्ते देवा अब्रुव- न्नस्त्वेव नोऽस्या मपीति, कियद्वो दास्याम इति - याव दिय॰ सलावृकी त्रिः परिक्रामति - तावन्नो दत्तेति, स इन्द्र स्सलावृकी रूप.ङ्कृत्वेमा न्त्रिस्सर्वतः पर्यक्राम,त्तदिमा मविन्दन्त, यदिमा मविन्दन्त - तद्वेद्यै वेदित्वम्,।। 23।। ❀ सा वा इय॰ सर्वैव वेदि- रियति शक्ष्यामीति - त्वा अवमाय यजन्ते, त्रि॰श त्पदानि पश्चा.त्तिरश्ची भवति- षट्त्रि॰श त्प्राची- चतुर्विं॰शतिः पुरस्ता त्तिरश्ची, दशदश सं पद्यन्ते - दशाक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्य मवरुन्ध, उद्धन्ति- यदेवास्या अमेध्य- न्तदप ह,न्त्युद्धन्ति - तस्मा.दोषधयः परा भवन्ति, बर्हि स्स्तृणाति - तस्मा.दोषधयः पुन रा भव,न्त्युत्तरं बर्हिष उत्तरबर्हि स्स्तृणाति, प्रजा वै बर्हि- र्यजमान उत्तरबर्हि- र्यजमान मेवायजमाना.दुत्तर.ङ्करोति - तस्मा द्यजमानो ऽयजमाना.दुत्तरः।। 24।। (रुन्धे वाममोषो वेदित्व मसुराणाँ वेदित्वं भवन्ति पञ्चवि॰शतिश्च। 4।)

ॐ❀ यद्वा अनीशानो भार मादत्ते - वि वै स लिशते, यद्वादश साह्नस्योपसद.स्स्यु-स्तिस्रो ऽहीनस्य- यज्ञस्य विलोम क्रियेत, तिस्र एव साह्नस्योपसदो- द्वादशाहीनस्य- यज्ञस्य सवीर्यत्वाया-ऽथो~ सलोम क्रियते, वथ्सस्यैक स्स्तनो भागी हि- सोऽथैकङ् स्तनँ व्रत मुपै-त्यथ द्वा.वथ - त्रीनथ- चतुर , एतद्वै।।

25।।❀ क्षुरपवि नाम व्रतँ - येन प्रजाता न्भ्रातृव्या.न्नुदते - प्रति जनिष्यमाणा, नथो~ कनीयसैव भूय उपैति - चतुरोऽग्रे स्तना न्व्रत मुपै-त्यथ त्री-नथ द्वा.वथैक,मेतद्वै सुजघन न्नाम व्रत न्तपस्य॰ सुवर्ग्य-मथो~ प्रैव जायते प्रजया पशुभि, र्यवागू राजन्यस्य व्रत-ङ्क्रूरेव वै यवागू॰- क्रूर इव।। 26।।❀ राजन्यो - वज्रस्य रूप॰ समृद्ध्यै, आमिक्षा वैश्यस्य - पाकयज्ञस्य रूपं पुष्ट्यै, पयो ब्राह्मणस्य - तेजो वै ब्राह्मण- स्तेज॰ पय- स्तेजसैव तेज॰ पय आत्म न्धत्ते,ऽथो पयसा वै गर्भा वर्धन्ते, गर्भ इव खलु वा एष- यद्दीक्षितो, यदस्य पयो व्रतं भव- त्यात्मान मेव तद्वर्धयति, त्रिव्रतो वै मनु रासी- द्विव्रता असुरा-एकव्रताः।। 27।।❀ देवा॰, प्रात र्मध्यन्दिने साय-न्तन्मनो र्व्रत मासी-त्पाकयज्ञस्य रूपं पुष्ट्यै, प्रातश्च साय.ञ्चासुराणा- न्निर्मध्यं क्षुधो रूप- तत.स्ते पराऽभव,न्मध्यन्दिने मध्यरात्रे देवाना- न्तत स्तेऽभव'2'-न्थ्सुवर्गँ लोक मायन्, यदस्य मध्यन्दिने मध्यरात्रे व्रतं भवति - मध्यतो वा अन्नेन भुञ्जते - मध्यत एव तदूर्ज न्धत्ते भ्रातृव्याभिभूत्यै, भव त्यात्मना-।। 28।।❀ पराऽस्य भ्रातृव्यो भवति, गर्भो वा एष यद्दीक्षितो - योनि र्दीक्षितविमितँ, यद्दीक्षितो दीक्षितविमिता त्प्रवसे- द्यथा योने र्गर्भ स्स्कन्दति- तादृगेव त,न्न प्रवस्तव्य-मात्मनो गोपीथा,यैष वै व्याघ्र॰ कुलगोपो यदग्नि- स्तस्मा.द्यद्दीक्षित॰ प्रवसे-थ्स एन मीश्वरोऽनूत्थाय हन्तो- र्न प्रवस्तव्य मात्मनो गुप्त्यै, दक्षिणत श्शये- एतद्वै यजमानस्याऽऽयतन॰- स्व एवाऽऽयतने शये-ऽग्नि मभ्यावृत्य शये- देवता एव यज्ञ.मभ्यावृत्य शये।। 29।। (एतद्वै क्रूर इवैकव्रता आत्मना यजमानस्य त्रयोदश च। 5।)

❀ पुरोहविषि देवयजने याजये-द्यङ्कामयेतोपैन मुत्तरो यज्ञो नमे- दभि सुवर्गँ लोक.ञ्जये दि,त्येतद्वै पुरोहवि र्देवयजनँ - यस्य होता प्रातरनुवाक मनुब्रुव.न्नग्नि मपि आदित्य मभि विपश्य-त्युपैन मुत्तरो यज्ञो नम-त्यभि सुवर्गँ लोक.ञ्जय,त्याप्ते देवयजने याजये द्भ्रातृव्यवन्तं- पन्थाँ वाऽधि स्पर्शये त्कर्तं वा-याव न्नानसे यातवै।। 30।।❀ न रथा-यैतद्वा आप्त न्देवयजन- माप्नोत्येव भ्रातृव्य- न्नैनं भ्रातृव्य आप्नो,त्येकोन्नते देवयजने याजये त्पशुकाम,मेकोन्नताद्वै देवयजना-दङ्गिरस॰ पशू नसृजन्ता-ऽन्तरा सदोहविर्धाने उन्नत॰ स्या,देतद्वा एकोन्नत न्देवयजनं- पशुमानेव भवति, त्र्युन्नते देवयजने याजये.थ्सुवर्गकाम,न्त्र्युन्नताद्वै देवयजना- दङ्गिरस स्सुवर्गँ लोक माय-न्नन्तराऽऽहवनीयञ्च हविर्धानञ्च।। 31।।❀ उन्नत॰ स्या-दन्तरा हविर्धानञ्च सदश्चा-ऽन्तरा सदश्च गार्हपत्य,ञ्चैतद्वै त्र्युन्नत न्देवयजन॰ सुवर्ग मेव लोक मेति, प्रतिष्ठिते देवयजने याजये त्प्रतिष्ठाकाम,मेतद्वै प्रतिष्ठित न्देवयजनँ - यथ्सर्वत स्समं- प्रत्येव तिष्ठति, यत्रान्योअन्या ओषधयो व्यतिषक्ता.स्स्यु- स्तद्याजये त्पशुकाम, मेतद्वै पशूना॰

रूपꣳ- रूपेणैवास्मै पशून्।। 32।। ❀ अवरुन्धे - पशुमानेव भवति, निरृतिगृहीते देवयजने याजये-द्यङ्कामयेत निरृत्याऽस्य यज्ञ.ङ्ग्राहयेय मि,त्येतद्वै निरृतिगृहीत न्देवयजनँ - यथ्सदृश्यै सत्या ऋक्ष-न्निरृत्यैवास्य यज्ञ.ङ्ग्राहयति, व्यावृत्ते देवयजने याजये द्व्यावृत्कामँ- यं पात्रे वा तल्पे वा मीमाꣳसेर,न्प्राचीन माहवनीया त्प्रवणꣳ स्या- त्प्रतीचीन.ङ्गार्हपत्या-देतद्वै व्यावृत्त न्देवयजनँ,वि पाप्मना भ्रातृव्येणाऽऽवर्तते - नैनं पात्रे न तल्पे मीमाꣳसन्ते, कार्ये देवयजने याजये द्भूतिकाम-ङ्कार्यो वै पुरुषो- भवत्येव।। 33।। (यातवै हविर्धानञ्च पशू न्पाप्मनाऽष्टादश च। 6।)

❀ तेभ्य उत्तरवेदि स्सिꣳही रूप.ङ्कृत्वोभया नन्तराऽपक्र.म्यातिष्ठ,त्ते देवा अमन्यन्त- यतरान् वा इयमुपाऽऽवर्थ्स्यति- त इदं भविष्यन्तीति, तामुपामन्त्रयन्त, साऽब्रवी द्वरँ वृणै - सर्वा न्मया कामान्व्यश्ञवथ -पूर्वान्तु माऽग्ने.राहुति रश्ञवता इति, तस्मादुत्तरवेदिं पूर्वा मग्ने र्व्याघारयन्ति - वारेवृतꣳ ह्यस्यै, शम्यया परिमिमीते -।। 34।। ❀ मात्रैवास्यै साऽथो युक्तेनैव युक्त मवरुन्धे, वित्तायनी मेऽसीत्याह - वित्ता ह्येना.नाव,त्तिक्तायनी मेऽसीत्याह - तिक्तान् ह्येना.नाव,दवता न्मा नाथित मित्याह - नाथितान् ह्येना.नाव,दवतान्मा व्यथित मित्याह - व्यथितान् ह्येना.नाव,द्विदे रग्नि र्नभो नाम।। 35।। ❀ अग्ने अङ्गिरि इति त्रिर्हरति, य एवैषु लोकेष्वग्नय- स्तानेवाव रुन्धे, तूष्णी ञ्चतुर्थꣳ हर-त्यनिरुक्त मेवाव रुन्धे, सिꣳही.रसि महिषी.रसीत्याह- सिꣳही ह्येषा रूप.ङ्कृत्वोभया नन्तराऽपक्रम्यातिष्ठ,दुरु प्रथस्वोरु ते यज्ञपतिः प्रथता मित्याह - यजमान मेव प्रजया पशुभिः प्रथयति, ध्रुवा।। 36।। ❀ असीति सꣳ हन्ति धृत्यै, देवेभ्य श्शुन्धस्व देवेभ्य श्शुम्भस्वेत्यव चोक्षति - प्र च किरति शुध्या, इन्द्रघोषस्त्वा वसुभिः पुरस्ता त्पात्वित्याह - दिग्भ्य एवैनां प्रोक्षति, देवाꣳश्चेदुत्तरवेदि रुपाऽऽववर्तीहैव विजयामहा इ,त्यसुरा वज्र मुद्यत्य देवा नभ्यायन्त - तानिन्द्रघोषो वसुभिः पुरस्ता दप।। 37।। ❀ अनुदत - मनोजवाः पितृभि र्दक्षिणतः- प्रचेता रुद्रैः पश्चा-द्विश्वकर्माऽऽदित्यै रुत्तरतो, यदेव मुत्तरवेदिं प्रोक्षति - दिग्भ्य एव तद्यजमानो भ्रातृव्या न्प्रणुदत, इन्द्रो यती.न्थ्सालावृकेभ्यः प्रायच्छ-त्ता न्दक्षिणत उत्तरवेद्या आदन्, यत्प्रोक्षणीना मुच्छिष्येत - तद्दक्षिणत उत्तरवेद्यै नि नये,द्यदेव तत्र क्रूर- न्तत्तेन शमयति, यन्द्विष्या- त्तन्ध्याये-च्छुचैवैन मर्पयति।। 38।। (मिमीते नाम ध्रुवाऽप शुचा त्रीणि च। 7।)

❀ सोत्तरवेदि रब्रवी-थ्सर्वा न्मया कामा न्व्यश्ञवथेति, ते देवा अकामयन्ता-ऽसुरा न्भ्रातृव्या नभिभवेमेति, तेऽजुहवु- स्सिꣳहीरसि सपत्नसाही स्वाहेति- तेऽसुरा न्भ्रातृव्या नभ्यभव, न्तेऽसुरा

न्भ्रातृव्या नभिभूयाकामयन्त - प्रजाँ विन्देमहीति, तेऽजुहवु- स्सि२ँहीरसि सुप्रजावनि स्स्वाहेति- ते प्रजा मविन्दन्त, ते प्रजाँ वित्त्वा।। 39।। ❀ अकामयन्त पशून् विन्देमहीति - तेऽजुहवु स्सि२ँहीरसि रायस्पोषवनि स्स्वाहेति- ते पशू नविन्दन्त, ते पशून् वित्त्वाऽकामयन्त प्रतिष्ठाँ विन्देमहीति - तेऽजुहवु स्सि२ँहीर.स्यादित्यवनि.स्स्वाहेति- त इमां प्रतिष्ठा मविन्दन्त, त इमां प्रतिष्ठाँ वित्त्वाऽकामयन्त देवता आशिषि उपेयामेति, तेऽजुहवु- स्सि२ँही रस्या वह देवा न्देवयते।। 40।। ❀ यजमानाय स्वाहेति- ते देवता आशिषि उपाऽऽय, न्पञ्च कृत्वो व्याघारयति - पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञ मेवाव रुन्धेऽख्ष्णया व्याघारयति - तस्मा दख्ष्णया पशवोऽङ्गानि प्रहरन्ति प्रतिष्ठित्यै, भूतेभ्यस्त्वेति स्रुच मुद्गृह्णाति - य एव देवा भूता- स्तेषा न्तद्भागधेय- न्तानेव तेन प्रीणाति, पौतुद्रवा न्परिधी न्परि दधा- त्येषाम्।। 41।। ❀ लोकानाँ विधृत्या, अग्ने स्त्रयो ज्याया२ँसो भ्रातर आस- न्ते देवेभ्यो हव्यँ वहन्तः प्रामीयन्त, सोऽग्नि रबिभे- दित्थँ वाव स्य आर्ति माऽरिष्यतीति- स निलायत, स याँ वनस्पतिष्ववस- त्तां पूतुद्रौ, या मोषधीषु - ता२ँ सुगन्धितेजने, यां पशुषु - तां पेत्वस्याऽन्तरा श्रृङ्गे~, तन्देवताः प्रैष मैच्छ- न्तमन्वविन्द,न्तमब्रुवन्न्-।। 42।। ❀ उप न आवर्तस्व - हव्य न्नो वहेति, सोऽब्रवीद्वरँ वृणे - यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दा-त्तन्मे भ्रातृणां भागधेय मसदिति, तस्मा द्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति - तेषा न्तद्भागयधेय- न्तानेव तेन प्रीणाति, सोऽमन्य.तास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषता-ऽस्थानि शातया इति, स यानि।। 43।। ❀ अस्था न्यशातयत - तत्पूतुद्रुभव, द्यन्मा२ँस मुपमृत- न्तद्गुल्गुलु, यदेता न्थ्सम्भारा न्थ्सम्भर- त्यग्नि मेव तत्सम्भर,त्यग्नेः पुरीष मसीत्याहा-ऽग्ने ह्येत त्पुरीषँ- यथ्सम्भारा, अथो~ खल्वाहु- रेते वावैन न्ते भ्रातरः परिशेरे- यत्पौतुद्रवाः परिधय इति।। 44।। (वित्त्वा देवयत एषा मब्रुवन् यानि चतुश्चत्वारि२ँशच्च। 8।)

❀ बद्ध मवस्यति - वरुणपाशा देवैने~ मुञ्चति, प्रणेनेक्ति - मेध्ये~ एवैने~ करोति, सावित्रियर्चा हुत्वा हविर्धाने प्रवर्तयति - सवितृप्रसूते एवैने~ प्रवर्तयति, वरुणो वा एषे दुर्वा- गुभयतो बद्धो- यदक्ष,स्स यदुथ्सर्जे- द्यजमानस्य गृहा नभ्युथ्सर्जे,थ्सुवाग्देव दुर्या२ँ आ वदे त्याह - गृहा वै दुर्या श्शान्त्यै, पत्नी।। 45।। ❀ उपानक्ति - पत्नी हि सर्वस्य मित्रं- मित्रत्वाय, यद्वै पत्नी यज्ञस्य करोति - मिथुन न्त- दथो~ पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै, वर्त्मना वा अन्वित्य यज्ञ२ँ रक्षा२ँसि जिघा२ँसन्ति - वैष्णवीभ्या मृग्भ्याँ वर्त्मनो र्जुहोति - यज्ञो वै विष्णु-र्यज्ञा देव रक्षा२ँस्यप हन्ति, यदध्वर्यु रनग्ना.वाहुति.ञ्जुहुया- दन्धोऽध्वर्युस्स्या- द्रक्षा२ँसि यज्ञ२ँ हन्युः,।। 46।। ❀ हिरण्य मुपास्य जुहो-

त्यग्निवत्येव जुहोति - नान्धोऽध्वर्यु र्भवति - न यज्ञ॰ रक्षा॰सि घ्नन्ति, प्राची~ प्रेत मध्वर.ङ्कल्पयन्ती~ इत्याह - सुवर्ग मेवैनं~ लोक.ङ्गमय,त्यत्र रमेथाँ वर्ष्म न्पृथिव्या इत्याह - वर्ष्म ह्येत त्पृथिव्या-यद्देवयजन॰, शिरो वा एत द्यज्ञस्य - यद्धविर्धान, न्दिवो वा विष्णवुत वा पृथिव्याः।। 47।। ❀ इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीन्नि हन्ति - शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे, दण्डो वा औपर स्तृतीयस्य हविर्धानस्य वषङ्कारेणाक्ष मच्छिन,द्यत्तृतीय.ञ्छदिर् हविर्धानयो रुदाह्रियते - तृतीयस्य हविर्धानस्यावरुद्ध्यै, शिरो वा एतद्यज्ञस्य - यद्धविर्धानँ, विष्णो रराट मसि विष्णोः पृष्ठ मसीत्याह -तस्मा देतावद्धा शिरो विष्यूतँ, विष्णो स्स्यूरसि विष्णो र्ध्रुवमसीत्याह - वैष्णव॰ हि देवतया हविर्धानँ, यं प्रथम.ङ्ग्रन्थि ङ्ग्रथ्नीया- द्यत्तन्न विस्र॰सये-दमेहेनाध्वर्युः प्रमीयेत- तस्माथ्स विस्रस्यः।। 48।। (पत्नी हन्यु र्वा पृथिव्या विष्यूतँ विष्णो ष्षड्विं॰शतिश्च। 9।)

❀ देवस्य त्वा सवितुः प्रसव इत्यभ्रि मादत्ते प्रसूत्या- अश्विनो र्बाहुभ्या मित्याहा-ऽश्विनौ हि देवाना मध्वर्यू~ आस्तां - पूष्णो हस्ताभ्या मित्याह यत्यै, वज्र इव वा एषा यदभ्रि,रभ्रिरसि नारि रसीत्याह शान्त्यै, काण्डेकाण्डे वै क्रियमाणे यज्ञ॰ रक्षा॰सि जिघा॰सन्ति - परिलिखित॰ रक्षः परिलिखिता अरातय इत्याह - रक्षसा मपहत्यै,।। 49।। ❀ इद मह॰ रक्षसो ग्रीवा अपि कृन्तामि - योऽस्मा न्द्वेष्टि-यञ्च वय न्द्विष्म इत्याह - द्वौ वाव पुरुषौ - यञ्चैव द्वेष्टि - यश्चैन न्द्वेष्टि - तयो रेवानन्तराय ङ्ग्रीवाः कृन्तति, दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेत्या-हैभ्य एवैनाँ लोकेभ्यः प्रोक्षति, परस्ता दर्वाचीं प्रोक्षति - तस्मात्।। 50।। ❀ परस्ता दर्वाचीं मनुष्या ऊर्ज मुप जीवन्ति, क्रूर मिव वा एत त्करोति - यत्खन, त्यपोऽव नयति शान्त्यै, यवमती रव नय- त्यूर्ग्वै यव- ऊर्गुदुम्बर -ऊर्जैवोर्ज॰ समर्धयति, यजमानेन संमितौदुम्बरी भवति - यावा.नेव यजमान- स्तावती मेवास्मि न्नूर्ज न्दधाति, पितृणा॰ सदनमसीति बर्हि रव स्तृणाति- पितृदेवत्यम्।। 51।। ❀ ह्येत- द्यन्निखातँ, यद्बर्हि रनवस्तीर्य मिनुया-त्पितृदेवत्या निखाता स्या,द्बर्हि रवस्तीर्य मिनो- त्यस्या मेवैनां मिनो- त्यथो~ स्वारुह मेवैना.ङ्करो,त्युद्दिवं॰ स्तभानान्तरिक्षं पृणेत्या-हैषाँ लोकानाँ विधृत्यै, द्युतान.स्त्वा मारुतो मिनोत्वित्याह - द्युतानो ह स्म वै मारुतो देवाना,मौदुम्बरीं मिनोति -तेनैव।। 52।। ❀ एनां मिनोति, ब्रह्मवनिन्त्वा क्षत्रवनि मित्याह - यथायजु रेवैत,द्घृतेन द्यावापृथिवी~ आ पृणेथा मित्यौदुम्बर्या.ञ्जुहोति, द्यावापृथिवी~ एव रसेनान,क्त्याऽन्त मन्ववस्रावय-त्याऽन्त मेव यजमान न्तेजसाऽन,क्त्यैन्द्र मसी-ति छदि रधि नि दधा-त्यैन्द्र॰ हि देवतया सदो, विश्वजनस्य छायेत्याह - विश्वजनस्य ह्येषा छाया- यथ्सदो, नवछदि।।

53।।❀ तेजस्कामस्य मिनुया- त्त्रिवृता स्तोमेन संमित- न्तेज स्त्रिवृ- त्तेजस्व्येव भव, त्येकादशछ.दीन्द्रियकाम-स्यैकादशाक्षरा त्रिष्टु- गिन्द्रिय-न्त्रिष्टु.गिन्द्रियाव्येव भवति, पञ्चदशछदि भ्रातृव्यवतः- पञ्चदशो वज्रो- भ्रातृव्याभिभूत्यै, सप्तदशछदि प्रजाकामस्य - सप्तदशः प्रजापतिः- प्रजापते राप्त्यो, एकविꣳशतिछदि प्रतिष्ठाकाम-स्यैकविꣳश स्स्तोमानां प्रतिष्ठा- प्रतिष्ठित्यो, उदरँ वै सद- ऊर्गुदुम्बरो- मध्यते औदुम्बरीं मिनोति - मध्यत एव प्रजाना मूर्ज न्दधाति- तस्मात्।। 54।।❀ मध्यत ऊर्जा भुञ्जते, यजमानलोके वै दक्षिणानि छदीꣳषि - भ्रातृव्यलोक उत्तराणि, दक्षिणा न्युत्तराणि करोति - यजमान मेवायजमाना.दुत्तर.ङ्करोति - तस्मा.द्यजमानोऽयजमाना दुत्तरो,ऽन्तर्वर्ता न्करोति व्यावृत्त्यै - तस्मा दरण्यं प्रजा उपजीवन्ति, परि त्वा गिर्वणो गिर इत्याह - यथायजु रेवैत,दिन्द्रस्य स्यूरसीन्द्रस्य ध्रुव मसीत्या-हैन्द्रꣳ हि देवतया सदो, यं प्रथम.ङ्ग्रन्थि ङ्ग्रथ्नीया- द्यत्तन्न विस्रꣳसये- दमेहेनाध्वर्युः प्रमीयेत- तस्माथ्से विस्रस्यः।। 55।। (अपहत्यै तस्मा त्पितृदेवत्य न्तेनैव नवछदि तस्माथ्सदः पञ्चदश च। 10।)

❀ शिरो वा एत.द्यज्ञस्य - यद्धविर्धानं, प्राणा उपरवा हविर्धाने खायन्ते - तस्मा.च्छीर्ष न्प्राणा अधस्ता त्खायन्ते - तस्मा दधस्ता च्छीर्ष्णः प्राणा, रक्षोहणो वलगहनो वैष्णवा न्खनामीत्याह - वैष्णवा हि देवतयोपरवा, असुरा वै निर्यन्तो देवानां प्राणेषु वलगा न्न्यखन- न्ता.न्बाहुमात्रे ऽन्वविन्द- न्तस्माद्बाहुमात्राः खायन्ते, इद मह.न्तँ वलग मुद्वपामि-।। 56।।❀ यन्न स्समानो यमसमानो निचखानेत्याह- द्वौ वाव पुरुषौ- यश्चैव समानो- यश्चासमानो, यमेवास्मै- तौ वलग न्निखनत- स्तमेवोद्वपति, सन्तृणत्ति - तस्मा थ्सन्तृण्णा अन्तरतः प्राणा, न सम्भिनत्ति - तस्मा.दसम्भिन्नाः प्राणा, अपोऽव नयति - तस्मा दार्द्रा अन्तरतः प्राणा, यवमती रवनयति-।। 57।।❀ ऊर्ग्वै यवः- प्राणा उपरवाः- प्राणेष्वेवोर्ज न्दधाति, बर्हि रव स्तृणाति - तस्मा ल्लोमशा अन्तरतः प्राणा, आज्येन व्याघारयति - तेजो वा आज्यं- प्राणा उपरवाः- प्राणेष्वेव तेजो दधाति, हनू~ वा एते~ यज्ञस्य- यदधिषवणे~, न सन्तृण- त्त्यसन्तृण्णे~ हि हनू~, अथो~ खलु दीर्घसोमे सन्तृद्ये~ धृत्यै, शिरो वा एत द्यज्ञस्य - यद्धविर्धानम्,।। 58।।❀ प्राणा उपरवा- हनू~ अधिषवणे~ जिह्वा चर्म - ग्रावाणो दन्ता- मुख माहवनीयो- नासिकोत्तरवेदि- रुदरꣳ सदो, यदा खलु वै जिह्वया दथ्स्वधि खाद- त्यथ मुख.ङ्गच्छति, यदा मुख ङ्गच्छ-त्यथोदर ङ्गच्छति, तस्माद्धविर्धाने चर्म न्नधि ग्रावभि रभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति, यो वै विराजो यज्ञमुखे दोहँ वेद - दुह एवैना,मियँ वै विरा-ड्तस्यै

त्वक्क.मौधोऽधिषवणे~ स्तना उपरवौ- ग्रावाणो वथ्सौ- ऋत्विजो दुहन्ति - सोमः पयो, ये एवँ वेद - दुहं एवैनाम्।। 59।। (वपामि यवमती रव नयति हविर्धान मेव त्रयोविꣳशतिश्च। 11।)
(यदुभौ देवासुरा मिथ स्तेषाꣳ सुवर्गँ यद्वा अनीशानः पुरोहविषि तेभ्य स्सोत्तरवेदि र्बद्ध न्देवस्याभ्रिꣳ शिरो वा एकादश। 11। यदुभा वित्याह देवानाँ यज्ञो देवेभ्यो न रथाय यजमानाय परस्ता दर्वाची न्नवपञ्चाशत्। 59। यदुभौ दुह एवैनाम्।)

## षष्ठकाण्डे तृतीयः प्रपाठकः

### सौ।का।1। आध्वर्यव ब्राह्मणम् 3 (एकादशानुवाकाः 11)

❀ चात्वाला.द्धिष्णिया नुप वपति - योनिर्वै यज्ञस्य चात्वालँ- यज्ञस्य सयोनित्वाय, देवा वै यज्ञं पराऽजयन्त - तमाग्नीध्रा त्पुन रपाजय,न्नेतद्वै यज्ञस्यापराजितँ - यदाग्नीध्रँ, यदाग्नीध्रा.द्धिष्णियान् विहरति - यदेव यज्ञस्यापराजित- न्तत एवैनं पुन स्तनुते, पराजित्येव खलु वा एते यन्ति - ये बहिष्पवमानꣳ सर्पन्ति, बहिष्पवमाने स्तुते।। 1।। ❀ आहा-ऽग्नी.दग्नीन् विहर- बर्हि स्तृणाहि - पुरोडाशाꣳ अलङ्कुर्वि-ति, यज्ञ मेवापजित्य पुन स्तन्वाना य-न्त्यङ्गारै र्द्वे~ सवने~ विहरति - शलाकाभि स्तृतीयꣳ सशुक्रत्वाया,ऽथो~ सम्भर त्येवैन,द्धिष्णिया वा अमुष्मि.न्लोके सोम मरक्ष- न्तेभ्योऽधि सोम माऽहर- न्तमन्ववाय-न्तं पर्यविशन्, य एवँ वेद - विन्दते।। 2।। ❀ परिवेष्टार,न्ते सोमपीथेन व्यार्ध्यन्त - ते देवेषु सोमपीथ मैच्छन्त, ता.न्देवा अब्रुव- न्द्वेद्वे~ नामनी~ कुरुध्व-मथ प्र वाऽफ्स्यथ न वे,त्यग्नयो वा अथ धिष्णिया- स्तस्मा.द्विनामा ब्राह्मणोऽर्धुक,स्तेषाँ ये नेदिष्ठं पर्यविश-न्ते सोमपीथं प्राऽऽप्नुव- न्नाहवनीय आग्नीध्रीयो होत्रीयो मार्जालीय- स्तस्मा त्तेषु जुह्व, त्यतिहाय वषट्करोति - वि हि।। 3।। ❀ एते सोमपीथेनाऽऽर्ध्यन्त, देवा वै याः प्राची राहुती रजुहवु-र्ये पुरस्ता दसुरा आस- न्ताꣳस्ताभिः प्राणुदन्त, याः प्रतीची र्ये पश्चा दसुरा आस- न्ताꣳस्ताभि रपानुदन्त, प्राची रन्या आहुतयो हूयन्ते - प्रत्यङ्ङासीनो धिष्णिया न्व्याघारयति- पश्चा.च्चैव पुरस्ताच्च यजमानो भ्रातृव्या न्प्रणुदते- तस्मा त्पराचीः प्रजाः प्रवीयन्ते - प्रतीचीः।। 4।। ❀ जायन्ते, प्राणा वा एते- यद्धिष्णिया, यदध्वर्युः प्रत्यङ्धिष्णिया नतिसर्पे- त्प्राणा न्थ्सङ्कर्षे- त्प्रमायुक स्स्या,न्नाभि र्वा एषा यज्ञस्य- यद्धो,तोर्ध्वः खलु वै नाभ्यै प्राणो- ऽवा ङपानो, यदध्वर्युः प्रत्यङ् होतार मतिसर्पे- दपाने प्राण न्दध्या- त्प्रमायुक स्स्या,न्नाध्वर्यु रुप गाये- द्वाग्वीर्यो वा अध्वर्यु, र्यदध्वर्यु रुपगाये- दुद्गात्रे।। 5।। ❀ वाचꣳ सं प्र यच्छे- दुपदासुकाऽस्य वाक्थ्स्या,द्ब्रह्मवादिनो वदन्ति - नासꣳस्थिते सोमेऽध्वर्युः प्रत्य'2'ङ्स्सदोऽतीया-दथ कथा दाक्षिणानि

होतु मेति, यामो हि स तेषा-ङ्कस्मा अह देवी यामँ वाऽयामँ वाऽनुज्ञास्यन्ती,त्युत्तरेणाऽऽग्नीध्रं परीत्य जुहोति दाक्षिणानि - न प्राणा न्थ्सङ्कर्षति, न्यन्ये धिष्णियो उप्यन्ते नान्ये, या.न्निवपति- तेन तान्प्रीणाति, यान्न निवपति - यदनुदिशति - तेन तान्।। 6।। (स्तुते विन्दते हि वीयन्ते प्रतीची रुद्रात्र उप्यन्ते चतुर्दश च। 1।)

❀ सुवर्गाय वा एतानि लोकाय हूयन्ते - यद्वैसर्जनानि, द्वाभ्या.ङ्गार्हपत्ये जुहोति -द्विपाद्यजमानः प्रतिष्ठित्या, आग्नीध्रे जुहो- त्यन्तरिक्ष एवाऽऽक्रमते, आहवनीये जुहोति - सुवर्ग मेवैनँ लोक ङ्गमयति, देवान् वै सुवर्गँ लोकँ यतो रक्षाऽस्यजिघाऽस,न्ते सोमेन राज्ञा रक्षाऽस्यपहत्या-ऽप्सु मात्मान.ङ्कृत्वा सुवर्गँ लोक माय,न्रक्षसा मनुपलाभायाऽऽत्त स्सोमो भव-त्यथ।। 7।। ❀ वैसर्जनानि जुहोति- रक्षसा.मपहत्यै, त्वऽ सोम तनूकृद्भ्य इत्याह - तनूकृद्ध्येषि, द्वेषोभ्यो ऽन्यकृतेभ्य इत्याहा-ऽन्यकृतानि हि रक्षाऽ,स्युरु यन्ताऽसि वरूथ मित्याहोरु.ण स्कृधीति वावैतदाह, जुषाणो अप्तु राज्यस्य वेत्वित्याहा- ऽप्सुमेव यजमान.ङ्कृत्वा सुवर्गँ लोक.ङ्गमयति, रक्षसा मनुपलाभाया-ऽऽ ऽऽसोम न्ददते-।। 8।। ❀ आ ग्रावृण्णे- आ वायव्या-न्या द्रोणकलश, मुत्पत्नी.मा नय- न्त्यन्वनाऽसि प्र वर्तयन्ति, याव देवास्यास्ति - तेन सह सुवर्गँ लोक मेति, नयवत्यर्चा ऽऽग्नीध्रे जुहोति - सुवर्गस्य लोकस्याभिनीत्यै, ग्रावृण्णो वायव्यानि द्रोणकलश माग्नीध्र उप वासयति, वि ह्येन न्तै गृह्णते, यथ्सहोपवासये-दपुवायेत, सौम्यर्चा प्र पादयति - स्वया।। 9।। ❀ एवैन न्देवतया प्र पादय,त्यदित्या स्सदोऽस्यदित्या स्सद आ सीदेत्याह - यथायजु रेवैत,द्यजमानो वा एतस्य पुरा गोप्ता भव,त्येष वो देव सवित स्सोम इत्याह - सवितृप्रसूत एवैन न्देवताभ्य स्सं प्र यच्छ,त्येतत्त्वऽ सोम देवो देवा नुपागा इत्याह -देवो ह्येष सन्न्।। 10।। ❀ देवा नुपै,तीद महं मनुष्यो मनुष्या नित्याह - मनुष्यो2(ओ) ह्येष स न्मनुष्या नुपैति, यदेत द्यजु.र्न ब्रूया- दप्रजो अपशु र्यजमान स्स्या,थ्सह प्रजया सह रायस्पोषेणेत्याह - प्रजयैव पशुभि स्सहेमँ लोक मुपाऽऽवर्तते, नमो देवेभ्य इत्याह - नमस्कारो हि देवानाऽ, स्वधा पितृभ्य इत्याह - स्वधाकारो हि।। 11।। ❀ पितृणा, मिद मह न्निर्वरुणस्य पाशा दित्याह - वरुणपाशा देव निर्मुच्यते,ऽग्ने व्रतपत आत्मनः पूर्वा तनू रादेयेत्याहुः- को हि तद्वेद - यद्वसीयान्थ्स्वे वशे भूते पुनर्वा ददाति न वेति, ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना, य एवँ विद्वा न्ग्रावृण्ण आग्नीध्र उपवासयति - नैनं मलिम्लुसेना विन्दति।। 12।। (अथ ददते स्वया स2न्थ्वधाकारो हि विन्दति।। 2।)

❀ वैष्णव्यर्चा हुत्वा यूप मच्छैति - वैष्णवो वै देवतया यूप- स्स्वयैवैन न्देवतयाऽच्छै,त्यत्यन्या नगा न्नान्या नुपागा मित्याहा-ऽति ह्यन्या नेति नान्या नुपै,त्यर्वात्त्वा परै रविदं परोऽवरै रित्याहा-ऽर्वाग्घ्येनं परै र्विन्दति- परोऽवरै स्तन्त्वा जुषे,।। 13।। ❀ वैष्णव न्देवयज्याया इत्याह - देवयज्यायै ह्येन.ञ्जुषते, देवस्त्वा सविता मध्वाऽनक्त्वित्याह - तेजसैवैन मन,त्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसी रित्याह - वज्रो वै स्वधिति श्शान्त्यै, स्वधिते र्वृक्षस्य बिभ्यत꞉ प्रथमेन शकलेन सह तेज꞉ परा पतति, य꞉ प्रथम श्शकल꞉ परापते- त्तमप्याहरे-थ्सतेजसम्।। 14।। ❀ एवैन मा हर,तीमे वै लोका यूपा त्प्रयतो बिभ्यति, दिव मग्रेण मा लेखी रन्तरिक्षं मध्येन मा हिꣳसी रित्या-हैभ्य एवैनँ लोकेभ्य श्शमयति, वनस्पते शतवल्शो विरोहे त्याव्रश्चने जुहोति - तस्मा दाव्रश्चना द्वृक्षाणां भूयाꣳसि उत्तिष्ठन्ति, सहस्रवल्शा वि वयꣳ रुहेमेत्याहा-ऽऽशिष मेवैता मा शास्ते,ऽनक्षसङ्गम्।। 15।। ❀ वृश्चे, द्यदक्षसङ्गँ वृश्चे- दधेईषँ यजमानस्य प्रमायुकꣳ स्या,द्य ङ्कामयेताप्रतिष्ठित स्स्यादि-त्यारोह न्तस्मै वृश्चे- देष वै वनस्पतीना मप्रतिष्ठितो-ऽप्रतिष्ठित एव भवति, यङ्कामयेतापशु.स्स्यादि- त्यपर्ण न्तस्मै शुष्काग्रँ वृश्चे- देष वै वनस्पतीना मपशव्यो-ऽपशु रेव भवति, यङ्कामयेत पशुमा.न्थ्स्यादिति- बहुपर्ण न्तस्मै बहुशाखँ वृश्चे- देष वै।। 16।। ❀ वनस्पतीनां पशव्य꞉- पशुमानेव भवति, प्रतिष्ठितँ वृश्चे त्प्रतिष्ठाकाम,स्यैषे वै वनस्पतीनां प्रतिष्ठितो- य.स्समे भूम्यै स्वाद्योने रूढ꞉ प्रत्येव तिष्ठति, य꞉ प्रत्य.ङ्ङुपनत- स्तँ वृश्चे-थ्से हि मेध मभ्युपनत꞉, पञ्चारत्नि न्तस्मै वृश्चे- द्यङ्कामयेतोपैन मुत्तरो यज्ञो नमेदिति - पञ्चाक्षरा पङ्क्ति꞉- पाङ्क्तो यज्ञ- उपैन मुत्तरो यज्ञः।। 17।। ❀ नमति, षडरत्निं प्रतिष्ठाकामस्य - षड्वा ऋतव -ऋतुष्वेव प्रति तिष्ठति, सप्तारत्निं पशुकामस्य - सप्तपदा शक्करी - पशव.श्शक्करी - पशू नेवाव रुन्धे, नवारत्नि न्तेजस्कामस्य - त्रिवृता स्तोमेन सम्मित- न्तेज स्त्रिवृ- त्तेजस्व्येव भव,त्येकादशारत्नि मिन्द्रियकाम- स्यैकादशाक्षरा त्रिष्टु- गिन्द्रिय न्त्रिष्टु-गिन्द्रियाव्येव भवति, पञ्चदशारत्निं भ्रातृव्यवत꞉- पञ्चदशो वज्रो- भ्रातृव्याभिभूत्यै, सप्तदशारत्निं प्रजाकामस्य - सप्तदश꞉ प्रजापति꞉- प्रजापते राप्त्यै, एकविꣳशत्यरत्निं प्रतिष्ठाकाम-स्यैकविꣳश स्स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै, अष्टाऽश्रि र्भव-त्यष्टाऽक्षरा गायत्री- तेजो गायत्री- गायत्री यज्ञमुख- न्तेजसैव गायत्रिया यज्ञमुखेन सम्मितः।। 18।। (जुषे सतेजस मनक्षसङ्गं बहुशाखँ वृश्चे देष वै यज्ञ उपैन मुत्तरो यज्ञ आप्त्या एकान्न विꣳशतिश्च। 3।)

❀ पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्या-हैभ्य एवैनँ लोकेभ्य꞉ प्रोक्षति, पराञ्चं प्रोक्षति - पराङिव हि सुवर्गो लोक꞉, क्रूर मिव वा एत त्करोति- यत्खन,त्यपोऽव नयति शान्त्यै, यवमती रव नय-त्यूर्ग्वै यवो

- यजमानेन यूप स्सम्मितो- यावा.नेव यजमान- स्तावती मेवास्मि न्नूर्ज न्दधाति,।। 19।।❀ पितृणाꣳ सदन मसीति बर्हि रव स्तृणाति, पितृदेवत्य1(अ)ꣳ ह्येत- द्यन्निखातँ, यद्बर्हि.रनवस्तीर्य मिनुया- त्पितृदेवत्यो निखात.स्स्या,द्बर्हि रवस्तीर्य मिनो- त्यस्या.मेवैनं मिनोति, यूपशकल मवास्यति - सतेजस मेवैनं मिनोति, देवस्त्वा सविता मध्वाऽनक्त्वित्याह - तेजसैवैन मनक्ति, सुपिप्पलाभ्य स्त्वौषधीभ्य इति चषालं प्रति।। 20।।❀ मुञ्चति - तस्माच्छीर्षत ओषधयः फल ङ्गृह्ण,न्त्यनक्ति - तेजो वा आज्यँ - यजमानेनाग्निष्ठाऽश्रि स्सम्मिता, यदग्निष्ठा मश्रि मनक्ति - यजमान मेव तेजसाऽन,क्त्याऽन्त मनक्त्याऽन्त मेव यजमान न्तेजसाऽनक्ति, सर्वतः परिमृश-त्यपरिवर्ग मेवास्मि न्तेजो दधा,त्युद्दिवꣳ स्तभानान्तरिक्षं पृणेत्या-हैषाँ लोकानाँ विधृत्यै, वैष्णव्यर्चा।। 21।।❀ कल्पयति - वैष्णवो वै देवतया यूप- स्स्वयैवैन न्देवतया कल्पयति, द्वाभ्या.ङ्कल्पयति -द्विपा द्यजमानः प्रतिष्ठित्यै, यङ्कामयेत तेजसैन न्देवताभि रिन्द्रियेण व्यर्धयेय मि-त्यग्निष्ठा न्तस्याश्रि.माहवनीया दित्थँ वेत्थँ वाऽति नावये- त्तेजसैवैन न्देवताभि रिन्द्रियेण व्यर्धयति, यङ्कामयेत तेजसैन न्देवताभि रिन्द्रियेण समर्धयेय मिति-।। 22।।❀ अग्निष्ठा न्तस्याश्रि माहवनीयेन सं मिनुया- त्तेजसैवैन न्देवताभि रिन्द्रियेण समर्धयति, ब्रह्मवनिन्त्वा क्षत्रवनि मित्याह - यथायजु रेवैत,त्परि व्यय-त्यूर्ग्वै रशना- यजमानेन यूप स्सम्मितो - यजमान मेवोर्जा समर्धयति, नाभिदघ्ने परिव्ययति - नाभिदघ्न एवास्मा ऊर्ज न्दधाति- तस्मा न्नाभिदघ्न ऊर्जा भुञ्जते, यङ्कामयेतोर्जैनम्।। 23।।❀ व्यर्धयेय- मित्यूर्ध्वाँ वा तस्यावाचीँ वाऽवोहे- दूर्जैवैनँ व्यर्धयति, यदि कामयेत वर्षुकः पर्जन्य स्स्यादि-त्यवाची मवोहे- द्वृष्टि मेव नियच्छति, यदि कामयेतावर्षुक स्स्यादि-त्यूर्ध्वा मुदूहे- द्वृष्टि मेवोद्यच्छति, पितृणा न्निखातं - मनुष्याणा मूर्ध्व न्निखाता.दा रशनायो- ओषधीनाꣳ रशना- विश्वेषाम्।। 24।।❀ देवाना मूर्ध्वꣳ रशनाया आ चषाला- दिन्द्रस्य चषालꣳ- साध्याना मतिरिक्तꣳ, स वा एष सर्वदेवत्यो - यद्यूपो, यद्यूपं मिनोति - सर्वा ^एव देवताः प्रीणाति, यज्ञेन वै देवा स्सुवर्गँ लोक माय- न्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति, ते यूपेन योपयित्वा सुवर्गँ लोक माय- न्तमृषयो यूपेनैवानु प्राजान,न्तद्यूपस्य यूपत्वम्,।। 25।।❀ यद्यूपं मिनोति - सुवर्गस्य लोकस्य प्रज्ञात्यै, पुरस्ता न्मिनोति - पुरस्ताद्धि यज्ञस्य प्रज्ञायते,ऽप्रज्ञातꣳ हि त-द्य दतिपन्न आहु-रिद.ङ्कार्य मासी दिति, साध्या वै देवा यज्ञ मत्यमन्यन्त - तान् यज्ञो नास्पृश-त्तान् यद्यज्ञस्यातिरिक्त मासी-त्तदस्पृश,दतिरिक्तँ वा एत द्यज्ञस्य - यदग्ना.वग्निं मथित्वा प्रहर,त्यतिरिक्त मेतत्।। 26।।❀ यूपस्य- यदूर्ध्वञ्चषाला,त्तेषा न्तद्भागधेय-न्तानेव तेन

प्रीणाति, देवा वै सꣳस्थिते सोमे - प्र स्रुचोऽहर-न्प्र यूप,न्तेऽमन्यन्त - यज्ञवेशसँ वा इद.ङ्कुर्म इति, ते प्रस्तरꣳ स्रुचा.न्निष्क्रयण मपश्यन्'2'-थ्स्वरुँ यूपस्य, सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति - जुहोति स्वरु-मयज्ञवेशसाय।। 27।। (दधाति प्रत्यृचा समर्धयेय मित्यूर्जैनँ विश्वेषाँ यूपत्व मतिरिक्त मेत द्विचत्वारिꣳशच्च। 4।)

❀ साध्या वै देवा अस्मि न्लोक आस- न्नान्य.त्किञ्चन मिष,त्तेऽग्नि मेवाग्नये मेधायाऽऽलभन्त, न ह्यन्य दालम्भ्य मविन्द,न्ततो वा इमाः प्रजाः प्राजायन्त, यदग्ना.वग्निं मथित्वा प्रहरति - प्रजानां प्रजननाय, रुद्रो वा एष यदग्नि- र्यजमानः पशु,र्यत्पशु मालभ्याग्निं मन्थे- द्रुद्राय यजमानम्।। 28।।❀ अपि दध्या-त्प्रमायुकस्स्या,दथो~ खल्वाहु- रग्नि.स्सर्वा देवता - हवि रेत.द्यत्पशु.रिति, यत्पशु मालभ्याग्निं मन्थति - हव्यायैवाऽऽसन्नाय सर्वा देवता जनय,त्युपाऽऽकृत्यैव मन्थ्य, स्तन्नेवाऽऽलब्ध-न्नेवानालब्ध,मग्ने र्जनित्र मसीत्याहा-ऽग्ने र्ह्येत.ज्जनित्रँ, वृषणौ स्थ इत्याह - वृषणौ।। 29।।❀ ह्येता,वुर्वश्यस्यायु रसीत्याह मिथुनत्वाय, घृतेनाक्ते~ वृषण न्दधाथा मित्याह - वृषणꣳ ह्येते~ दधाते~, ये~ अग्नि.ङ्गायत्र ञ्छन्दोऽनु प्र जायस्वेत्याह - छन्दोभि रेवैनं प्रजनय,- फ त्यग्नये मथ्यमानायानु ब्रूही-त्याह, सावित्री मृच मन्वाह - सवितृप्रसूत एवैनं मन्थति, फ जातायानु ब्रूहि।। 30।।❀फ प्रह्रियमाणायानु ब्रूही-त्याह- काण्डेकाण्डे एवैन.ङ्क्रियमाणे समर्धयति, गायत्री स्सर्वा अन्वाह - गायत्रछन्दा वा अग्नि- स्स्वेनैवैन ञ्छन्दसा समर्धय,त्यग्निः पुरा भव-त्यग्निं मथित्वा प्र हरति, तौ सम्भवन्तौ यजमान मभि सम्भवतो, भवत न्न स्समनसा.वित्याह शान्त्यै, प्रहृत्य जुहोति - जातायैवास्मा अन्न मपि दधा,त्याज्येन जुहो- त्येतद्वा अग्नेः प्रियन्धाम यदाज्यं- प्रियेणैवैन न्धाम्ना समर्धय-त्यथो~ तेजसा।। 31।। (यजमानमाह वृषणौ जातायानु ब्रूह्यप्यष्टादश च। 5।)

❀ इषे त्वेति बर्हि.रा दत्त- इच्छत इव ह्येष यो यजत, उपवी रसीत्या-होप ह्येना नाकरो,त्युपो~ देवा न्दैवी र्विशः प्रागु रित्याह - दैवी र्ह्येता विश स्सती र्देवा नुपयन्ति, वह्नी रुशिजे इत्या-हर्त्विजो वै वह्नय उशिज- स्तस्मा.देवमाह, बृहस्पते धारया वसूनीति।। 32।।❀ आह - ब्रह्म वै देवानां बृहस्पति- र्ब्रह्मणैवास्मै पशू नव रुन्धे, हव्या ते स्वदन्ता मित्याह - स्वदय त्येवैना,न्देव त्वष्ट र्वसु रण्वेत्याह - त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृ- द्रूप मेव पशुषु दधाति, रेवती रमध्व मित्याह - पशवो वै रेवतीः- पशू नेवास्मै रमयति, देवस्य त्वा सवितुः प्रसव इति।। 33।।❀ रशना मा दत्ते प्रसूत्या, अश्विनो र्बाहुभ्या मित्याहा-ऽश्विनौ हि देवाना मध्वर्यू~ आस्तां- पूष्णो हस्ताभ्या मित्याह यत्या, ऋतस्य त्वा देवहविः

पाशेनाऽऽरभ इत्याह - सत्यँ वा ऋतः- सत्येनैवैन मृतेनाऽऽरभते,ऽख्ष्णया परि हरति - वध्यः हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै, धर्षा मानुषा निति नियुनक्ति धृत्या, अद्भ्यः।। 34।।❀ त्वौषधीभ्यः प्रोक्षामीत्याहा-ऽद्भ्यो ह्येषे ओषधीभ्य स्सम्भवति, यत्पशु रपां पेरु रसीत्या-हैष ह्यपां पाता- यो मेधायाऽऽरभ्यते, स्वात्त ञ्चिथ्सदेवः हव्यमापो देवी स्स्वदतैन मित्याह - स्वदयत्येवैन,मुपरिष्टा त्प्रोक्ष-त्युपरिष्टा देवैनं मेध्य.ङ्करोति, पायय-त्यन्तरते एवैनं मेध्य.ङ्करो, त्यधस्ता दुपोक्षति - सर्वत एवैनं मेध्य.ङ्करोति।। 35।। (वसूनीति प्रसव इत्यद्भ्योऽन्तरत एवैन न्दश च। 6।)

❀ अग्निना वै होत्रा देवा असुरा नभ्यभव-न्नग्नये समिध्यमानायानु ब्रूही-त्याह भ्रातृव्याभिभूत्यै, सप्तदश सामिधेनी रन्वाह - सप्तदशः प्रजापतिः - प्रजापते राप्त्यै, सप्तदशान्वाह - द्वादश मासाः-पञ्चर्तव- स्से सँवथ्सर- सँवथ्सरं प्रजा अनु प्र जायन्ते- प्रजानां प्रजननाय, देवा वै सामिधेनी रनूच्य-यज्ञ न्नान्वपश्य'2',न्थ्से प्रजापति स्तूष्णी माघारम्।। 36।।❀ आऽघारय- त्ततो वै देवा यज्ञ मन्वपश्यन्, यत्तूष्णी माघार माघारयति - यज्ञस्यानुख्यात्या, असुरेषु वै यज्ञ आसी- त्तन्देवा स्तूष्णीःहोमेनावृञ्जत, यत्तूष्णी माघार माघारयति - भ्रातृव्यस्यैव तद्यज्ञँ वृङ्क्ते, परिधीन्थ्सं मार्ष्टि - पुना.त्येवैना,न्त्रिस्त्रि स्सं मार्ष्टि - त्र्यावृद्धि यज्ञो-ऽथो~ रक्षसा मपहत्यै, द्वादश सं पद्यन्ते - द्वादश।। 37।।❀ मासा स्सँवथ्सर- स्सँवथ्सर मेव प्रीणा,त्यथो~ सँवथ्सर मेवास्मा उप दधाति - सुवर्गस्य लोकस्य समष्ट्यै, शिरो वा एतद्यज्ञस्य - यदाघारो,ऽग्नि स्सर्वा देवता, यदाघार माघारयति - शीर्षत एव यज्ञस्य यजमान स्सर्वा देवता अव रुन्धे, शिरो वा एत.द्यज्ञस्य - यदाघारे, आत्मा पशु,राघार माघार्य पशुः समन-क्त्यात्म न्नेव यज्ञस्य।। 38।।❀ शिरः प्रति दधाति, सन्ते प्राणो वायुना गच्छता मित्याह - वायुदेवत्यो वै प्राणो- वाया.वेवास्य प्राण.ञ्जुहोति, सँ यजत्रै रङ्गानि सँ यज्ञपति राशिषेत्याह - यज्ञपति मेवास्याऽऽशिष.ङ्गमयति, विश्वरूपो वै त्वाष्ट्र उपरिष्टा त्पशु मभ्यवमी- त्तस्मा दुपरिष्टा.त्पशो.र्नाव द्यन्ति, यदुपरिष्टा.त्पशुः समनक्ति - मेध्य मेव।। 39।।❀ एन.ङ्करो,त्यृत्विजो वृणीते - छन्दाःस्येव वृणीते, सप्त वृणीते - सप्त ग्राम्याः पशव- स्सप्ताऽऽरण्या- स्सप्त छन्दाः-स्युभयस्यावरुद्ध्या, एकादश प्रयाजान् यजति - दश वै पशोः प्राणा- आत्मैकादशो- यावानेव पशु- स्तं प्र यजति, वपा मेकः परिशय-आत्मैवाऽऽत्मानं परि शये, वज्रो वै स्वधिति- र्वज्रो यूपशकलो- घृत.ङ्खलु वै देवा वज्र.ङ्कृत्वा सोम मघ्न-न्घृतेनाक्तौ पशु न्त्रायेथा मित्याह- वज्रेणैवैनँ वशे कृत्वाऽऽलभते।। 40।। (आघारं पद्यन्ते द्वादशाऽऽत्म न्नेव यज्ञस्य मेध्य मेव खलु वा अष्टादश च। 7।)

❀ पर्यग्नि करोति - सर्वहुत मेवैन.ङ्करो-त्यस्कन्दाया,ऽस्कन्न॰ हि त-द्यद्धुतस्य स्कन्दति, त्रिः पर्यग्नि करोति - त्र्यावृद्धि यज्ञो-ऽथो रक्षसा मपहत्यै, ब्रह्मवादिनो वद-न्त्यन्वारभ्यः पशू '3' र्नान्वारभ्या '3' इति, मृत्यवे वा एषे नीयते- यत्पशु,स्तँ यदन्वारभेत - प्रमायुको यजमान स्स्या,दथो~ खल्वाहु-स्सुवर्गाय वा एषे लोकाय नीयते- यत्।। 41।। ❀ पशु.रिति, यन्नान्वारभेत - सुवर्गा ल्लोका द्यजमानो हीयेत, वपाश्रपणीभ्या मन्वारभते, तन्नेवान्वारब्ध- न्नेवानन्वारब्ध, 卐 मुप प्रेष्य होतर्हव्या देवेभ्य-इत्या-हेषित॰ हि कर्म क्रियते, रेवती र्यज्ञपतिं प्रियधाऽविशतेत्याह - यथायजु रेवैत,दग्निना पुरस्ता देति - रक्षसा मपहत्यै, पृथिव्या स्सम्पृचः पाहीति बर्हिः।। 42।। ❀ उपास्य त्यस्कन्दाया,ऽस्कन्न॰ हि त-द्यद्बर्हिषि स्कन्द,त्यथो~ बर्हिषद मेवैन.ङ्करोति - पराङावर्ततेऽध्वर्युः पशो स्सञ्ज्ञप्यमाना,त्पशुभ्य एव तन्निह्नुते- आत्मनोऽनाव्रस्काय, गच्छति श्रियं - प्र पशू नाप्नोति - ये एवँ वेद, पश्चाल्लोका वा एषा प्रा.च्युदानीयते - यत्पत्नी, नमस्त आतानेत्याहा-ऽऽदित्यस्य वै रश्मयः।। 43।। ❀ आताना- स्तेभ्य एव नम.स्करो,त्यनर्वा प्रेहीत्याह - भ्रातृव्यो वा अर्वा - भ्रातृव्यापनुत्त्यै, घृतस्य कुल्या मनु सह प्रजया सह रायस्पोषेणेत्याहा-ऽऽशिष मेवैता मा शास्त, आपो देवी श्शुद्धायुवे इत्याह - यथायजु रेवैतत्।। 44।। (लोकाय नीयते यद्बर्ही रश्मय स्सप्तत्रिं॰शच्च। 8।)

❀ पशोर्वा आलब्धस्य प्राणान्छु.गृच्छति, वाक्त आप्यायतां- प्राणस्त आ प्यायता मित्याह- प्राणेभ्य एवास्य शुच॰ शमयति - सा प्राणेभ्योऽधि पृथिवी॰ शुक्प्रविशति, शमहोभ्या मिति नि नय-त्यहोरात्राभ्या मेव पृथिव्यै शुच॰ शमय,त्योषधे त्रायस्वैनꣳ स्वधिते मैन॰ हि॰सी रित्याह - वज्रो वै स्वधितिः।। 45।। ❀ शान्त्यै, पार्श्वत आ च्छ्यति - मध्यतो हि मनुष्या आच्छ्यन्ति, तिरश्चीन माच्छ्य- त्यनूचीन॰ हि मनुष्या आच्छ्यन्ति व्यावृत्त्यै, रक्षसां भागोऽसीति स्थविमतो बर्हि रक्त्वाऽपास्य-त्यस्नैव रक्षा॰सि निरवदयत, इद मह॰ रक्षोऽधम न्तमो नयामि - योऽस्मा.न्द्वेष्टि - यञ्च वय.न्द्विष्म इत्याह - द्वौ वाव पुरुषौ - यञ्चैव।। 46।। ❀ द्वेष्टि - यश्चैन न्द्वेष्टि - तावुभा.वधम न्तमो नय,तीषे त्वेति वपा मुत्खिद-तीच्छत इव ह्येषे- यो यजते, यदुपतृन्द्या- द्रुद्रोऽस्य पशू न्घातुक स्स्या,द्यन्नोपतृन्द्या- दयता स्या, दन्ययोपतृण-त्त्यन्यया न धृत्यै, घृतेन द्यावापृथिवी~ प्रोर्णुवाथा मित्याह - द्यावापृथिवी~ एव रसेनान,क्त्यच्छिन्नः।। 47।। ❀ राय.स्सुवीर इत्याह - यथायजु रेवैत,त्क्रूर मिव वा एत.त्करोति - यद्वपा मुत्खिद, त्युर्वन्तरिक्ष मन्विहीत्याह शान्त्यै, प्र वा एषोऽस्मा.ल्लोका च्च्यवते - यः पशुं मृत्यवे नीयमान मन्वारभते, वपाश्रपणी~ पुन रन्वारभते-ऽस्मि न्नेव लोके प्रति तिष्ठ,त्यग्निना

पुरस्ता देति - रक्षसा मपहत्या, अथो~ देवता एव हव्येन।। 48।। ❀ अन्वेति, नान्तम मङ्गार.मति हरे, य्यदन्तम मङ्गार मतिहरे- द्देवता अति मन्येत, वायो~ वीहि स्तोकाना मित्याह - तस्मा.द्विभक्ता स्स्तोका अव पद्यन्ते,ऽग्रँ वा एत त्पशूनाँ- यद्वपा-ऽग्र मोषधीनां बर्हि-रग्रेणैवाग्र९ समर्धय-त्यथो~ ओषधीष्वेव पशू न्प्रतिष्ठापयति, 卐 स्वाहाकृतीभ्य४ प्रेष्ये-त्याह।। 49।। ❀ यज्ञस्य समिष्ट्यै, प्राणापानौ वा एतौ पशूनाँ- यत्पृषदाज्य,मात्मा वपा पृषदाज्य मभिघार्य वपा मभि घारय-त्यात्म न्नेव पशूनां प्राणापानौ दधाति, स्वाहोर्ध्वनभसं मारुत.ङ्गच्छत मित्या-होर्ध्वनभा ह स्म वै मारुतो देवानाँ, वपाश्रपणी~ प्र हरति - तेनैवैने~ प्र हरति, विषूची~ प्रहरति - तस्मा.द्विष्वञ्चौ प्राणापानौ।। 50।। (स्वधिति श्चैवाच्छिन्नो हव्येनेष्येत्याह षड्चत्वारि९शच्च। 9।)

❀ पशु मालभ्य पुरोडाश न्निर्वपति - समेध मेवैन मा लभते, वपया प्रचर्य पुरोडाशेन प्रचर-त्यूर्ग्वै पुरोडाश - ऊर्ज मेव पशूनां मध्यतो दधा, त्यथो~ पशो रेव छिद्र मपि दधाति, पृषदाज्यस्योपहत्य त्रि४ पृच्छति,- 卐 श्रृत९ हवी 3 श्शमित- रिति, त्रिषत्या हि देवा, योऽश्रृत९ श्रृत माह - स एनसा, प्राणापानौ वै एतौ पशूनाम्-।। 51।। ❀ यत्पृषदाज्यं, पशो४ खलु वा आलब्धस्य हृदय मात्माऽभि समेति - यत्पृषदाज्येन हृदय मभिघारय-त्यात्मन्नेव पशूनाँ प्राणापानौ दधाति, पशुना वै देवा स्सुवर्गँ लोक माय,न्तेऽमन्यन्त - मनुष्या नोऽन्वाभविष्यन्तीति, तस्य शिर श्छित्वा मेधं प्राक्षारय'2'-न्थ्स प्रक्षोऽभव,त्तत्प्रक्षस्य प्रक्षत्वँ, यत्प्लक्षशाखोत्तरबर्हि र्भवति - समेधस्यैव।। 52।। ❀ पशो रवद्यति, पशुँ वै ह्रियमाण९ रक्षा९स्यनु सचन्ते,ऽन्तरा यूप.ञ्चाऽऽहवनीयञ्च हरति - रक्षसा मपहत्यै, पशो.र्वा आलब्धस्य मनोऽपक्रामति, 卐मनोतायै हविषोऽवदीयमानस्यानु ब्रूही-त्याह - मन एवास्याव रुन्धे, एकादशावदाना न्यव द्यति - दश वै पशो४ प्राणा- आत्मैकादशो- यावा.नेव पशु-स्तस्याव।। 53।। ❀ द्यति, हृदयस्याग्रेऽव द्य-त्यथ जिह्वाया- अथ वक्षसो, यद्वै हृदयेनाभिगच्छति - तज्जिह्वया वदति, यज्जिह्वया वदति - तदुरसोऽधि निर्वद-त्येतद्वै पशो र्यथापूर्वँ, यस्यैव.मवदाय यथाकाम मुत्तरेषा मवद्यति - यथापूर्व मेवास्य पशो.रवत्तं भवति, मध्यतो गुदस्याव द्यति - मध्यतो हि प्राण, उत्तमस्याव द्यति -।। 54।। ❀ उत्तमो हि प्राणो यदीतरँ, यदीतर मुभय मेवाजामि, जायमानो वै ब्राह्मण स्त्रिभिर्‌ऋणवा जायते - ब्रह्मचर्येणर्‌षिभ्यो- यज्ञेन देवेभ्य४- प्रजया पितृभ्य, एष वा अनृणो - य४ पुत्री यज्वा ब्रह्मचारिवासी, तदवदानै रेवाव दयते - तदवदानाना मवदानत्व,न्देवासुरा स्सँयत्ता आस- न्ते देवा अग्नि मब्रुव- न्त्वया वीरेणासुरा.नभि भवामेति,।। 55।। ❀ सोऽब्रवी.द्वरँ वृणै- पशो रुद्धार मुद्धरा इति,

स एत मुद्धार मुदहरत - दोः पूर्वार्धस्य - गुदं मध्यत- श्श्रोणिं.ञ्जघनार्धस्य, ततो देवा अभव-न्पराऽसुरा, यत्त्यङ्गाणा॒ समवद्यति - भ्रातृव्याभिभूत्यै, भवत्यात्मना - पराऽस्य भ्रातृव्यो भव,त्यरव्ष्णयाऽव द्यति - तस्मा.दरव्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै।। 56।। (एतौ पशूना॒ समेधस्यैव तस्यावोत्तमस्याव द्यतीति पञ्चचत्वारि॒शच्च। 10।)

❀ मेदसा स्रुचौ प्रोर्णोति - मेदोरूपा वै पशवो - रूप मेव पशुषु दधाति, यूष न्नवधाय प्रोर्णोति - रसो वा एषि पशूनाँ यद्यू- रसमेव पशुषु दधाति, पार्श्वेन वसाहोमं प्र यौति - मध्यँ वा एत त्पशूनाँ यत्पार्श्व॒, रस एष पशूनाँ यद्वसा, यत्पार्श्वेन वसाहोमं प्रयौति - मध्यते एव पशूना॒ रस न्दधाति, घ्नन्ति।। 57।।❀ वा एत त्पशुँ- यथ्सञ्ज्ञपय,न्त्यैन्द्रः खलु वै देवतया प्राण- ऐन्द्रोऽपान- ऐन्द्रः प्राणो, अङ्गेअङ्गे निदेध्यदित्याह - प्राणापानावेव पशुषु दधाति, देव त्वष्ट भूरि ते स॒स मेत्वित्याह - त्वाष्ट्रा हि देवतया पशवो, विषुरूपा यथ्सलक्ष्माणो भवथेत्याह - विषुरूपा ह्येते सन्त स्सलक्ष्माण- एतर्हि भवन्ति, देवत्रा यन्तम्।। 58।।❀ अवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्याहा-ऽनुमत मेवैनं मात्रा पित्रा सुवर्गँ लोक.ङ्गमय,त्यर्धर्चे वसाहोम.ञ्जुहो- त्यसौ वा अर्धर्च - इय मर्धर्च- इमे~ एव रसेनानक्ति, दिशो जुहोति - दिश एव रसेनान-क्त्यथो~ दिग्भ्य एवोर्ज॒ रस मव रुन्धे, प्राणापानौ वा एतौ पशूनाँ - यत्पृषदाज्यँ, वानस्पत्याः खलु।। 59।।❀ वै देवतया पशवो, यत्पृषदाज्यस्योपहत्याऽऽह -卐 वनस्पतयेऽनु ब्रूहि 卐 वनस्पतये प्रेष्ये-ति - प्राणापानावेव पशुषु दधा, त्यन्यस्यान्यस्य समवत्त॒ समवद्यति - तस्मा.न्नानारूपाः पशवो, यूष्णोप सिञ्चति - रसो वा एषि पशूनाँ यद्यू- रसमेव पशुषु दधा,तीडा मुप ह्वयते - पशवो वा इडा - पशू नेवोप ह्वयते, चतु रुप ह्वयते- ।। 60।।❀ चतुष्पादो हि पशवो, य.ङ्कामयेतापशु स्यादि-त्यमेदस्क न्तस्मा आ दध्या-न्मेदोरूपा वै पशवो - रूपेणैवैनं पशुभ्यो निर्भज- त्यपशु रेव भवति, यङ्कामयेत पशुमा न्थ्स्यादिति - मेदस्व त्तस्मा आ दध्या- न्मेदोरूपा वै पशवो- रूपेणैवास्मै पशू नव रुन्धे - पशुमा नेव भवति, प्रजापति र्यज्ञ मसृजत - स आज्यम्।। 61।।❀ पुरस्ता दसृजत - पशुं मध्यतः - पृषदाज्यं पश्चा,त्तस्मा दाज्येन प्रयाजा इज्यन्ते, पशुना मध्यतः - पृषदाज्येनानूयाजा- स्तस्मा देत न्मिश्र मिव, पश्चाथ्सृष्ट॒ ह्येकादशानूयाजान् यजति - दश वै पशोः प्राणा- आत्मैकादशो - यावा.नेव पशु- स्तमनु यजति, घ्नन्ति वा एत त्पशुँ- यथ्सञ्ज्ञपयन्ति, प्राणापानौ खलु वा एतौ पशूनाँ- यत्पृषदाज्यँ, यत्पृषदाज्येनानूयाजान् यजति -

प्राणापाना.वेव पशुषु दधाति।। 62।। (घ्नन्ति यन्तङ्खलु चतु रुप ह्वयत आज्यँ यत्पृषदाज्येन षड्च। 11।)

(चात्वाला थ्सुवर्गाय यद्वैसर्जनानि वैष्णव्यर्चा पृथिव्यै साध्या इषे त्वेत्यग्निना पर्यग्नि पशोः पशु मालभ्य मेदसा स्रुचा वेकादश। 11। चात्वाला द्देवा नुपैति मुञ्चति प्रह्रियमाणाय पर्यग्नि पशु मालभ्य चतुष्पादो द्विषष्टिः। 62। चात्वाला त्पशुषु दधाति।)

## षष्ठकाण्डे चतुर्थः प्रपाठकः

### सौ।का।1। आध्वर्यव ब्राह्मणम् 4 (त्रयोऽनुवाकाः 3)

यज्ञेन वै प्रजापतिः प्रजा असृजत - ता उपयड्भि रेवासृजत, यदुपयज उप यजति - प्रजा एव तद्यजमान.स्सृजते, जघनार्धा दवद्यति - जघनार्धाद्धि प्रजाः प्रजायन्ते, स्थविमतोऽव द्यति - स्थविमतो हि प्रजाः प्रजायन्ते,ऽसम्भिन्द न्नव द्यति - प्राणाना मसम्भेदाय, न पर्यावर्तयति, यत्पर्यावर्तये - दुदावर्तः प्रजा ग्राहुक स्स्या,थ्समुद्र.ङ्गच्छ स्वाहेत्याह - रेतः।। 1।। एव तद्दधा,त्यन्तरिक्ष.ङ्गच्छ स्वाहेत्याहा-ऽन्तरिक्षेणैवास्मै प्रजाः प्रजनय- त्यन्तरिक्षꣳ ह्यनु प्रजाः प्रजायन्ते, देवꣳ सवितार.ङ्गच्छ स्वाहेत्याह - सवितृप्रसूत एवास्मै प्रजाः प्रजनय, त्यहोरात्रे~ गच्छ स्वाहेत्याहा-ऽहोरात्राभ्या मेवास्मै प्रजाः प्रजनय- त्यहोरात्रे~ ह्यनु प्रजाः प्रजायन्ते, मित्रावरुणौ गच्छ स्वाहा।। 2।। इत्याह - प्रजास्वेव प्रजातासु प्राणापानौ दधाति, सोम.ङ्गच्छ स्वाहेत्याह - सौम्या हि देवतया प्रजा, यज्ञ ङ्गच्छ स्वाहेत्याह - प्रजा एव यज्ञियाः करोति, छन्दाꣳसि गच्छ स्वाहेत्याह - पशवो वै छन्दाꣳसि - पशू नेवाव रुन्धे, द्यावापृथिवी~ गच्छ स्वाहेत्याह - प्रजा एव प्रजाता द्यावापृथिवीभ्या मुभयतः परि गृह्णाति, नभः।। 3।। दिव्यङ्गच्छ स्वाहेत्याह - प्रजाभ्य एव प्रजाताभ्यो वृष्टि न्नियच्छ,त्यग्निँ वैश्वानर.ङ्गच्छ स्वाहेत्याह - प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति, प्राणानाँ वा एषोऽव द्यति - योऽवद्यति, गुदस्य मनो मे हार्दि यच्छेत्याह - प्राणा.नेव यथास्थान मुपह्वयते, पशोर्वा आलब्धस्य हृदयꣳ शुगृच्छति - सा हृदयशूलम्।। 4।। अभि समेति, यत्पृथिव्याꣳ हृदयशूल मुद्वासये- त्पृथिवीꣳ शुचाऽर्पये,द्यद.फ्स्वप श्शुचाऽर्पये,च्छुष्कस्य चाऽऽर्द्रस्य च सन्धा.वुद्वासय- त्युभयस्य शान्त्यै. यन्द्विष्या त्तन्ध्याये- च्छुचैवैन मर्पयति।। 5।। (रेतो मित्रावरुणौ गच्छ स्वाहा नभो हृदयशूल न्द्वात्रिꣳशच्च। 1।)

देवा वै यज्ञ माग्नीध्रे व्यभजन्त, ततो यदत्यशिष्यत- तदब्रुवन्-वसतु नु न इद मिति- तद्वसतीवरीणाँ वसतीवरित्व,न्तस्मि न्प्रात.र्न समशक्नुव- न्तदप्सु प्रावेशय-न्ता वसतीवरी रभवन्,वसतीवरी र्गृह्णाति, यज्ञो वै वसतीवरी-र्यज्ञ मेवाऽऽरभ्य गृहीत्वोप वसति, यस्यागृहीता अभि निम्रोचे- दनारब्धोऽस्य यज्ञस्स्यात्-।। 6।। यज्ञँ विच्छिन्द्या,ज्ज्योतिष्या वा गृह्णीया-द्धिरण्यँ वाऽवधाय- सशुक्राणा मेव गृह्णाति, यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्याना.ङ्गृह्णीया-थ्स हि गृहीतवसतीवरीको, वसतीवरी र्गृह्णाति - पशवो वै वसतीवरीः - पशू नेवाऽऽरभ्य गृहीत्वोप वसति, यदन्वीप न्तिष्ठ.न्गृह्णीया- न्निर्मार्गुका अस्मा त्पशव स्स्युः, प्रतीप न्तिष्ठ न्गृह्णाति - प्रतिरुध्यैवास्मै पशू न्गृह्णा,तीन्द्रः।। 7।। वृत्र.मह'2'-न्थ्सो1(ओ)ऽपो1(ओ) ऽभ्यम्रियत, तासाँ यन्मेध्यँ यज्ञियꣳ सदेव मासी- त्तदत्यमुच्यत, ता वहन्ती रभवन्,वहन्तीना ङ्गृह्णाति, या एव मेध्या यज्ञिया.स्सदेवा आप - स्तासा मेव गृह्णाति, नान्तमा वहन्ती रतीया,द्यदन्तमा वहन्ती रतीया- द्यज्ञ मति मन्येत, न स्थावराणा.ङ्गृह्णीया,द्वरुणगृहीता वै स्थावरा - यथ्स्थावराणा.ङ्गृह्णीयात्-।। 8।। वरुणेनास्य यज्ञ.ङ्ग्राहये, द्यद्वै दिवा भव- त्यपो रात्रिः प्र विशति - तस्मा त्ताम्रा आपो दिवा ददृश्रे, यन्नक्तं भव- त्यपोऽहः प्र विशति - तस्मा च्चन्द्रा आपो नक्त न्ददृश्रे, छायायै चाऽऽतपतश्च सन्धौ गृह्णा-त्यहोरात्रयो रेवास्मै वर्ण ङ्गृह्णाति, हविष्मती.रिमा आप इत्याह - हविष्कृताना मेव गृह्णाति, हविष्माꣳ अस्तु।। 9।। सूर्य इत्याह- सशुक्राणा मेव गृह्णा,त्यनुष्टुभा गृह्णाति – वाग्वा अनुष्टु-ग्वाचैवैना स्सर्वया गृह्णाति, चतुष्पदयर्चा गृह्णाति - त्रिस्सादयति - सप्त संपद्यन्ते - सप्तपदा शक्वरी - पशव श्शक्वरी - पशू.नेवाव रुन्धे,ऽस्मै वै लोकाय गार्हपत्य आ धीयते-ऽमुष्मा आहवनीयो, यद्गार्हपत्य उपसादये- दस्मि न्लोके पशुमान्थ्स्या, द्यदाहवनीये-ऽमुष्मिन्न्।। 10।। लोके पशुमा.न्थ्स्या,दुभयो रुप सादय- त्युभयो रेवैनँ लोकयोः पशुमन्त ङ्करोति, सर्वतः परि हरति - रक्षसा मपहत्या, इन्द्राग्नियो र्भागधेयी स्स्थेत्याह - यथायजुरेवैत,दाग्नीध्र उप वासय- त्येतद्वै यज्ञस्यापराजितँ- यदाग्नीध्रँ, यदेव यज्ञस्यापराजित- न्तदेवैना उप वासयति, यतः खलु वै यज्ञस्य विततस्य न क्रियते - तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति, यद्वहन्तीना.ङ्गृह्णाति - क्रियमाण मेव तद्यज्ञस्य शये - रक्षसा मनन्ववचाराय, न ह्येता ईलय-न्त्या तृतीयसवना त्परि शेरे- यज्ञस्य सन्तत्यै।। 11।। (स्यादिन्द्रो गृह्णीया दस्त्वमुष्मि न्क्रियते षड्विꣳशतिश्च। 2।)

सर्वस्यावरुद्ध्यै, गायत्रं पूर्वेऽह‘2’न्थ्साम भवति - तेजो वै गायत्री- गायत्री ब्रह्मवर्चस- न्तेज एव ब्रह्मवर्चस मात्म न्धत्ते, त्रैष्टुभ मुत्तरे- ओजो वै वीर्य.त्रिष्टु-गोज एव वीर्य मात्म न्धत्ते, रथन्तरं पूर्वे।। 12।। ❀ अह‘2’न्थ्साम भव-तीयँ वै रथन्तर- मस्यामेव प्रति तिष्ठति, बृह.दुत्तरे-ऽसौ वै बृह-दमुष्यामेव प्रति तिष्ठति, तदाहुः- क्व जगती चानुष्टुप्चेति, वैखानसं पूर्वेऽह‘2’न्थ्साम भवति - तेन जगत्यै नैति- षोडश्युत्तरे- तेनानुष्टुभो,ऽथाऽऽहु र्यथ्समानेऽर्धमासे स्याता- मन्यतरस्याह्वो वीर्य मनु पद्येते,त्यमावास्यायां पूर्वमह र्भव-त्युत्तरस्मि न्नुत्तर,न्नानैवार्धमासयो र्भवतो - नानावीर्ये भवतो,हविष्मन्निधनं पूर्व मह र्भवति - हविष्कृन्निधन मुत्तरं प्रतिष्ठित्यै।। 13।। (उत्तरेण रथन्तरं पूर्वेऽन्वेकवि॰शतिश्च। 4।)

❀ आपो वा इदमग्रे सलिल मासी,त्तस्मिन्प्रजापति र्वायु र्भूत्वाऽचर-थ्से इमा मपश्य-त्ताँ वराहो भूत्वाऽऽहर-त्ताँ विश्वकर्मा भूत्वा व्यमार्ट्.थ्साऽप्रथत- सा पृथिव्यभव-त्तत्पृथिव्यै पृथिवित्व,न्तस्या मश्राम्य त्प्रजापति,स्से देवा नसृजत - वसू न्रुद्रा नादित्या,न्ते देवाः प्रजापति मब्रुव- न्प्र जायामहा इति, सोऽब्रवीत्-।। 14।। ❀ यथाऽहँ युष्मा॰ स्तपसाऽसृ-क्ष्येव न्तपसि प्रजनन मिच्छध्वमिति, तेभ्योऽग्निमायतनं प्रायच्छ- देतेनाऽऽयतनेन श्राम्यतेति, तेऽग्निना ऽऽयतनेनाश्राम्य- न्ते सँवथ्सर एका.ङ्गा.मसृजन्त- ताँ वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्रायच्छ-न्नेता॰ रक्षध्वमिति, ताँ वसवो रुद्रा आदित्या अरक्षन्त, सा वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्राजायत- त्रीणि च।। 15।। ❀ शतानि त्रयस्त्रि॰शतञ्चा,ऽथ सैव सहस्रतम्यभव,त्ते देवाः प्रजापति मब्रुव‘2’-न्थ्सहस्रेण नो याजयेति, सोऽग्निष्टोमेन वसू नयाजय-त्त इमँ लोक मजय-न्तच्चाददु,स्से उक्थ्येन रुद्रा नयाजय- त्तेऽन्तरिक्ष मजय- न्तच्चाददु,स्सोऽतिरात्रेणाऽऽदित्या नयाजय- त्तेऽमुँ लोक मजय- न्तच्चाददु,स्तदन्तरिक्षम्।। 16।। ❀ व्यवैर्यत - तस्मा.द्रुद्रो घातुको अनायतनो हि, तस्मा.दाहु- श्शिथिलँ वै मध्यम मह स्त्रिरात्रस्य- वि हि तदवैर्यतेति, त्रैष्टुभं मध्यमस्याह्न आज्यं भवति- सँयानानि सूक्तानि श॰सति- षोडशिन॰ श॰स- त्यह्नो धृत्या अशिथिलम्भावाय, तस्मा.त्त्रिरात्रस्याग्निष्टोम एव प्रथम मह स्स्या- दथोक्थ्यो-ऽथातिरात्र- एषाँ लोकानाँ विधृत्यै, त्रीणित्रीणि शतान्यनूचीनाह मव्यवच्छिन्नानि ददाति-।। 17।। ❀ एषाँ लोकाना मनु सन्तत्यै, दशत न्न वि च्छिन्द्या- द्विराज न्नेद्विच्छिनदानी,त्यथ या सहस्रत.म्यासी- त्तस्या मिन्द्रश्च विष्णुश्च व्यायच्छेता॰, स इन्द्रोऽमन्यता-ऽनया वा इदँ विष्णु स्सहस्रँ वक्ष्यत इति, तस्या मकल्पेता- न्द्विभाग इन्द्र- स्तृतीये विष्णु,स्तद्वा एषाऽभ्यनूच्यत- उभा जिग्यथुरिति,

ताँ वा एता मच्छावाकः।। 18।।❀ एव श२ँस,त्यथ या सहस्रतमी सा होत्रे देयेति, होतारँ वा अभ्यतिरिच्यते- यदतिरिच्यते, होताऽनाप्तस्याऽऽपयिता,ऽथाऽऽहु रुन्नेत्रे देये,त्यतिरिक्ता वा एषा सहस्रस्या-ऽतिरिक्त उन्नेतर्त्विजा,मथाऽऽहु- स्सर्वेभ्य स्सदस्येभ्यो देये,-त्यथाऽऽहु रुदाकृत्या- सा वश.ञ्चरे.दि,त्यथाऽऽहु र्ब्रह्मणे चाग्नीधे च देयेति,।। 19।।❀ द्विभागं ब्रह्मणे- तृतीय मग्नीध, ऐन्द्रो वै ब्रह्मा- वैष्णवोऽग्नी- द्यथैव तावकल्पेता मि,त्यथाऽऽहु र्या कल्याणी बहुरूपा सा देये,त्यथाऽऽहु र्या द्विरूपोभयतएनी सा देयेति, सहस्रस्य परिगृहीत्यै, तद्वा एतथ्सहस्रस्यायन२ँ- सहस्रꣳ स्तोत्रीया- स्सहस्र न्दक्षिणा- स्सहस्रसम्मित स्सुवर्गो लोक- स्सुवर्गस्य लोकस्याभिजित्यै।। 20।। (अब्रवीच्च तदन्तरिक्ष न्ददात्यच्छावाकश्च देयेति सप्तचत्वारि२ँशच्च। 5।)

❀ सोमो वै सहस्र मविन्द- त्तमिन्द्रोऽन्वविन्द- त्तौ यमो न्यागच्छ- त्तावब्रवी-दस्तु मेऽत्रापीत्यस्तु ही '3' इत्यब्रूता२ँ, स यम एकस्याँ वीर्यं पर्यपश्य- दियँ वा अस्य सहस्रस्य वीर्यं बिभर्तीति, तावब्रवी- दियं ममाऽस्त्वेत.द्युवयोरिति, तावब्रूता२ँ- सर्वे वा एत-देतस्याँ वीर्यम्।। 21।।❀ परि पश्यामो-२ँऽश मा हरामहा इति, तस्या म२ँश माऽहरन्त, तामप्सु प्रावेशय'2'-न्थ्सोमायोदेहीति, सा रोहिणी पिङ्गलैकहायनी रूप.ङ्कृत्वा, त्रयस्त्रि२ँशता च त्रिभिश्च शतै स्सहोदै- त्तस्माद्रोहिण्या पिङ्गलयैकहायन्या सोम.ङ्क्रीणीया,द्य एवँ विद्वा न्रोहिण्या पिङ्गलयैकहायन्या सोम.ङ्क्रीणाति- त्रयस्त्रि२ँशता चैवास्य त्रिभिश्च।। 22।।❀ शतै स्सोमः क्रीतो भवति - सुक्रीतेन यजते, तामप्सु प्रावेशय- न्निन्द्रायोदेहीति, सा रोहिणी लक्ष्मणा पष्ठौही वार्त्रघ्नी रूप.ङ्कृत्वा- त्रयस्त्रि२ँशता च त्रिभिश्च शतै स्सहोदै- त्तस्माद्रोहिणीँ लक्ष्मणां पष्ठौहीँ वार्त्रघ्नी न्दद्या,द्य एवँ विद्वान्रोहिणीँ लक्ष्मणां पष्ठौहीँ वार्त्रघ्नीं ददाति- त्रयस्त्रि२ँशच्चैवास्य त्रीणि च शतानि- सा दत्ता।। 23।।❀ भवति, तामप्सु प्रावेशयन् यमायोदेहीति- सा जरती मूर्खा तज्जघन्या रूप.ङ्कृत्वा- त्रयस्त्रि२ँशता च त्रिभिश्च शतै स्सहोदै, त्तस्मा.ज्जरतीं मूर्खा न्तज्जघन्या मनुस्तरणी.ङ्कुर्वीत,य एवँ विद्वान्जरतीं मूर्खा न्तज्जघन्या मनुस्तरणी.ङ्कुरुते- त्रयस्त्रि२ँशच्चैवास्य त्रीणि च शतानि साऽमुष्मि न्लोके भवति, वागेव सहस्रतमी, तस्मात्।। 24।।❀ वरो देय- स्सा हि वर- स्सहस्रमस्य सा दत्ता भवति, तस्मा.द्वरो न प्रतिगृह्य- स्सा हि वर,स्सहस्रमस्य प्रतिगृहीतं भव,तीयँ वरे इति ब्रूया- दथान्यां ब्रूया-दियं ममेति, तथाऽस्य तथ्सहस्र मप्रतिगृहीतं भव,त्युभयतएनी स्या-त्तदाहु रन्यतएनी स्या-थ्सहस्रं परस्ता देत मिति, यैव वरः।। 25।।❀ कल्याणी रूपसमृद्धा- सा स्या-थ्सा हि वर स्समृध्यै, तामुत्तरेणाऽऽग्नीध्रं पर्याणीया ऽऽहवनीयस्यान्ते द्रोणकलश मव घ्रापये,-द्दाजिघ्र

कलशं मह्युरुधारा पयस्व-त्या त्वा विशन्त्विन्दव स्समुद्रमिव सिन्धव- स्सा मा सहस्र आ भज- प्रजया पशुभि स्सह पुन र्माऽऽविशता द्रयि- रिति प्रजयैवैनं पशुभी रय्या सम्।। 26।।❀ अर्धयति प्रजावा न्पशुमान्त्रयिमा न्भवति- य एवँ वेद, तया सहाऽऽग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्या ज्जुहुया,-卐उभा जिग्यथु र्न परा जयेथे - न परा जिग्ये कतरश्चनैनोः। इन्द्रश्च विष्णो~ यदपस्पृधेथा- न्त्रेधा सहस्रँ वि तदैरयेथा- मिति त्रेधाविभक्तँ वै त्रिरात्रे सहस्र॰, साहस्री.मेवैना.ङ्करोति - सहस्रस्यैवैनां मात्राम्।। 27।।❀ करोति, रूपाणि जुहोति - रूपै रेवैना॰ समर्धयति, तस्या उपोत्थाय कर्णमा जपे,- 卐 इडे रन्तेऽदिते सरस्वति- प्रिये प्रेयसि महि विश्रु-त्येतानि ते अघ्निये नामानि- सुकृतं मा देवेषु ब्रूता- दिति, देवेभ्य एवैन मावेदय- त्यन्वेन न्देवा बुध्यन्ते।। 28।। (एतदेतस्याँ वीर्यमस्य त्रिभिश्च दत्ता सहस्रतमी तस्मादेव वर स्सं मात्रा मेकान्न चत्वारि॰शच्च। 6।)

❀ सहस्रतम्या वै यजमान स्सुवर्गँ लोकमेति- सैन॰ सुवर्गँ लोक ङ्गमयति,-卐 सा मा सुवर्गँ लोक ङ्गमये- त्याह सुवर्गमेवैनँ लोक ङ्गमयति, 卐 सा मा ज्योतिष्मन्तँ लोकँ गमये-त्याह ज्योतिष्मन्त मेवैनँ लोक ङ्गमयति, 卐 सा मा सर्वान्पुण्यान्लोक न्गमये-त्याह सर्वानेवैनँ पुण्या न्लोका न्गमयति, 卐 सा।। 29।।❀ मा प्रतिष्ठा.ङ्गमय प्रजया पशुभि स्सह पुन र्माऽऽविशता द्रयि-रिति प्रजयैवैनं पशुभी रय्यां प्रतिष्ठापयति - प्रजावा न्पशुमा न्त्रयिमान्भवति- य एवँ वेद, तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाऽध्वर्यवे वा दद्या,थ्सहस्र.मस्य सा दत्ता भवति- सहस्र मस्य प्रतिगृहीतं भवति - य.स्ता मविद्वान्।। 30।।❀ प्रतिगृह्णाति, तां प्रति गृह्णीया- 卐 देकाऽसि न सहस्र,मेकान्त्वा भूतां प्रति गृह्णामि- न सहस्र,मेका मा भूताऽऽविश- मा सहस्र- मि,त्येकामेवैनां भूतां प्रति गृह्णाति- न सहस्रँ- य एवँ वेद, 卐 स्योनाऽसि सुषदा सुशेवा- स्योना माऽऽविश- सुषदा माऽऽविश- सुशेवा माऽऽविश-।। 31।।❀ इत्याह, स्योनैवैन॰ सुषदा सुशेवा भूताऽऽविशति- नैन॰ हिनस्ति, ब्रह्मवादिनो वदन्ति - सहस्र॰ सहस्रतम्यन्वेती '3'- सहस्रतमी॰ सहस्रा '3' मिति, यत्प्राची मुथ्सृजे- थ्सहस्र॰ सहस्रतम्यन्विया- त्तथ्सहस्र मप्रज्ञात्र॰ सुवर्गँ लोक.न्न प्र जानीया,त्प्रतीची मुथ्सृजति - ता॰ सहस्र मनु पर्यावर्तते, सा प्रजानती सुवर्गँ लोकमेति - यजमान मभ्युथ्सृजति, क्षिप्रे सहस्रं प्र जायते- उत्तमा नीयते प्रथमा देवा.न्गच्छति।। 32।। (लोका न्गमयति सा विद्वान्थ्सुशेवा मा विश यजमान न्द्वादश च। 7।)

❀ अत्रि रददा.दौर्वाय प्रजां पुत्रकामाय, स रिरिचानोऽमन्यत - निर्वीर्य श्शिथिलो यातयामा, स एत.ञ्चतूरात्र मपश्य- त्तमाऽहर- त्तेनायजत, ततो वै तस्य चत्वारो वीरा आऽजायन्त- सुहोता सूद्गाता

स्वध्वर्यु स्सुसभेयो, ये एवँ विद्वा॰श्चतूरात्रेण यजते- आऽस्य चत्वारो वीरा जायन्ते सुहोता सूद्गाता स्वध्वर्यु स्सुसभेयो, ये चतुर्वि॰शाः पवमानो- ब्रह्मवर्चस न्तत,।। 33।। ❀ यँ उद्यन्त स्स्तोमा- श्श्री स्सा,ऽत्रिँ श्रद्धादेवँ यजमान श्चत्वारि वीर्याणि नोपानम- न्तेज इन्द्रियं ब्रह्मवर्चस मन्याद्य॰, स एता॰श्चतुर श्चतुष्टोमा न्त्सोमा नपश्य- त्ताना ऽहर- त्तैरयजत, तेज एव प्रथमेनावारुन्धेन्द्रिय न्द्वितीयेन- ब्रह्मवर्चस न्तृतीयेना-ऽन्नाद्य श्चतुर्थेन, य एवँ विद्वा॰ श्चतुर श्चतुष्टोमा न्त्सोमा नाहरति- तैर्यजते, तेज एव प्रथमेनाव रुन्धे- इन्द्रिय न्द्वितीयेन- ब्रह्मवर्चस न्तृतीयेना-ऽन्नाद्य.श्चतुर्थेन, यामेवात्रिर् ऋद्धि मार्ध्नो- त्तामेव यजमान ऋध्नोति।। 34।। (तत्तेज एवाष्टादश च। 8।)

❀ जमदग्निः पुष्टिकाम श्चतूरात्रेणायजत, स एतान्पोषा॰ अपुष्य, त्तस्मात्पलितौ जामदग्नियौ न सञ्जानाते~, एतानेव पोषान्पुष्यति- ये एवँ विद्वा॰श्चतूरात्रेण यजते, पुरोडाशिन्य उपसदो भवन्ति - पशवो वै पुरोडाशः - पशूनेवाव रुन्धे,ऽन्नँ वै पुरोडाशो-ऽन्न मेवाव रुन्धे,ऽन्नादः पशुमा न्भवति - ये एवँ विद्वा॰श्चतूरात्रेण यजते।। 35।। (जमदग्नि रष्टाचत्वारि॰शत्। 9।)

❀ सँवथ्सरो वा इदमेक आसी-थ्सोऽकामय.तर्तून्थ्सृजेयेति, से एतं पञ्चरात्र मपश्य- त्तमाऽहर- त्तेनायजत- ततो वै से ऋतू नसृजत, ये एवँ विद्वा.न्पञ्चरात्रेण यजते - प्रैव जायते, ते ऋतव स्सृष्टा न व्यावर्तन्त, ते एतं पञ्चरात्र मपश्य- न्तमाऽहर- न्तेनायजन्त- ततो वै ते व्यावर्तन्त,।। 36।। ❀ ये एवँ विद्वा न्पञ्चरात्रेण यजते - वि पाप्मना भ्रातृव्येणाऽऽवर्तते, सार्वसेनि श्शौचेयोऽकामयत- पशुमान्थ्स्यामिति, से एतं पञ्चरात्र माऽहर- त्तेनायजत- ततो वै से सहस्रं पशू न्प्राऽऽप्नो,द्ये एवँ विद्वान्पञ्चरात्रेण यजते- प्र सहस्रं पशू नाप्नोति, बबरः प्रावाहणि रकामयत - वाचः प्रवदिता स्यामिति, से एतं पञ्चरात्र मा।।37।। ❀ अहर- त्तेनायजत, ततो वै से वाचः प्रवदिताऽभव,द्ये एवँ विद्वा न्पञ्चरात्रेण यजते - प्रवदितैव वाचो भव,त्यथो~ एनँ वाचस्पति रित्याहु,रनाप्त श्चतूरात्रो-ऽतिरिक्त ष्षड्रात्रो-ऽथ वा एषे सम्प्रति यज्ञो- यत्पञ्चरात्रो, ये एवँ विद्वा न्पञ्चरात्रेण यजते - सम्प्रत्येव यज्ञेन यजते, पञ्चरात्रो भवति - पञ्च वा ऋतव स्सँवथ्सरः-।। 38।। ❀ ऋतुष्वेव सँवथ्सरे प्रति तिष्ठ,त्यथो~ पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञ मेवाव रुन्धे, त्रिवृ.दग्निष्टोमो भवति- तेज एवाव रुन्धे, पञ्चदशो भवतीन्द्रिय मेवाव रुन्धे, सप्तदशो भव-त्यन्नाद्यस्यावरुद्ध्यो- अथो~ प्रैव तेन जायते, पञ्चवि॰शोऽग्निष्टोमो भवति- प्रजापते राप्त्यै, महाव्रतवा नन्नाद्यस्यावरुद्ध्यै, विश्वजिथ्सर्वपृष्ठो ऽतिरात्रो भवति- सर्वस्याभिजित्यै।। 39।। (ते व्यावर्तन्त प्रवदिता स्यामिति स एतं पञ्चरात्रमा सँवथ्सरोऽभिजित्यै। 10।)

卐देवस्य त्वा सवितुः प्रसवे-ऽश्विनो र्बाहुभ्यां- पूष्णो हस्ताभ्यामा ददे- 卐 इमा मगृभ्णन्त्रशना मृतस्य पूर्व आयुषि विदथेषु कव्या। तया देवा स्सुतमा बभूवुर् ऋतस्य सामन्थ्सर मारपन्ती।। 卐 अभिधा असि - भुवनमसि- यन्ताऽसि- धर्ताऽसि- सोऽग्निं वैश्वानरं सप्रथस.ङ्गच्छ स्वाहाकृतः पृथिव्याँ - यन्ता राड्यन्ताऽसि - यमनो धर्ताऽसि धरुणः- कृष्यै त्वा- क्षेमाय त्वा- रय्यै त्वा- पोषाय त्वा, 卐 पृथिव्यै त्वा-ऽन्तरिक्षाय त्वा- दिवे त्वा- सते त्वा-ऽसते त्वा-ऽद्ध्य स्त्वौषधीभ्य स्त्वा- विश्वेभ्य स्त्वा भूतेभ्यः।। 40।। (धरुणः पञ्चविंशतिश्च। 11।)

卐विभू र्मात्रा 卐 प्रभूः पित्रा 卐ऽश्वोऽसि 卐 हयोऽ卐स्यत्योऽसि 卐 नरोऽ 卐स्यर्वाऽसि 卐 सप्तिरसि 卐 वाज्यसि 卐 वृषाऽसि 卐 नृमणा असि 卐 ययु र्नामा 卐स्यादित्यानां पत्वान्वि卐ह्यग्नये स्वाहा 卐 स्वाहेन्द्राग्निभ्यां 卐 स्वाहा प्रजापतये 卐 स्वाहा विश्वेभ्यो देवेभ्य 卐 स्स्वाहा सर्वाभ्यो देवताभ्यै 卐 इह धृति स्स्वा 卐हेह विधृति स्स्वा卐हेह रन्ति स्स्वा卐हेह रमति स्स्वाहा 卐 भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्य.स्त्वा भूतेभ्यो 卐 देवा आशापाला एत न्देवेभ्योऽश्वं मेधाय प्रोक्षित.ङ्गोपायत।। 41।। (रन्तिस्स्वाहा द्वाविंशतिश्च। 12।)

卐आऽयनाय स्वाहा 卐 प्रायणाय स्वा 卐होद्द्रावाय स्वा 卐होद्द्रुताय स्वाहा 卐 शूकाराय स्वाहा 卐 शूकृताय स्वाहा 卐 पलायिताय स्वाहा 卐ऽऽपलायिताय स्वा卐हाऽऽवल्गते स्वाहा 卐 परावल्गते स्वाहा 卐ऽऽयते स्वाहा 卐 प्रयते स्वाहा 卐 सर्वस्मै स्वाहा।। 42।। (आऽयनायोत्तर मापलायिताय षड्विंशतिः। 13।)

卐अग्नये स्वाहा 卐 सोमाय स्वाहा 卐 वायवे स्वाहा 卐ऽपां मोदाय स्वाहा 卐 सवित्रे स्वाहा 卐 सरस्वत्यै स्वा卐हेन्द्राय स्वाहा 卐 बृहस्पतये स्वाहा 卐 मित्राय स्वाहा 卐 वरुणाय स्वाहा 卐 सर्वस्मै स्वाहा।। 43।। (अग्नये वायवेऽपां मोदायेन्द्राय त्रयोविंशतिः। 14।)

卐पृथिव्यै स्वा卐हाऽन्तरिक्षाय स्वाहा 卐 दिवे स्वाहा 卐 सूर्याय स्वाहा 卐 चन्द्रमसे स्वाहा 卐 नक्षत्रेभ्य स्स्वाहा 卐 प्राच्यै दिशे स्वाहा 卐 दक्षिणायै दिशे स्वाहा 卐 प्रतीच्यै दिशे स्वाहो 卐दीच्यै दिशे स्वाहो卐र्ध्वायै दिशे स्वाहा 卐 दिग्भ्य स्स्वाहा 卐ऽवान्तरदिशाभ्य स्स्वाहा 卐 समाभ्य स्स्वाहा 卐 शरद्भ्य स्स्वाहा 卐ऽहोरात्रेभ्य स्स्वाहा 卐ऽर्धमासेभ्य स्स्वाहा 卐 मासेभ्य स्स्वा卐हर्तुभ्य स्स्वाहा卐

सँवथ्सराय स्वाहा ऱ्ह सर्वस्मै स्वाहा।। 44।। (पृथिव्यै दिवे सूर्याय नक्षत्रेभ्यः प्राच्यै सप्तचत्वारिंशत्। 15।)

ऱ्ह अग्नये स्वाहा ऱ्ह सोमाय स्वाहा ऱ्ह सवित्रे स्वाहा ऱ्ह सरस्वत्यै स्वाहा ऱ्ह पूष्णे स्वाहा ऱ्ह बृहस्पतये स्वाहा ऱ्हऽपां मोदाय स्वाहा ऱ्ह वायवे स्वाहा ऱ्ह मित्राय स्वाहा ऱ्ह वरुणाय स्वाहा ऱ्ह सर्वस्मै स्वाहा।। 45।। (अग्नये सवित्रे पूष्णेऽपां मोदाय वायवे त्रयोविंशतिः। 16।)

ऱ्ह पृथिव्यै स्वाहा ऱ्हऽन्तरिक्षाय स्वाहा ऱ्ह दिवे स्वाहा ऱ्हऽग्नये स्वाहा ऱ्ह सोमाय स्वाहा ऱ्ह सूर्याय स्वाहा ऱ्ह चन्द्रमसे स्वाहाऱ्हऽह्ने स्वाहा ऱ्ह रात्रियै स्वाऱ्हहर्जवे स्वाहा ऱ्ह साधवे स्वाहा ऱ्ह सुक्षित्यै स्वाहा ऱ्ह क्षुधे स्वाहा ऱ्हऽशितिम्ने स्वाहा ऱ्ह रोगाय स्वाहा ऱ्ह हिमाय स्वाहा ऱ्ह शीताय स्वाहा ऱ्हऽतपाय स्वाहा ऱ्हऽरण्याय स्वाहा ऱ्ह सुवर्गाय स्वाहा ऱ्ह लोकाय स्वाहा ऱ्ह सर्वस्मै स्वाहा।। 46।। (पृथिव्या अग्नयेऽह्ने रात्रियै चतुश्चत्वारिंशत्। 17।)

ऱ्ह भुवो देवानां कर्मणाऽपसर्तस्य पथ्याऽसि- वसुभि र्देवेभि र्देवतया गायत्रेण त्वा छन्दसा युनज्मि - वसन्तेन त्वर्तुना हविषा दीक्षयामि ऱ्ह -- रुद्रेभि र्देवेभि र्देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि - ग्रीष्मेण त्वर्तुना हविषा दीक्षयाऱ्ह --म्यादित्येभि र्देवेभि र्देवतया जागतेन त्वा छन्दसा युनज्मि - वर्षाभिस्त्वर्तुना हविषा दीक्षयामि- ऱ्ह -- विश्वेभि र्देवेभि र्देवतयाऽनुष्टुभेन त्वा छन्दसा युनज्मि-।। 47।। शरदा त्वर्तुना हविषा दीक्षया-ऱ्ह--म्यङ्गिरोभि र्देवेभि र्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि- हेमन्तशिशिराभ्यान्त्वर्तुना हविषा दीक्षया-ऱ्हम्याऽहं न्दीक्षा मरुह.मृतस्य पत्नी-ङ्गायत्रेण छन्दसा ब्रह्मणा-चर्तं सत्येऽधां सत्यमृतेऽधाम्।।

ऱ्ह महीमूषु[140] ऱ्ह सुत्रामाण[141] ऱ्ह मिह धृति स्स्वाऱ्हहेह विधृति स्स्वाऱ्हहेह रन्ति स्स्वाऱ्हहेह रमति स्स्वाहा।। 48।। (आनुष्टुभेन त्वा छन्दसा युनज्म्येकान्न पञ्चाशच्च। 18।)

ऱ्ह ईङ्काराय स्वाऱ्हहेङ्कृताय स्वाहा ऱ्ह क्रन्दते स्वाहा ऱ्हऽवक्रन्दते स्वाहा ऱ्ह प्रोथते स्वाहा ऱ्ह प्रप्रोथते स्वाहा ऱ्ह गन्धाय स्वाहा ऱ्ह घ्राताय स्वाहा ऱ्ह प्राणाय स्वाहा ऱ्ह व्यानाय स्वाहा ऱ्हऽपानाय स्वाहा ऱ्ह सन्दीयमानाय स्वाहा ऱ्ह सन्दिताय स्वाहा ऱ्ह विचृत्यमानाय स्वाहा ऱ्ह विचृत्ताय स्वाहा ऱ्ह पलायिष्यमाणाय स्वाहा ऱ्ह पलायिताय स्वा ऱ्हहोपरंस्यते स्वाऱ्हहोपरताय स्वाहा ऱ्ह निवेक्ष्यते स्वाहा ऱ्ह निविशमानाय स्वाहा ऱ्ह निविष्टाय स्वाहा ऱ्ह निषथ्स्यते स्वाहा ऱ्ह निषीदते स्वाहा ऱ्ह निषण्णाय

140

141

स्वाहा।। 49।। ❀卐आसिष्यते स्वाहा 卐ऽऽसीनाय स्वाहा 卐ऽऽसिताय स्वाहा 卐 निपथ्स्यते स्वाहा 卐 निपद्यमानाय स्वाहा 卐 निपन्नाय स्वाहा 卐 शयिष्यते स्वाहा 卐 शयानाय स्वाहा 卐 शयिताय स्वाहा 卐 संमीलिष्यते स्वाहा 卐 संमीलते स्वाहा 卐 संमीलिताय स्वाहा 卐 स्वप्स्यते स्वाहा 卐 स्वपते स्वाहा 卐 सुप्ताय स्वाहा 卐 प्रभोथ्स्यते स्वाहा 卐 प्रबुध्यमानाय स्वाहा 卐 प्रबुद्धाय स्वाहा 卐 जागरिष्यते स्वाहा 卐 जाग्रते स्वाहा 卐 जागरिताय स्वाहा 卐 शुश्रूषमाणाय स्वाहा 卐 शृण्वते स्वाहा 卐 श्रुताय स्वाहा 卐 वीक्षिष्यते स्वाहा।। 50।। ❀卐वीक्षमाणाय स्वाहा 卐 वीक्षिताय स्वाहा 卐 सꣳहास्यते स्वाहा 卐 सञ्जिहानाय स्वा卐होज्जिहानाय स्वाहा 卐 विवर्थ्स्यते स्वाहा 卐 विवर्तमानाय स्वाहा 卐 विवृत्ताय स्वा卐होत्थास्यते स्वा卐होत्तिष्ठते स्वा卐होत्थिताय स्वाहा 卐 विधविष्यते स्वाहा 卐 विधून्वानाय स्वाहा 卐 विधूताय स्वा卐होत्क्रꣳस्यते स्वा卐होत्क्रामते स्वा卐होत्क्रान्ताय स्वाहा 卐 चङ्क्रमिष्यते स्वाहा 卐 चङ्क्रम्यमाणाय स्वाहा 卐 चङ्क्रमिताय स्वाहा 卐 कण्डूयिष्यते स्वाहा 卐 कण्डूयमानाय स्वाहा 卐 कण्डूयिताय स्वाहा 卐 निकषिष्यते स्वाहा 卐 निकषमाणाय स्वाहा 卐 निकषिताय स्वाहा 卐 यदत्ति तस्मै स्वाहा 卐 यत्पिबति तस्मै स्वाहा 卐 यन्मेहति तस्मै स्वाहा 卐 यच्छकृत्करोति तस्मै स्वाहा 卐 रेतसे स्वाहा 卐 प्रजाभ्य स्स्वाहा 卐 प्रजननाय स्वाहा 卐 सर्वस्मै स्वाहा।। 51।। (निषण्णाय स्वाहा वीक्षिष्यते स्वाहा निकषमाणाय स्वाहा सप्तविꣳशतिश्च। 19।)

❀卐अग्नये स्वाहा 卐 वायवे स्वाहा 卐 सूर्याय स्वा卐हर्तं मस्यृतस्यर्तमसि 卐 सत्यमसि सत्यस्य सत्यम卐स्यृतस्य पन्था ^असि- देवाना.ञ्छायाऽमृतस्य नाम- तथ्सत्यँ- यत्त्वं प्रजापति.र卐स्यधि यदस्मिन्वाजिनीव शुभ.स्स्पर्धन्ते- दिव स्सूर्येण विशोऽपो वृणानः पवते- कव्य.न्पशुन्न गोपा इर्यः परिज्मा।। 52।। (अग्नये वायवे सूर्यायाष्टाचत्वारिꣳशत्। 20।)

(प्रजननं प्रातस्सवने वै ब्रह्मवादिन स्स त्वा अङ्गिरस आपो वै सोमो वै सहस्रतम्याऽत्रि र्जमदग्नि स्सँवथ्सरो देवस्य विभू राऽयनायाग्नये पृथिव्या अग्नये पृथिव्यै भुव ईङ्काराायाग्नये वायवे सूर्याय विꣳशतिः। 20। प्रजनन मङ्गिरस स्सोमो वै प्रतिगृह्णाति विभू र्वीक्षमाणाय द्विपञ्चाशत्। 52। प्रजननं परिज्मा।)

**वै।का। 7 सात्रायण ब्राह्मणम् – 2 (दशानुवाकाः) 10।।**

साध्या वै देवा स्सुवर्गकामा- एत॰ षड्रात्र मपश्य,न्तमाऽहर- न्तेनायजन्त- ततो वै ते सुवर्गं लोकमायन्, य एवँ विद्वा॰स ष्षड्रात्रमासते - सुवर्गमेव लोकँ यन्ति, देवसत्रँ वै षड्रात्रः- प्रत्यक्षङ्ग् ह्येतानि पृष्ठानि, य एवँ विद्वा॰स ष्षड्रात्रमासते - साक्षादेव देवता अभ्यारोहन्ति, षड्रात्रो भवति- षड्वा ऋतव-ष्षद्पृष्ठानि-।। 1।। पृष्ठैरेवर्तू नन्वारोह-न्त्यृतुभि स्सँवथ्सर,न्ते सँवथ्सर एव प्रति तिष्ठन्ति, बृहद्रथन्तराभ्याँ य-न्तीयँ वाव रथन्तर-मसौ बृह-दाभ्यामेव य-न्त्यथो~ अनयो रेव प्रति तिष्ठ,न्त्येते~ वै यज्ञस्याञ्जसायनी~ स्रुती~ ताभ्यामेव सुवर्गं लोकँ यन्ति, त्रिवृदग्निष्टोमो भवति- तेज एवाव रुन्धते, पञ्चदशो भव-तीन्द्रिय मेवाव रुन्धते, सप्तदशः।। 2।। भव-त्यन्नाद्यस्यावरुद्ध्या, अथो~ प्रैव तेन जायन्ते, एकवि॰शो भवति- प्रतिष्ठित्या- अथो~ रुचमेवाऽऽत्म न्दधते, त्रिणवो भवति विजित्यै, त्रयस्त्रि॰शो भवति प्रतिष्ठित्यै, सदोहविर्धानिन एतेन षड्रात्रेण यजेर, न्नाश्वत्थी~ हविर्धान.ञ्चाऽऽग्नीध्रञ्च भवत,स्तद्धि सुवर्ग्य,ञ्चक्रीवती~ भवत- स्सुवर्गस्य लोकस्य समष्ट्या, उलूखलबुध्नो यूपो भवति प्रतिष्ठित्यै, प्राञ्चो यान्ति - प्राङिव हि सुवर्गः।। 3।। लोक, स्सरस्वत्या या-न्त्येष वै देवयानः पन्था- स्तमेवान्वारोह, न्त्याक्रोशन्तो या-न्त्यवर्ति मेवान्यस्मि न्प्रतिषज्य प्रतिष्ठां गच्छन्ति, यदा दश शत.ङ्कुर्व-न्त्यथैक मुत्थान॰- शताऽऽयुः पुरुष श्शतेन्द्रिय- आयुष्येवेन्द्रिये प्रति तिष्ठन्ति, यदा शत॰ सहस्र.ङ्कुर्व-न्त्यथैक मुत्थान॰- सहस्रसम्मितो वा असौ लोको-ऽमुमेव लोकमभि जयन्ति, यदैषां प्रमीयेत - यदा वा जीयेर- न्नथैक मुत्थान- न्तद्धि तीर्थम्।। 4।। (पृष्ठानि सप्तदश स्सुवर्गो जयन्ति यदैकादश च। 1।)

कुसुरुबिन्द औद्दालकि रकामयत- पशुमान्थ्स्यामिति, स एत॰ सप्तरात्र माऽहर- त्तेनायजत- तेन वै स यावन्तो ग्राम्याः पशव- स्तानवारुन्ध, य एवँ विद्वा.न्थ्सप्तरात्रेण यजते - यावन्त एव ग्राम्याः पशव- स्तानेवाव रुन्धे, सप्तरात्रो भवति - सप्त ग्राम्याः पशव- स्सप्ताऽऽरण्या- स्सप्त छन्दा॰- स्युभयस्यावरुद्ध्यै, त्रिवृदग्निष्टोमो भवति -तेजः।। 5।। एवाव रुन्धे, पञ्चदशो भव-तीन्द्रिय मेवाव रुन्धे, सप्तदशो भव-त्यन्नाद्यस्यावरुद्ध्या- अथो~ प्रैव तेन जायते, एकवि॰शो भवति प्रतिष्ठित्या- अथो रुचमेवाऽऽत्मन्धत्ते, त्रिणवो भवति विजित्यै, पञ्चवि॰शोऽग्निष्टोमो भवति- प्रजापतेराप्त्यै, महाव्रतवा.नन्नाद्यस्या. ऽवरुद्ध्यै, विश्वजि.थ्सर्वपृष्ठोऽतिरात्रो भवति- सर्वस्याभिजित्यै, यत्प्रत्यक्षं

पूर्वेष्वहस्सु पृष्ठान्युपेयुः- प्रत्यक्षम्।। 6।।❀ विश्वजिति- यथा दुग्धा मुपसीद-त्येव मुत्तम मह स्या-न्नैकरात्र श्चन स्या,द्बृहद्रथन्तरे~ पूर्वेष्वहस्सूप य,न्तीयँ वाव रथन्तर-मसौ बृह-दाभ्यामेव न य,न्त्यथो~ अनयो रेव प्रति तिष्ठन्ति, यत्प्रत्यक्षँ विश्वजिति पृष्ठा.न्युपयन्ति - यथा प्रत्ता न्दुहे- तादृगेव तत्।। 7।। (तेज उपेयुः प्रत्यक्ष न्द्विचत्वारिꣳशच्च। 2।)

❀ बृहस्पति रकामयत- ब्रह्मवर्चसी स्यामिति, स एतमष्टरात्र मपश्य- त्तमाऽहर- त्तेनायजत, ततो वै स ब्रह्मवर्चस्यभव,द्य एवँ विद्वा नष्टरात्रेण यजते - ब्रह्मवर्चस्येव भव,त्यष्टरात्रो भव-त्यष्टाऽक्षरा गायत्री- गायत्री ब्रह्मवर्चसं- गायत्रियैव ब्रह्मवर्चसमव रुन्धे,ऽष्टरात्रो भवति- चतस्रो वै दिश-श्चतस्रोऽवान्तरदिशा- दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे,।। 8।।❀ त्रिवृ.दग्निष्टोमो भवति- तेज एवाव रुन्धे, पञ्चदशो भव-तीन्द्रियमेवाव रुन्धे, सप्तदशो भव-त्यन्नाद्यस्यावरुद्ध्यै- अथो प्रैव तेन जायते, एकविꣳशो भवति प्रतिष्ठित्यै- अथो~ रुचमेवाऽऽत्मन्धत्ते, त्रिणवो भवति विजित्यै, त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै, पञ्चविꣳशोऽग्निष्टोमो भवति- प्रजापते राप्त्यै, महाव्रतवा नन्नाद्यस्यावरुद्ध्यै, विश्वजि थ्सर्वपृष्ठोऽतिरात्रो भवति- सर्वस्याभिजित्यै।। 9।। (दिग्भ्य एव ब्रह्मवर्चस मव रुन्धेऽभिजित्यै। 3।)

❀ प्रजापतिः प्रजा असृजत- ता स्सृष्टाः~ क्षुधन्न्याय'2',न्थ्स एत न्नवरात्र मपश्य- त्तमाऽहर- त्तेनायजत- ततो वै प्रजाभ्योऽकल्पत, यर्हि प्रजाः~ क्षुध न्निगच्छेयु- स्तर्हि नवरात्रेण यजे,तेमे हि वा एतासाँ लोका अक्लृप्ता- अथैताः~ क्षुध न्निगच्छ-न्तीमा.नेवाऽऽभ्यो लोका.न्कल्पयति- तान्कल्पमाना न्प्रजाभ्योऽनु कल्पते- कल्पन्ते।। 10।।❀ अस्मा इमे लोका- ऊर्जं प्रजासु दधाति, त्रिरात्रेणैवेमँ लोक ङ्कल्पयति- त्रिरात्रेणान्तरिक्ष- न्त्रिरात्रेणामुँ लोकँ, यथा गुणे गुण मन्वस्य-त्येवमेव तल्लोके लोकमन्वस्यति धृत्या अशिथिलम्भावाय, ज्योति गौ.रायुरिति ज्ञाता स्स्तोमा भव,न्तीयँ वाव ज्योति-रन्तरिक्ष.ङ्गौ-रसा.वायु- रेष्वेव लोकेषु प्रति तिष्ठन्ति, ज्ञात्रं प्रजानाम्।। 11।।❀ गच्छति, नवरात्रो भव-त्यभिपूर्वमेवास्मि न्तेजो दधाति, यो ज्योगामयावी स्या-थ्स नवरात्रेण यजेत, प्राणा हि वा एतस्याधृता- अथैतस्य ज्योगामयति- प्राणानेवास्मि न्दाधा,रोत यदीतासु भवति- जीवत्येव।। 12।। (कल्पन्ते प्रजाना न्त्रयस्त्रिꣳशच्च। 4।)

❀ प्रजापतिरकामयत प्रजायेयेति- स एत न्दशहोतार मपश्य- त्तमजुहो- त्तेन दशरात्र मसृजत- तेन दशरात्रेण प्राजायत, दशरात्राय दीक्षिष्यमाणो दशहोतार.ञ्जुहुया- द्दशहोत्रैव दशरात्रꣳ सृजते- तेन दशरात्रेण प्र जायते, वैराजो वा एष यज्ञो- यद्दशरात्रो, य एवँ विद्वा.न्दशरात्रेण यजते- विराजमेव

गच्छति, प्राजापत्यो वा एष यज्ञो- यद्दशरात्रः,।। 13।। ❀ य एवँ विद्वा न्दशरात्रेण यजते- प्रैव जायते, इन्द्रो वै सदृ.ङ्देवताभि रासी-थ्से न व्यावृत मगच्छ-थ्स प्रजापति मुपाधाव,त्तस्मा एत न्दशरात्रं प्रायच्छ- त्तमाऽहर- त्तेनायजत- ततो वै सोऽन्याभि र्देवताभि र्व्यावृत मगच्छ,द्य एवँ विद्वा न्दशरात्रेण यजते- व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति, त्रिककुद्वै।। 14।। ❀ एष यज्ञो- यद्दशरात्रः, ककुत्पञ्चदशः- ककुदेकविꣳशः- ककुत्त्रयस्त्रिꣳशो, य एवँ विद्वान्दशरात्रेण यजते- त्रिककुदेव समानानां भवति, यजमानः पञ्चदशो- यजमान एकविꣳशो- यजमान स्त्रयस्त्रिꣳशः, पुर इतरा अभिचर्यमाणो दशरात्रेण यजेत- देवपुरा एव पर्यूहते, तस्य न कुतश्चनोपाऽऽव्याधो भवति- नैनमभिचरन्थ्स्तृणुते, देवासुरा स्सँयत्ता आस-न्ते देवा एताः।। 15।। ❀ देवपुरा अपश्यन्- यद्दशरात्र,स्ताः पर्यौहन्त- तेषान्न कुतश्चनोपाऽऽव्याधोऽभव- त्ततो देवा अभव- न्पराऽसुरा, यो भ्रातृव्यवान्थ्स्या-थ्स दशरात्रेण यजेत, देवपुरा एव पर्यूहते, तस्य न कुतश्चनोपाऽऽव्याधो भवति, भवत्यात्मना- पराऽस्य भ्रातृव्यो भवति, स्तोम.स्स्तोमस्योपस्ति र्भवति- भ्रातृव्य मेवोपस्ति.ङ्कुरुते, जामि वै।। 16।। ❀ एतत्कुर्वन्ति- यज्ज्यायाꣳसꣳ स्तोम मुपेत्य- कनीयाꣳस मुपयन्ति, यदग्निष्टोमसामा.न्यवस्ताच्च परस्ताच्च भव-न्त्यजामित्वाय, त्रिवृदग्निष्टोमोऽग्निष्टु दाग्नेयीषु भवति- तेज एवाव रुन्धे, पञ्चदश उक्थ्य ऐन्द्री-ष्विन्द्रियमेवाव रुन्धे, त्रिवृदग्निष्टोमो वैश्वदेवीषु- पुष्टिमेवाव रुन्धे, सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोमो-ऽन्नाद्यस्यावरुद्ध्या- अथो~ प्रैव तेन जायते,।। 17।। ❀ एकविꣳश उक्थ्य स्सौरीषु प्रतिष्ठित्या- अथो~ रुचमेवाऽऽत्मन्धत्ते, सप्तदशोऽग्निष्टोमः प्राजापत्यासूपहव्य -उपहवमेव गच्छति, त्रिणवा.वग्निष्टोमा.वभित -ऐन्द्रीषु विजित्यै, त्रयस्त्रिꣳश उक्थ्यो वैश्वदेवीषु- प्रतिष्ठित्यै, विश्वजि.थ्सर्वपृष्ठोऽतिरात्रो भवति- सर्वस्याभिजित्यै।। 18।। (विराजमेव गच्छति प्राजापत्यो वा एष यज्ञो यद्दशरात्र स्त्रिककुद्वा एता वै जायत एकत्रिꣳशच्च। 5।)

❀ ऋतवो वै प्रजाकामाः प्रजा.न्नाविन्दन्त, तेऽकामयन्त- प्रजाꣳ सृजेमहि- प्रजामव रुन्धीमहि- प्रजाँ विन्देमहि- प्रजावन्त स्स्यामेति, त एत.मेकादशरात्र मपश्य- न्तमाऽहर- न्तेनायजन्त- ततो वै ते प्रजा मसृजन्त- प्रजा मवारुन्धत- प्रजा.मविन्दन्त- प्रजावन्तोऽभव- न्त ऋतवोऽभव,न्तदार्तवाना मार्तवत्व,मृतूनाँ वा एते पुत्रा- स्तस्मात्।। 19।। ❀ आर्तवा उच्यन्ते, य एवँ विद्वाꣳस एकादशरात्र मासते- प्रजामेव सृजन्ते- प्रजामव रुन्धते- प्रजाँ विन्दन्ते- प्रजावन्तो भवन्ति, ज्योति रतिरात्रो भवति- ज्योतिरेव पुरस्ता द्दधते- सुवर्गस्य लोकस्यानुख्यात्यै, पृष्ठ्य ष्षडहो भवति- षड्वा ऋतव- ष्षट्पृष्ठानि-

पृष्ठैरेवर्तू न्नवारोह- न्त्यृतुभि स्सँवथ्सर- न्ते सँवथ्सर एव प्रति तिष्ठन्ति, चतुर्विं॰शो भवति- चतुर्विं॰शत्यक्षरा गायत्री-।। 20।।❀ गायत्रं ब्रह्मवर्चस- ङ्गायत्रियामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति,चतुश्चत्वारिं॰शो भवति- चतुश्चत्वारिं॰श.दक्षरा त्रिष्टु-गिन्द्रिय न्त्रिष्टु-ग्रिष्टुभ्येवेन्द्रिये प्रति तिष्ठ,न्त्यष्टाचत्वारिं॰शो भव- त्यष्टाचत्वारिं॰श.दक्षरा जगती- जागता॰ पशवो- जगत्यामेव पशुषु प्रति तिष्ठ,न्त्येकादशरात्रो भवति- पञ्च वा ऋतव- आर्तवा॰ प.ञ्चर्तुष्वेवाऽऽर्तवेषु सँवथ्सरे प्रतिष्ठाय- प्रजामव रुन्धते,ऽतिरात्रा.वभितो भवत॰- प्रजायै परिगृहीत्यै।। 21।। (तस्माद्गायत्र्येकान्न पञ्चाशच्च। 6।)

❀ ऐन्द्रवायवाग्रा न्गृह्णीया-द्य॰ कामयेत यथापूर्वं प्रजा॰ कल्पेरन्निति, यज्ञस्य वै क्लृप्ति.मनु प्रजा॰ कल्पन्ते- यज्ञस्याक्लृप्ति मनु न कल्पन्ते, यथापूर्वमेव प्रजा॰ कल्पयति- न ज्याया॰स.ङ्कनीया नतिक्राम, त्यैन्द्रवायवाग्रा न्गृह्णीया दामयाविन॰, प्राणेन वा एषे व्यृध्यते- यस्याऽऽमयति, प्राणे ऐन्द्रवायव॰- प्राणेनैवैन॰ समर्धयति, मैत्रावरुणाग्रा न्गृह्णीरन्- येषा न्दीक्षितानां प्रमीयेत,।। 22।।❀ प्राणापानाभ्याँ वा एते व्यृध्यन्ते- येषा न्दीक्षितानां प्रमीयते, प्राणापानौ मित्रावरुणौ- प्राणापानावेव मुखत॰ परि हरन्ते, आश्विनाग्रा न्गृह्णीता-ऽऽनुजावरो,ऽश्विनौ वै देवाना मानुजावरौ- पश्चेवाग्रं पर्यैता- मश्विना.वेतस्य देवता-ये आनुजावर-स्तावेवैन मग्रं परिणयत, श्शुक्राग्रा न्गृह्णीत- गतश्री॰ प्रतिष्ठाकामो,ऽसौ वा आदित्य श्शुक्र- एषोऽन्तोऽन्तं मनुष्यः।। 23।।❀ श्रियै गत्वा निवर्तते-ऽन्ता देवान्त मारभते- न तत॰ पापीया न्भवति, मन्थ्यग्रा न्गृह्णीताभिचर- न्नार्तपात्रँ वा एत-द्यन्मन्थिपात्रं- मृत्युनैवैन.ङ्ग्राहयति- ताजगार्ति मार्च्छ,-त्याग्रयणाग्रा न्गृह्णीत - यस्य पिता पितामह॰ पुण्य स्स्या-दथ तन्न प्राऽऽप्नुया,द्वाचा वा एष इन्द्रियेण व्यृध्यते - यस्य पिता पितामह॰ पुण्यः।। 24।।❀ भव-त्यथ तन्न प्राऽऽप्नो,त्युर इवैत द्यज्ञस्य वागिव- यदाग्रयणो- वाचैवैन मिन्द्रियेण समर्धयति- न तत॰ पापीया न्भव,-त्युक्थ्याग्रा न्गृह्णीताभिचर्यमाण- स्सर्वेषाँ वा एतत्पात्राणा मिन्द्रियँ- यदुक्थ्यपात्र॰- सर्वेणैवैन मिन्द्रियेणाति प्र युङ्क्ते, 卐 सरस्वत्यभि नो नेषि वस्य[142]❀- इति पुरोरुच.ङ्कुर्या, द्वाग्वै।। 25।।❀ सरस्वती - वाचैवैनमति प्र युङ्क्ते, मा त्वत्क्षेत्रा.ण्यरणानि गन्मेत्याह- मृत्यो र्वै क्षेत्रा.ण्यरणानि- तेनैव मृत्योः~ क्षेत्राणि न गच्छति, पूर्णा न्ग्रहा न्गृह्णीया- दामयाविन॰, प्राणान् वा एतस्य शुगृच्छति- यस्याऽऽमयति, प्राणो ग्रहा॰- प्राणानेवास्य शुचो मुञ्च,त्युत यदीतासु र्भवति- जीवत्येव, पूर्णा न्ग्रहा न्गृह्णीया- द्यर्हि पर्जन्यो न वर्षे,त्प्राणान् वा एतर्हि प्रजाना॰ शुगृच्छति- यर्हि पर्जन्यो न वर्षति, प्राणो ग्रहा॰- प्राणानेव

142

प्रजाना॰ शुचो मुञ्चति, ताजक्प्र वर्षति।। 26।। (प्रमीयेत मनुष्य ऋध्यते यस्य पिता पितामहः पुण्यो वाग्वा एव पूर्णान्ग्रहा न्पञ्चवि॰शतिश्च। 7।)

❀ गायत्रो वा ऐन्द्रवायवो- गायत्रं प्रायणीय.मह- स्तस्मात्प्रायणीयेऽह न्नैन्द्रवायवो गृह्यते- स्व एवैन मायतने गृह्णाति, त्रैष्टुभो वै शुक्र- स्त्रैष्टुभ न्द्वितीय मह- स्तस्मा द्वितीयेऽहञ्छुक्रो गृह्यते- स्व एवैन मायतने गृह्णाति, जागतो वा आग्रयणो- जागत न्तृतीय मह- स्तस्मात्तृतीयेऽह न्नाग्रयणो गृह्यते- स्व एवैन मायतने गृह्णा,त्येतद्वै।। 27।। ❀ यज्ञ माप-द्यच्छन्दा॰स्याप्नोति- यदाग्रयण.श्श्वो गृह्यते, यत्रैव यज्ञ मदृश- न्तत एवैनं पुनः प्र युङ्क्ते, जगन्मुखो वै द्वितीय स्त्रिरात्रो- जागत आग्रयणो, यच्चतुर्थेऽह न्नाग्रयणो गृह्यते- स्व एवैन मायतने गृह्णा-त्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते, राथन्तरो वा ऐन्द्रवायवो- राथन्तरं पञ्चम मह- स्तस्मात्पञ्चमेऽहन्न्।। 28।। ❀ ऐन्द्रवायवो गृह्यते- स्व एवैन मायतने गृह्णाति, बार्हतो वै शुक्रो- बार्हत॰ षष्ठ मह- स्तस्मात्षष्ठेऽह न्छुक्रो गृह्यते- स्व एवैन मायतने गृह्णा,त्येतद्वै द्वितीयँ यज्ञमाप- द्यच्छन्दा॰स्याप्नोति- यच्छुक्र.श्श्वो गृह्यते, यत्रैव यज्ञ मदृश- न्तत एवैनं पुनः प्रयुङ्क्ते, त्रिष्टुब्मुखो वै तृतीय स्त्रिरात्र- स्त्रैष्टुभः।। 29।। ❀ शुक्रो, यथ्सप्तमेऽहन्छुक्रो गृह्यते- स्व एवैन मायतने गृह्णा-त्यथो~ स्वमेव छन्दोऽनु पर्यावर्तन्ते, वाग्वा आग्रयणो- वागष्टम मह- स्तस्मा दष्टमेऽह न्नाग्रयणो गृह्यते- स्व एवैन मायतने गृह्णाति, प्राणो वा ऐन्द्रवायवः- प्राणो नवम मह- स्तस्मान्नवमेऽह न्नैन्द्रवायवो गृह्यते- स्व एवैन मायतने गृह्णा,त्येतत्।। 30।। ❀ वै तृतीयँ यज्ञ माप- द्यच्छन्दा॰स्याप्नोति- यदैन्द्रवायव.श्श्वो गृह्यते, यत्रैव यज्ञ मदृश- न्तत एवैनं पुनः प्रयुङ्क्ते-ऽथो~ स्वमेव छन्दोऽनु पर्यावर्तन्ते, पथो वा एतेऽध्यपथेन यन्ति- येऽन्येनैन्द्रवायवा त्प्रतिपद्यन्ते,ऽन्तः खलु वा एष यज्ञस्य- यद्दशम मह,र्दशमेऽह न्नैन्द्रवायवो गृह्यते- यज्ञस्य।। 31।। ❀ एवान्त.ङ्गत्वाऽपथा त्पन्थामपि य,न्त्यथो~ यथा वहीयसा प्रतिसारँ वहन्ति- तादृगेव त,च्छन्दा॰स्यन्योऽन्यस्य लोक.मभ्यध्याय- न्तान्येतेनैव देवा व्यवाहय,न्नैन्द्रवायवस्य वा एतदायतनँ- यच्चतुर्थमह-स्तस्मि न्नाग्रयणो गृह्यते- तस्मा.दाग्रयणस्याऽऽयतने नवमेऽह न्नैन्द्रवायवो गृह्यते, शुक्रस्य वा एतदायतनँ- यत्पञ्चमम्।। 32।। ❀ अह-स्तस्मि न्नैन्द्रवायवो गृह्यते- तस्मादैन्द्रवायवस्याऽऽयतने सप्तमेऽह न्छुक्रो गृह्यते, आग्रयणस्य वा एतदायतनँ- यथ्षष्ठमह- स्तस्मिन्छुक्रो गृह्यते- तस्माच्छुक्रस्याऽऽयतनेऽष्टमेऽह.न्नाग्रयणो गृह्यते, छन्दा॰स्येव तद्विवाहयति, प्र वस्यसो विवाह माप्नोति - य एवँ वेदा,ऽथो~ देवताभ्य एव यज्ञे सँविद न्दधाति- तस्मादिद मन्योऽन्यस्मै ददाति।। 33।।

(एतद्वै पञ्चमेऽह न्त्रैष्टुभ एतद्गृह्यते यज्ञस्य पञ्चम मन्यस्मा एकञ्च। 8।) (गायत्र स्त्रैष्टुभो जागतो जगन्मुखोऽथो स्व॰ राथन्तरो बार्हत एतद्वै द्वितीय॰ शुक्र स्त्रिष्टुब्मुखोऽथो वाक्प्राण एतदथो पथ श्चतुर्थ न्नवमे पञ्चम॰ सप्तमे यथषष्ठ मष्टमेऽहन्छन्दा॰सि।)

❀ प्रजापति.रकामयत प्र जायेयेति, स एत न्द्वादशरात्र मपश्य- त्तमाऽहर- त्तेनायजत- ततो वै स प्राजायत, य॰ कामयेत प्र जायेयेति- स द्वादशरात्रेण यजेत- प्रैव जायते, ब्रह्मवादिनो वद- न्त्यग्निष्टोमप्रायणा यज्ञा- अथ कस्मा दतिरात्र॰ पूर्व॰ प्र युज्यत इति, चक्षुषी~ वा एते~ यज्ञस्य- यदतिरात्रौ, कनीनिके~ अग्निष्टोमौ, यत्।। 34।। ❀ अग्निष्टोमं पूर्वं प्रयुञ्जीर- न्बहिर्धा कनीनिके~ दध्यु- स्तस्मादतिरात्र॰ पूर्व॰ प्र युज्यते- चक्षुषी~ एव यज्ञे धित्वा- मध्यत॰ कनीनिके~ प्रति दधति, यो वै गायत्री ञ्ज्योति॰पक्षाँ वेद- ज्योतिषा भासा सुवर्गँ लोकमेति, यावग्निष्टोमौ- तौ पक्षौ, येऽन्तरेऽष्टा.वुक्थ्या- स्स आ,त्मैषा वै गायत्री ज्योति॰पक्षा, य एवँ वेद- ज्योतिषा भासा सुवर्गँ लोकम्।। 35।। ❀ एति, प्रजापति र्वा एष द्वादशधा विहितो- यद्वादशरात्रो, यावतिरात्रौ - तौ पक्षौ, येऽन्तरेऽष्टा वुक्थ्या- स्स आत्मा, प्रजापति र्वावैष स'2'न्थसद्ध वै सत्रेण स्पृणोति, प्राणो वै स-त्प्राणानेव स्पृणोति, सर्वासाँ वा एते प्रजानां प्राणै रासते- ये सत्र मासते, तस्मात्पृच्छन्ति -किमेते सत्रिण इति, प्रिय॰ प्रजाना.मुत्थितो भवति - य एवँ वेद।। 36।। (अग्निष्टोमौ यथ्सुवर्गँ लोकं प्रिय॰ प्रजानां पञ्च च। 9।)

❀ न वा एषोऽन्यतोवैश्वानर- स्सुवर्गाय लोकाय प्राभव,दूर्ध्वो ह वा एष आतत आसी,त्ते देवा एतँ वैश्वानरं पर्यौह'2'-न्थसुवर्गस्य लोकस्य प्रभूत्या, ऋतवो वा एतेन प्रजापति मयाजय- न्तेष्वार्ध्नो,दधि तदृध्नोति ह वा ऋत्विक्षु- य एवँ विद्वा न्द्वादशाहेन यजते, तेऽस्मि न्नैच्छन्त- स रस मह वसन्ताय प्रायच्छत्-।। 37।। ❀ यव ङ्ग्रीष्मा-यौषधी र्वर्षाभ्यो- व्रीहीन्छरदे- माषतिलौ हेमन्तशिशिराभ्या- न्तेनेन्द्रं प्रजापति रयाजय, त्ततो वा इन्द्र- इन्द्रोऽभव,त्तस्मा.दाहु- रानुजावरस्य यज्ञ इति- स ह्येतेनाग्रेऽयज,तैष ह वै कुणपमत्ति- य.स्सत्रे प्रतिगृह्णाति- पुरुषकुणप- मश्वकुणप,ङ्गौर्वा अन्नँ- येन पात्रेणान्नं बिभ्रति- यत्तन्न निर्णेनिजति- ततोऽधि।। 38।। ❀ मलञ्जायत, एक एव यजे-तैको हि प्रजापति राध्नो,द्वादश रात्री र्दीक्षितस्स्या- द्वादश मासा स्सँवथ्सर- स्सँवथ्सर॰ प्रजापति॰- प्रजापति र्वावैष, एष ह त्वै जायते- यस्तपसोऽधि जायते, चतुर्धा वा एता स्तिस्त्रस्तिस्त्रो रात्रयो- यद्वादशोपसदो, या॰ प्रथमा- यज्ञ न्ताभि स्सं भरति, या द्वितीया-यज्ञ न्ताभि रारभते,।। 39।। ❀ यास्तृतीया॰- पात्राणि ताभि र्निर्णेनिक्ते, याश्चतुर्थी- रपि ताभि रात्मान मन्तरत श्शुन्धते, यो वा अस्य पशुमत्ति-

मा॒ऽसऽ सोऽत्ति, य॒ पु॒रोडा॒शं- म॒स्तिष्कऽ॒ से॒, य॒ परि॒वा॒पं- पुरी॒षऽ॒ से॒, ये आ॒ज्यं- म॒ज्जान॒ऽ॒ से॒, य.स्सोमऽ- स्वेद॒ऽ॒ सो,ऽपि ह॒ वा अ॒स्य शी॒र्॒ष्ण्या नि॒ष्पद॒ प्रति गृह्णाति- यो द्वादशा॒हे प्र॒ति॒गृ॒ह्णाति, तस्मा॑द्द्वादशा॒हेन॒ न याज्यं- पा॒प्मनो॒ व्यावृ॑त्त्यै।। 40।। (अयच्छ॒ द॒धि रभते द्वादशा॒हेन॒ च॒त्वारि॒ च। 10।)

**वै।का। 13 अश्वमेध मन्त्राः – 2 (दशानुवाकाः 10।)**

☸❀卐एक॑स्मै॒ स्वाहा॒ 卐 द्वाभ्या॒ऽ॒ स्वाहा॒ 卐 त्रि॒भ्य स्स्वाहा॒ 卐 च॒तु॒र्भ्य स्स्वाहा॒ 卐 प॒ञ्च॒भ्य॒ स्स्वाहा॒ 卐 ष॒ड्भ्य स्स्वाहा॒ 卐 स॒प्त॒भ्य॒ स्स्वाहा॑卐ऽष्टा॒भ्य स्स्वाहा॒ 卐 न॒व॒भ्य॒ स्स्वाहा॒ 卐 द॒श॒भ्य स्स्वा卐हैका॑द॒श॒भ्य॒ स्स्वाहा॒ 卐 द्वा॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 त्र॒यो॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 च॒तु॒र्द॒श॒भ्य॒ स्स्वाहा॒ 卐 प॒ञ्च॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 षो॒ड॒श॒भ्य॒ स्स्वाहा॒ 卐 स॒प्त॒द॒श॒भ्य॒ स्स्वाहा॑卐ऽष्टा॒द॒श॒भ्य॒ स्स्वा卐हैका॑न्न वि॒ऽश॒त्यै स्वाहा॒ 卐 नव॑वि॒ऽश॒त्यै॒ स्वा卐हैका॑न्न च॒त्वा॒रि॒ऽश॒ते॒ स्वाहा॒ 卐 नव॑चत्वारि॒ऽश॒ते॒ स्वा卐हैका॑न्न ष॒ष्ट्यै॒ स्वाहा॒ 卐 नव॑षष्ट्यै॒ स्वा卐हैका॑न्नाशी॒त्यै॒ स्वाहा॒ 卐 न॒वा॒शी॒त्यै॒ स्वा卐हैका॑न्न श॒ताय॒ स्वाहा॒ 卐 श॒ताय॒ स्वाहा॒ 卐 द्वाभ्या॒ऽ॒ श॒ताभ्या॒ऽ॒ स्वाहा॒ 卐 सर्व॑स्मै॒ स्वाहा॑।। 41।। (नवच॒त्वा॒रि॒ऽश॒ते॒ स्वाहैका॑न्नैकवि॒ऽश॒तिश्च। 11।)

☸❀卐एक॑स्मै॒ स्वाहा॒ 卐 त्रि॒भ्य स्स्वाहा॒ 卐 प॒ञ्च॒भ्य॒ स्स्वाहा॒ 卐 स॒प्त॒भ्य॒ स्स्वाहा॒ 卐 न॒व॒भ्य॒ स्स्वा卐हैका॑द॒श॒भ्य॒ स्स्वाहा॒ 卐 त्र॒यो॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 प॒ञ्च॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 स॒प्त॒द॒श॒भ्य॒ स्स्वा卐हैका॑न्न वि॒ऽश॒त्यै स्वाहा॒ 卐 नव॑वि॒ऽश॒त्यै॒ स्वा卐हैका॑न्न च॒त्वा॒रि॒ऽश॒ते॒ स्वाहा॒ 卐 नव॑चत्वारि॒ऽश॒ते॒ स्वा卐हैका॑न्न ष॒ष्ट्यै॒ स्वाहा॒ 卐 नव॑षष्ट्यै॒ स्वा卐हैका॑न्नाशी॒त्यै॒ स्वाहा॒ 卐 न॒वा॒शी॒त्यै॒ स्वा卐हैका॑न्न श॒ताय॒ स्वाहा॒ 卐 श॒ताय॒ स्वाहा॒ 卐 सर्व॑स्मै॒ स्वाहा॑।। 42।। (एक॑स्मै प॒ञ्चा॒श॒त्। 12।)

☸❀卐द्वाभ्या॒ऽ॒ स्वाहा॒ 卐 च॒तु॒र्भ्य स्स्वाहा॒ 卐 ष॒ड्भ्य स्स्वाहा॑卐ऽष्टा॒भ्य स्स्वाहा॒ 卐 द॒श॒भ्य॒ स्स्वाहा॒ 卐 द्वा॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 च॒तु॒र्द॒श॒भ्य॒ स्स्वाहा॒ 卐 षो॒ड॒श॒भ्य॒ स्स्वाहा॑卐ऽष्टा॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 वि॒ऽश॒त्यै स्वाहा॒ 卐ऽष्टान॑वत्यै॒ स्वाहा॒ 卐 श॒ताय॒ स्वाहा॒ 卐 सर्व॑स्मै॒ स्वाहा॑।। 43।। (द्वाभ्या॒ म॒ष्टान॑वत्यै॒ ष॒ड्वि॒ऽश॒तिः। 13।)

☸❀卐त्रि॒भ्य स्स्वाहा॒ 卐 प॒ञ्च॒भ्य॒ स्स्वाहा॒ 卐 स॒प्त॒भ्य॒ स्स्वाहा॒ 卐 न॒व॒भ्य॒ स्स्वा卐हैका॑द॒श॒भ्य॒ स्स्वाहा॒ 卐 त्र॒यो॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 प॒ञ्च॒द॒श॒भ्य॒ स्स्वाहा॒ 卐 स॒प्त॒द॒श॒भ्य॒ स्स्वा卐हैका॑न्न वि॒ऽश॒त्यै स्वाहा॒ 卐 नव॑वि॒ऽश॒त्यै॒ स्वा卐हैका॑न्न च॒त्वा॒रि॒ऽश॒ते॒ स्वाहा॒ 卐 नव॑चत्वारि॒ऽश॒ते॒ स्वा卐हैका॑न्न ष॒ष्ट्यै॒ स्वाहा॒ 卐

नवषष्ट्यै स्वाऽहैकान्नाशीत्यै स्वाहा ऽ नवाशीत्यै स्वाऽहैकान्न शताय स्वाहा ऽ शताय स्वाहा ऽ सर्वस्मै स्वाहा।। 44।। (त्रिभ्योऽष्टाचत्वारिंशत्। 14।)

ॐचतुर्भ्य स्स्वाहा ऽऽष्टाभ्य स्स्वाहा ऽ द्वादशभ्य स्स्वाहा ऽ षोडशभ्य स्स्वाहा ऽ विंशत्यै स्वाहा ऽ षण्णवत्यै स्वाहा ऽ शताय स्वाहा ऽ सर्वस्मै स्वाहा।। 45।। (चतुर्भ्य ष्षण्णवत्यै षोडश। 15।)

ॐपञ्चभ्य स्स्वाहा ऽ दशभ्य स्स्वाहा ऽ पञ्चदशभ्य स्स्वाहा ऽ विंशत्यै स्वाहा ऽ पञ्चनवत्यै स्वाहा ऽ शताय स्वाहा ऽ सर्वस्मै स्वाहा।। 46।। (पञ्चभ्यः पञ्चनवत्यै चतुर्दश। 16।)

ॐदशभ्य स्स्वाहा ऽ विंशत्यै स्वाहा ऽ त्रिंशते स्वाहा ऽ चत्वारिंशते स्वाहा ऽ पञ्चाशते स्वाहा ऽ षष्ट्यै स्वाहा ऽ सप्तत्यै स्वाहाऽऽशीत्यै स्वाहा ऽ नवत्यै स्वाहा ऽ शताय स्वाहा ऽ सर्वस्मै स्वाहा।। 47।। (दशभ्यो द्वाविंशतिः। 17।)

ॐविंशत्यै स्वाहा ऽ चत्वारिंशते स्वाहा ऽ षष्ट्यै स्वाहा ऽऽशीत्यै स्वाहा ऽ शताय स्वाहा ऽ सर्वस्मै स्वाहा।। 48।। (विंशत्यै द्वादश। 18।)

ॐपञ्चाशते स्वाहा ऽ शताय स्वाहा ऽ द्वाभ्यां शताभ्यां स्वाहा ऽ त्रिभ्य श्शतेभ्य स्स्वाहा ऽ चतुर्भ्य श्शतेभ्य स्स्वाहा ऽ पञ्चभ्य श्शतेभ्य स्स्वाहा ऽ षड्भ्य श्शतेभ्य स्स्वाहा ऽ सप्तभ्य श्शतेभ्य स्स्वाहा ऽऽष्टाभ्य श्शतेभ्य स्स्वाहा ऽ नवभ्य श्शतेभ्य स्स्वाहा ऽ सहस्राय स्वाहा ऽ सर्वस्मै स्वाहा।। 49।। (पञ्चाशते द्वात्रिंशत्। 19।)

ॐशताय स्वाहा ऽ सहस्राय स्वाहा ऽऽयुताय स्वाहा ऽ नियुताय स्वाहा ऽ प्रयुताय स्वाहाऽऽर्बुदाय स्वाहा ऽ न्यर्बुदाय स्वाहा ऽ समुद्राय स्वाहा ऽ मध्याय स्वाहाऽऽन्ताय स्वाहा ऽ परार्धाय स्वाऽहोषसे स्वाहा ऽ व्युष्ट्यै स्वाऽहोदेष्यते स्वाऽहोद्यते स्वाऽहोदिताय स्वाहा ऽ सुवर्गाय स्वाहा ऽ लोकाय स्वाहा ऽ सर्वस्मै स्वाहा।। 50।। (शतायाष्टात्रिंशत्। 20।)

(साध्या ष्षड्रात्र ङ्कुसुरुबिन्द स्सप्तरात्रं बृहस्पति रष्टरात्रं प्रजापति स्ताः~ क्षुध न्नवरात्रं प्रजापति रकामयत दशहोतार मृतव ऐन्द्रवायवाग्रा न्गायत्रो वै प्रजापति स्स द्वादशरात्र न्न वा एकस्मा एकस्मै द्वाभ्या न्त्रिभ्य श्चतुर्भ्यः पञ्चभ्यो दशभ्यो विंशत्यै पञ्चाशते शताय विंशतिः।। 20।। साध्या अस्मा इमे लोका गायत्रँ वै तृतीय मेकस्मै पञ्चाशत्।। 50।। साध्या स्सर्वस्मै स्वाहा।)

**वै।का। 7 सात्रायण ब्राह्मणम् – 3 (दशानुवाकाः 10।)**

प्रजवँ वा एतेन यन्ति- यद्दशम महः, पापावहीयँ वा एतेन भवन्ति- यद्दशम मह,र्यो वै प्रजवँ यता मपथेन प्रतिपद्यते- यस्थाणुꣳ हन्ति- यो भ्रेषन्न्येति- स हीयते, स यो वै दशमेऽह न्नविवाक्य उपहन्यते- स हीयते, तस्मै ये उपहताय व्याह- तमेन्वारभ्य समश्नुते,ऽथ यो व्याह- सः।। 1।। हीयते, तस्माद्दशमेऽह न्नविवाक्य उपहताय न व्युच्य,मथो~ खल्वाहु- र्यज्ञस्य वै समृद्धेन देवा.स्सुवर्गँ लोकमायन्- यज्ञस्य व्यृद्धेनासुरा न्पराऽभावयन्निति, यत्खलु वै यज्ञस्य- समृद्ध न्त,द्यजमानस्य यद्व्यृद्ध- न्तद्भ्रातृव्यस्य, स यो वै दशमेऽह.न्नविवाक्य उपहन्यते- स एवाति रेचयति, ते ये बाह्या दृशीकवः।। 2।। स्यु-स्ते वि ब्रूयु,र्यदि तत्र न विन्देयु-रन्तस्सदसा द्व्युच्यँ, यदि तत्र न विन्देयु- र्गृहपतिना व्युच्य- न्तद्व्युच्य मेवा,ऽथ वा एतथ्सर्पराज्ञिया ऋग्भि स्स्तुव-न्तीयँ वै सर्पतो राज्ञी, यद्वा अस्या.ङ्किञ्चार्चन्ति- यदानृचु- स्तेनेयꣳ सर्पराज्ञी, ते यदेव किञ्च वाचाऽऽनृचु- र्यदतोऽध्यर्चितारः-।। 3।। तदुभय माप्त्वा ऽवरुध्योत्तिष्ठामेति- ताभि र्मनसा स्तुवते, न वा इमा मश्वरथो- नाश्वतरीरथ स्सद्यः पर्याप्तु मर्हति, मनो वा इमाꣳ सद्यः पर्याप्तु मर्हति- मनः परिभवितु,मथ ब्रह्म वदन्ति, परिमिता वा ऋचः- परिमितानि सामानि- परिमितानि यजूꣳ,ष्यथैतस्यैवान्तो नास्ति- यद्ब्रह्म, तत्प्रतिगृणत आ चक्षीत- स प्रतिगरः।। 4।। (व्याह स दृशीकवोऽर्चितार स्स एकञ्च। 1।)

ब्रह्मवादिनो वदन्ति- किन्द्वादशाहस्य प्रथमेनाह्नर्त्विजाँ यजमानो वृङ्क्त इति- तेज इन्द्रियमिति, किन्द्वितीयेनेति- प्राणा नन्नाद्यमिति, किन्तृतीयेनेति- त्रीनिमा न्लोकानिति, किञ्चतुर्थेनेति- चतुष्पदः पशूनिति, किं पञ्चमेनेति- पञ्चाक्षरां पङ्क्तिमिति, किꣳ षष्ठेनेति- षडृतूनिति, किꣳ सप्तमेनेति - सप्तपदाꣳ शक्करीमिति,।। 5।। किमष्टमेने-त्यष्टाऽक्षरा.ङ्गायत्रीमिति, किन्नवमेनेति - त्रिवृतꣳ स्तोममिति, किन्दशमेनेति- दशाक्षराँ विराजमिति, किमेकादशेने-त्येकादशाक्षरा न्त्रिष्टुभमिति, किन्द्वादशेनेति- द्वादशाक्षरा ञ्जगती मि,त्येतावद्वा अस्ति- यावदेत,द्याव.देवास्ति- तदेषाँ वृङ्क्ते।। 6।। (शक्करी मित्येकचत्वारिꣳशच्च। 2।)

❀ एष वा आप्तो द्वादशाहो- यत्त्रयोदशरात्र,स्समानꣳ ह्येतदह- र्यत्प्रायणीय श्चोदयनीयश्च, त्र्यतिरात्रो भवति- त्रय इमे लोका- एषाँ लोकानामाप्त्यै, प्राणो वै प्रथमोऽतिरात्रो- व्यानो द्वितीयो-ऽपान स्तृतीयः, प्राणापानोदानेष्वेवान्नाद्ये प्रति तिष्ठन्ति- सर्व मायु र्यन्ति- य एवँ विद्वाꣳस स्त्रयोदशरात्र मासते, तदाहु- र्वाग्वा एषा वितता-।। 7।। ❀ यद्द्वादशाह-स्ताँ विच्छिन्द्यु,र्यन्मध्येऽतिरात्र.ङ्कुर्यु- रुपदासुका गृहपते र्वाक्स्या,दुपरिष्टा च्छन्दोमानां महाव्रत.ङ्कुर्वन्ति- सन्ततामेव वाचमव रुन्धते-ऽनुपदासुका गृहपते र्वाग्भवति, पशवो वै छन्दोमा- अन्नं महाव्रतँ, यदुपरिष्टा च्छन्दोमानां महाव्रत.ङ्कुर्वन्ति- पशुषु चैवान्नाद्ये च प्रति तिष्ठन्ति।। 8।। (वितता त्रिचत्वारिꣳशच्च। 3।)

❀ आदित्या अकामय-न्तोभयो र्लोकयोर् ऋध्नुयामेति, त एत श्चतुर्दशरात्र मपश्य- न्तमाऽहर- न्तेनायजन्त, ततो वै त उभयो र्लोकयो रार्ध्नुव-न्नस्मिꣳश्चामुष्मिꣳश्च, य एवँ विद्वाꣳस श्चतुर्दशरात्र मासते- उभयोरेव लोकयोर् ऋध्नुव- न्त्यस्मिꣳश्चामुष्मिꣳश्च, चतुर्दशरात्रो भवति - सप्त ग्राम्या ओषधय- स्सप्ताऽऽरण्या- उभयीषामवरुद्ध्यै, यत्पराचीनानि पृष्ठानि।। 9।। ❀ भव-न्त्यमुमेव तै र्लोकमभि जयन्ति, यत्प्रतीचीनानि पृष्ठानि भव-न्तीममेव तै र्लोकमभि जयन्ति, त्रयस्त्रिꣳशौ मध्यत स्स्तोमौ भवत- स्साम्राज्यमेव गच्छ,-न्त्यधिराजौ भवतो-ऽधिराजा एव समानानां भव,न्त्यतिरात्रा.वभितो भवतः- परिगृहीत्यै।। 10।। (पृष्ठानि चतुस्त्रिꣳशच्च। 4।)

❀ प्रजापति स्सुवर्गँ लोक.मै- त्तन्देवा अन्वाय-न्तानादित्याश्च पशव श्चान्वाय,न्ते देवा अब्रुवन्- यान्पशू नुपाजीविष्म- त इमेऽन्वाग्मन्निति, तेभ्य एतञ्चतुर्दशरात्रं प्रत्यौह- न्त आदित्याः पृष्ठै स्सुवर्गँ लोक माऽरोह- न्त्र्यहाभ्या मस्मि न्लोके पशू न्प्रत्यौह,न्पृष्ठै रादित्या अमुष्मि न्लोक आर्ध्नुव-न्त्र्यहाभ्या मस्मिन्।। 11।। ❀ लोके पशवो, य एवँ विद्वाꣳस श्चतुर्दशरात्र मासते- उभयो.रेव लोकयोर् ऋध्नुव- न्त्यस्मिꣳश्चामुष्मिꣳश्च, पृष्ठै रेवामुष्मिन्लोक ऋध्नुवन्ति- त्र्यहाभ्या मस्मि.न्लोके, ज्योति र्गौ.रायुरिति त्र्यहो भव,तीयँ वाव ज्योति-रन्तरिक्ष.ङ्गौ-रसा.वायु-रिमानेव लोका.नभ्यारोहन्ति, यदन्यतः पृष्ठानि स्यु- र्विविवधꣳ स्या,न्मध्ये पृष्ठानि भवन्ति- सविवधत्वाय,।। 12।। ❀ ओजो वै वीर्यं पृष्ठा-न्योज एव वीर्यं मध्यतो दधते, बृहद्रथन्तराभ्याँ य-न्तीयँ वाव रथन्तर-मसौ बृह-दाभ्यामेव य-न्त्यथो~ अनयो रेव प्रति तिष्ठ,न्त्येते~ वै यज्ञस्याञ्जसायनी~ स्रुती~ ताभ्यामेव सुवर्गँ लोकँ यन्ति, पराञ्चो वा एते सुवर्गँ लोक मभ्यारोहन्ति- ये पराचीनानि पृष्ठा.न्युपयन्ति, प्रत्यङ्त्र्यहो भवति- प्रत्यवरूढ्या- अथो~ प्रतिष्ठित्या- उभयो र्लोकयोर् ऋद्ध्वोत्तिष्ठन्ति, चतुर्दशैता-स्तासाँ या दश- दशाक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्य

मव रुन्धते, याश्चतस्र- श्चतस्रो दिशो- दिक्ष्वेव प्रति तिष्ठ-न्त्यतिरात्रा.वभितो भवतः- परिगृहीत्यै।। 13।। (आर्ध्नुवन्त्र्यहाभ्या मस्मि'2'न्थ्सविवधत्वाय प्रतिष्ठित्या एकत्रि९शच्च। 5।)

❀ इन्द्रो वै सदृ.ङ्देवताभि रासी-थ्से न व्यावृत मगच्छ-थ्से प्रजापति मुपाधाव,त्तस्मा एतं पञ्चदशरात्रं प्रायच्छ- त्तमाऽहर- त्तेनायजत, ततो वै सोऽन्याभि र्देवताभि र्व्यावृत मगच्छ- द्य एवँ विद्वा९सः पञ्चदशरात्र मासते- व्यावृतमेव पाप्मना भ्रातृव्येण गच्छन्ति, ज्योति र्गौ.रायुरिति- त्र्यहो भव,तीयँ वाव ज्योति- रन्तरिक्षम्।। 14।। ❀ गौ-रसा.वायु- रेष्वेव लोकेषु प्रति तिष्ठ,न्त्यसत्रँ वा एत-द्यदछन्दोमँ, यच्छन्दोमा भवन्ति- तेन सत्र,न्देवता एव पृष्ठै रव रुन्धते- पशू न्छन्दोमै,रोजो वै वीर्यं पृष्ठानि- पशव श्छन्दोमा- ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति, पञ्चदशरात्रो भवति- पञ्चदशो वज्रो- वज्रमेव भ्रातृव्येभ्यः प्रहर,न्त्यतिरात्रा.वभितो भवत- इन्द्रियस्य परिगृहीत्यै।। 15।। (अन्तरिक्ष मिन्द्रियस्यैकञ्च। 6।)

❀ इन्द्रो वै शिथिले इवाप्रतिष्ठित आसी-थ्सोऽसुरेभ्योऽबिभे-थ्से प्रजापति मुपाधाव,त्तस्मा एतं पञ्चदशरात्रँ वज्रं प्रायच्छ- त्तेनासुरा न्पराभाव्य विजित्य श्रिय मगच्छ,दग्निष्टुता पाप्मान न्निरदहत- पञ्चदशरात्रेणौजो बल मिन्द्रियँ वीर्य मात्म न्नधत्त, य एवँ विद्वा९सः पञ्चदशरात्र मासते - भ्रातृव्यानेव पराभाव्य विजित्य श्रिय ङ्गच्छ,-न्त्यग्निष्टुता पाप्मान न्निः।। 16।। ❀ दहन्ते- पञ्चदशरात्रेणौजो बल मिन्द्रियँ वीर्य मात्म न्दधत, एता एव पशव्याः- पञ्चदश वा अर्धमासस्य रात्रयो-ऽर्धमासश स्सँवथ्सर आप्यते- सँवथ्सरं पशवोऽनु प्र जायन्ते- तस्मात्पशव्या, एता एव सुवर्ग्याः- पञ्चदश वा अर्धमासस्य रात्रयो-ऽर्धमासश स्सँवथ्सर आप्यते- सँवथ्सर स्सुवर्गो लोक- स्तस्माथ्सुवर्ग्या, ज्योति र्गौ.रायुरिति- त्र्यहो भव,तीयँ वाव ज्योति- रन्तरिक्षम्।। 17।। ❀ गौ-रसा.वायु-रिमानेव लोका.नभ्यारोहन्ति, यदन्यतः पृष्ठानि स्यु- र्विविवधङ् स्या,न्मध्ये पृष्ठानि भवन्ति सविवधत्वा,यौजो वै वीर्यं पृष्ठा-न्योज एव वीर्यं मध्यतो दधते, बृहद्रथन्तराभ्याँ य-न्तीयँ वाव रथन्तर- मसौ बृह-दाभ्यामेव य-न्त्यथो~ अनयो रेव प्रति तिष्ठ,न्त्येते~ वै यज्ञस्याञ्जसायनी~ स्रुती~ ताभ्यामेव सुवर्गँ लोकम्।। 18।। ❀ यन्ति, पराञ्चो वा एते सुवर्गँ लोक.मभ्यारोहन्ति- ये पराचीनानि पृष्ठा.न्युपयन्ति,प्रत्यङ्त्र्यहो भवति- प्रत्यवरूढ्या- अथो~ प्रतिष्ठित्या- उभयो र्लोकयोर् ऋद्ध्वोत्तिष्ठन्ति, पञ्चदशैता-स्तासाँ या दश- दशाक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्यमव रुन्धते, याः पञ्च- पञ्च दिशो- दिक्ष्वेव प्रति तिष्ठ,न्त्यतिरात्रा.वभितो भवत-

इन्द्रियस्य वीर्यस्य प्रजायै पशूनां परिगृहीत्यै।। 19।। (गच्छन्त्यग्निष्टुता पाप्मानं निरन्तरिक्षँ लोकं प्रजायै द्वे च। 7।)

❀ प्रजापति रकामयतान्नाद स्स्यामिति, स एतꣳ सप्तदशरात्र मपश्य- त्तमाऽहर- त्तेनायजत- ततो वै सोऽन्नादोऽभव,द्यँ एवँ विद्वाꣳस स्सप्तदशरात्र मासते-ऽन्नादा एव भवन्ति, पञ्चाहो भवति- पञ्च वा ऋतव स्सँवत्सरे- ऋतुष्वेव सँवथ्सरे प्रति तिष्ठ,न्त्यथो~ पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञमेवाव रुन्धते,ऽसत्रँ वा एतत्-।। 20।।❀ यदछन्दोमँ, यच्छन्दोमा भवन्ति- तेन सत्र,न्देवता एव पृष्ठै रव रुन्धते- पशू न्छन्दोमै,रोजो वै वीर्यं पृष्ठानि- पशव श्छन्दोमा- ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति, सप्तदशरात्रो भवति- सप्तदशः प्रजापतिः- प्रजापते राप्त्या- अतिरात्रा.वभितो भवतो-ऽन्नाद्यस्य परिगृहीत्यै।। 21।। (एतथ्सप्तत्रिꣳशच्च। 8।)

❀ सा विराड्विक्रम्यातिष्ठ-द्ब्रह्मणा देवे.ष्वन्नेनासुरेषु, ते देवा अकामय-न्तोभयꣳ सँवृञ्जीमहि- ब्रह्म चान्न.ञ्चेति, त एता विꣳशतिꣳ रात्री रपश्य- न्ततो वै त उभयꣳ समवृञ्जत- ब्रह्म चान्नञ्च, ब्रह्मवर्चसिनोऽन्नादा अभवन्, य एवँ विद्वाꣳस एता आसते- उभयमेव सँ वृञ्जते- ब्रह्म चान्नञ्च-।। 22।।❀ ब्रह्मवर्चसिनोऽन्नादा भवन्ति, द्वे~ वा एते~ विराजौ- तयोरेव नाना प्रति तिष्ठन्ति, विꣳशो वै पुरुषो- दश हस्त्या अङ्गुलयो- दश पद्या, यावानेव पुरुष- स्तमाप्त्वोत्तिष्ठन्ति, ज्योति गौ.रायुरिति- त्र्यहो भव,न्तीयँ वाव ज्योति- रन्तरिक्ष.ङ्गौ-रसा.वायु- रिमानेव लोका.नभ्यारोह,न्त्यभिपूर्वं त्र्यहो भव- न्त्यभिपूर्वमेव सुवर्गम्।। 23।।❀ लोक मभ्यारोहन्ति, यदन्यतः पृष्ठानि स्यु- र्विविवधꣳ स्या,न्मध्ये पृष्ठानि भवन्ति- सविवधत्वा,यौजो वै वीर्यं पृष्ठा-न्योज एव वीर्यं मध्यतो दधते, बृहद्रथन्तराभ्याँ य-न्तीयँ वाव रथन्तर- मसौ बृह-दाभ्यामेव य-न्त्यथो~ अनयो रेव प्रति तिष्ठ,न्त्येते~ वै यज्ञस्याञ्जसायनी~ स्रुती~ ताभ्यामेव सुवर्गँ लोकँ यन्ति, पराञ्चो वा एते सुवर्गँ लोक मभ्यारोहन्ति- ये पराचीनानि पृष्ठा.न्युपयन्ति, प्रत्यङ्त्र्यहो भवति- प्रत्यवरूढ्या- अथो~ प्रतिष्ठित्या~ उभयो र्लोकयोर् ऋद्ध्वोत्तिष्ठ,न्त्यतिरात्रा.वभितो भवतो- ब्रह्मवर्चस.स्यान्नाद्यस्य परिगृहीत्यै।। 24।। (वृञ्जते ब्रह्म चान्नञ्च सुवर्गमेते सुवर्ग न्त्रयोविꣳशतिश्च। 9।)

❀ असा.वादित्योऽस्मिन्लोक आसी- त्तन्देवाः पृष्ठैः परिगृह्य सुवर्गँ लोक मगमय,न्परै रवस्ता त्पर्यगृह्ण- न्दिवाकीर्त्येन सुवर्गे लोके प्रत्यस्थापय,न्परैः परस्ता त्पर्यगृह्ण- न्पृष्ठै रुपावारोह'2',न्थ्स वा असा.वादित्यो-ऽमुष्मिन्लोके परै रुभयतः परिगृहीतो, यत्पृष्ठानि भवन्ति- सुवर्गमेव तै र्लोकँ यजमाना

यन्ति, परैं रवस्ता.त्परि गृह्णन्ति- दिवाकीर्त्येन।। 25।।❀ सुवर्गे लोके प्रति तिष्ठन्ति, परैः परस्तात्परि गृह्णन्ति- पृष्ठै रुपावरोहन्ति, यत्परे परस्ता.न्न स्स्युः- पराञ्च स्सुवर्गा ल्लोका.न्निष्पद्येरन्, यदवस्ता.न्न स्स्युः- प्रजो निर्दहेयु,रभितो दिवाकीर्त्यं परस्सामानो भवन्ति- सुवर्ग एवैना न्लोक उभयतः परि गृह्णन्ति, यजमानो वै दिवाकीर्त्यं- सँवथ्सरः परस्सामानो-ऽभितो दिवाकीर्त्यं परस्सामानो भवन्ति- सँवथ्सर एवोभयतः।। 26।।❀ प्रति तिष्ठन्ति, पृष्ठँ वै दिवाकीर्त्यं- पार्श्वे~ परस्सामानो-ऽभितो दिवाकीर्त्यं परस्सामानो भवन्ति- तस्मा.दभितः पृष्ठं पार्श्वे~, भूयिष्ठा ग्रहा गृह्यन्ते- भूयिष्ठं शस्यते, यज्ञस्यैव तन्मध्यतो ग्रन्थि.ङ्ग्रथ्न-न्त्यविस्रंसाय, सप्त गृह्यन्ते- सप्त वै शीर्षण्याः प्राणाः- प्राणानेव यजमानेषु दधति, यत्पराचीनानि पृष्ठानि भव-न्त्यमुमेव तै र्लोक मभ्यारोहन्ति, यदिमँ लोक.न्न।। 27।।❀ प्रत्यवरोहेयु-रुद्वा माद्येयु-र्यजमानाः प्र वा मीयेरन्, यत्प्रतीचीनानि पृष्ठानि भव-न्तीममेव तै र्लोकं प्रत्यवरोह-न्त्यथो~ अस्मिन्नेव लोके प्रति तिष्ठ-न्त्यनुन्मादा,येन्द्रो वा अप्रतिष्ठित आसी-थ्स प्रजापति मुपाधाव, त्तस्मा एत मेकविंशतिरात्रं प्रायच्छ- त्तमाऽहर- त्तेनायजत, ततो वै स प्रत्यतिष्ठ,द्ये बहुयाजिनो ऽप्रतिष्ठिताः।। 28।।❀ स्यु-स्त एकविंशतिरात्र मासीर,न्द्वादश मासाः- पञ्चर्तव- स्त्रय इमे लोका- असावादित्य एकविंश- एतावन्तो वै देवलोका- स्तेष्वेव यथापूर्वं प्रति तिष्ठ,न्त्यसा.वादित्यो न व्यरोचत- स प्रजापति मुपाधाव-त्तस्मा एत मेकविंशतिरात्रं प्रायच्छ- त्तमाऽहर- त्तेनायजत- ततो वै सोऽरोचत, य एवँ विद्वांस एकविंशतिरात्र मासते- रोचन्त ए,वैकविंशतिरात्रो भवति- रुग्वा एकविंशो- रुचमेव गच्छ-न्त्यथो~ प्रतिष्ठामेव, प्रतिष्ठा ह्येकविंशो, ऽतिरात्रा.वभितो भवतो- ब्रह्मवर्चसस्य परिगृहीत्यै।। (गृह्णन्ति दिवाकीर्त्येनैवोभयतो नाप्रतिष्ठिता आसत एकविंशतिश्च। 10।)

**वै।का। 13 अश्वमेध मन्त्राः – 3 (दशानुवाकाः 10।)**

❀卐 अर्वाङ्यज्ञ स्सङ्क्राम-त्वमुष्मा दधि मामभि। ऋषीणाँ यः पुरोहितः।।

卐 निर्देव न्निर्वीर.ङ्कृत्वा विष्कन्ध न्तस्मिन् हीयताँ योऽस्मान्द्वेष्टि। शरीरँ यज्ञशमल.ङ्कुसीद न्तस्मि न्थ्सीदतु योऽस्मान्द्वेष्टि।।

卐 यज्ञ यज्ञस्य यत्तेज स्तेन सङ्क्राम मामभि। ब्राह्मणा नृत्विजो देवान् यज्ञस्य तपसा ते सवाह माहुवे।।

卐 इष्टेन पक्व मुप।। 30।।❀ ते हुवे सवाहम्। सन्ते वृञ्जे सुकृतं सं प्रजां पशून्।।

卐 प्रैषा.न्थ्सामिधेनी राघारा.वाज्यभागा-वाश्रुतं प्रत्याश्रुत मा श्र्णामि ते। प्रयाजानुयाजा न्थ्स्विष्टकृत मिडा माशिष आ वृञ्जे सुवः।।

卐 अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना देवताभिः। याज्याऽनुवाक्याभ्या मुप ते हुवे सवाहँ यज्ञ माददे ते वषट्कृतम्।।

卐 स्तुत९ शस्त्रं प्रतिगर.ङ्ग्रह मिडा माशिषः।। 31।।❀ आ वृञ्जे सुवः। पत्नीसँयाजा नुप ते हुवे सवाह९ समिष्टयजु राददे तव।।

卐 पशून्थ्सुतं पुरोडाशा न्थ्सवना.न्योत यज्ञम्। देवा न्थ्सेन्द्रा नुप ते हुवे सवाह मग्निमुखा न्थ्सोमवतो ये च विश्वे।। 32।। (उप ग्रह मिडा माशिषो द्वात्रि९शच्च। 11।)

❀卐भूतं भव्यं भविष्य.द्वषट्थ्स्वाहा नम卐 ऋक्साम यजुर्वषट्थ्स्वाहा नमो 卐 गायत्री त्रिष्टुब्जगती वषट्थ्स्वाहा नमः 卐 पृथिव्यन्तरिक्ष न्द्यौर्वषट्थ्स्वाहा नमो 卐ऽग्नि र्वायु स्सूर्यो वषट्थ्स्वाहा नमः 卐 प्राणो व्यानोऽपानो वषट्थ्स्वाहा नमो 卐ऽन्न.ङ्कृषि र्वृष्टि र्वषट्थ्स्वाहा नमः 卐 पिता पुत्रः पौत्रो वषट्थ्स्वाहा नमो 卐 भूर्भुव स्सुव र्वषट्थ्स्वाहा नमः।। 33।। (भुवश्चत्वारि च। 12।)

❀卐आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यावान्। आपो देवी र्यज्ञिया माऽऽविशन्तु सहस्रस्य मा भूमा मा प्र हासीत्।।

卐 आ मे ग्रहो भवत्वा पुरोरुक् स्तुतशस्त्रे~ माऽऽविशता९ समीची~। आदित्या रुद्रा वसवो मे सदस्या स्सहस्रस्य मा भूमा मा प्र हासीत्।।

卐 आ माऽग्निष्टोमो विशतूक्थ्यश्चातिरात्रो माऽऽविश त्वापिशर्वरः। तिरोअह्निया मा सुहुता आ विशन्तु सहस्रस्य मा भूमा मा प्र हासीत्।। 34।। (अग्निष्टोमो विशत्वष्टादश च। 13।)

❀卐अग्निना तपो॒ऽन्वभव 卐द्वाचा ब्रह्म- 卐मणिना रूपा-卐णीन्द्रेण देवान्- 卐 वातेन प्राणा- 卐 न्थ्सूर्येण द्या-卐श्चन्द्रमसा नक्षत्राणि- 卐 यमेन पितृ- 卐न्राज्ञा मनुष्या- 卐न्फलेन नादेया- 卐 नजगरेण सर्पा- 卐न्व्याघ्रेणाऽऽरण्या न्पशू- 卐न्छ्येनेन पतत्रिणो- 卐 वृष्णाऽश्वा- 卐नृषभेण गो-卐 बस्तेनाजो- 卐वृष्णिनाऽवी- 卐व्रीँहिणाऽन्नानि- 卐 यवेनौषधी-卐न्न्यग्रोधेन वनस्पती- 卐 नुदुम्बरेणोर्ज-卐ङ्गायत्रिया छन्दा९सि- 卐 त्रिवृता स्तोमा-卐न्ब्राह्मणेन वाचम्--।। 35।। (ब्राह्मणेनैकञ्च। 14।)

❀卐स्वाहाऽऽधि माधीताय स्वाहा 卐 स्वाहाऽऽधीतं मनसे स्वाहा 卐 स्वाहा मनः प्रजापतये स्वाहा 卐 काय स्वाहा 卐 कस्मै स्वाहा 卐 कतमस्मै स्वाहा 卐ऽदित्यै स्वाहा 卐ऽदित्यै मह्यै स्वाहा 卐ऽदित्यै

सुमृडीकायै स्वाहा 卐 सरस्वत्यै स्वाहा 卐 सरस्वत्यै बृहत्यै स्वाहा 卐 सरस्वत्यै पावकायै स्वाहा 卐 पूष्णे स्वाहा 卐 पूष्णे प्रपथ्याय स्वाहा 卐 पूष्णे नरन्धिषाय स्वाहा 卐 त्वष्ट्रे स्वाहा 卐 त्वष्ट्रे तुरीपाय स्वाहा 卐 त्वष्ट्रे पुरुरूपाय स्वाहा 卐 विष्णवे स्वाहा 卐 विष्णवे निखुर्यपाय स्वाहा 卐 विष्णवे निभूयपाय स्वाहा 卐 सर्वस्मै स्वाहा।। 36।। (पुरुरूपाय स्वाहा दश च। 15।)

❀卐दद्भ्य स्स्वाहा 卐 हनूभ्याꣳ स्वा卐होष्ठाभ्याꣳ स्वाहा 卐 मुखाय स्वाहा 卐 नासिकाभ्याꣳ स्वाहा卐ऽक्षीभ्याꣳ स्वाहा 卐 कर्णाभ्याꣳ स्वाहा 卐 पार इक्षवोऽवार्येभ्यः पक्ष्मभ्य स्स्वाहा卐ऽवार इक्षवः पार्येभ्यः पक्ष्मभ्य स्स्वाहा 卐 शीर्ष्णे स्वाहा 卐 भ्रूभ्याꣳ स्वाहा 卐 ललाटाय स्वाहा 卐 मूर्ध्ने स्वाहा 卐 मस्तिष्काय स्वाहा 卐 केशेभ्य स्स्वाहा 卐 वहाय स्वाहा 卐 ग्रीवाभ्य स्स्वाहा 卐 स्कन्धेभ्य स्स्वाहा 卐 कीकसाभ्य स्स्वाहा 卐 पृष्टीभ्य स्स्वाहा 卐 पाजस्याय स्वाहा 卐 पार्श्वाभ्याꣳ स्वाहा।। 37।। ❀卐अꣳसाभ्याꣳ स्वाहा 卐 दोषभ्याꣳ स्वाहा 卐 बाहुभ्याꣳ स्वाहा 卐 जङ्घाभ्याꣳ स्वाहा 卐 श्रोणीभ्याꣳ स्वा卐होरुभ्याꣳ स्वाहा 卐ऽष्ठीवद्भ्याꣳ स्वाहा 卐 जङ्घाभ्याꣳ स्वाहा 卐 भसदे स्वाहा 卐 शिखण्डेभ्य स्स्वाहा 卐 वालधानाय स्वाहा 卐ऽऽण्डाभ्याꣳ स्वाहा 卐 शेपाय स्वाहा 卐 रेतसे स्वाहा 卐 प्रजाभ्य स्स्वाहा 卐 प्रजननाय स्वाहा 卐 पद्भ्य स्स्वाहा 卐 शफेभ्य स्स्वाहा 卐 लोमभ्य स्स्वाहा 卐 त्वचे स्वाहा 卐 लोहिताय स्वाहा 卐 माꣳसाय स्वाहा 卐 स्नावभ्य स्स्वाहा 卐ऽस्थभ्य स्स्वाहा 卐 मज्जभ्य स्स्वाहा 卐ऽङ्गेभ्य स्स्वाहा 卐ऽऽत्मने स्वाहा 卐 सर्वस्मै स्वाहा।। (पार्श्वाभ्याꣳ स्वाहा मज्जभ्य स्स्वाहा षट्च। 16।)

❀ अञ्ज्येताय स्वाहा卐ऽञ्जिसक्थाय स्वाहा 卐 शितिपदे स्वाहा 卐 शितिककुदे स्वाहा 卐 शितिरन्ध्राय स्वाहा 卐 शितिपृष्ठाय स्वाहा 卐 शित्यꣳसाय स्वाहा 卐 पुष्पकर्णाय स्वाहा 卐 शित्योष्ठाय स्वाहा 卐 शितिभ्रवे स्वाहा 卐 शितिभसदे स्वाहा 卐 श्वेतानूकाशाय स्वाहा 卐ऽञ्जये स्वाहा 卐 ललामाय स्वाहा卐ऽसितज्ञवे स्वाहा 卐 कृष्णैताय स्वाहा 卐 रोहितैताय स्वाहा卐ऽरुणैताय स्वा卐हेदृशाय स्वाहा 卐 कीदृशाय स्वाहा 卐 तादृशाय स्वाहा 卐 सदृशाय स्वाहा 卐 विसदृशाय स्वाहा 卐 सुसदृशाय स्वाहा 卐 रूपाय स्वाहा 卐 सर्वस्मै स्वाहा।। 39।। (रूपाय स्वाहा द्वे च। 17।)

❀卐कृष्णाय स्वाहा 卐 श्वेताय स्वाहा 卐 पिशङ्गाय स्वाहा 卐 सारङ्गाय स्वाहा 卐ऽरुणाय स्वाहा 卐 गौराय स्वाहा 卐 बभ्रवे स्वाहा 卐 नकुलाय स्वाहा 卐 रोहिताय स्वाहा 卐 शोणाय स्वाहा 卐 श्यावाय स्वाहा 卐 श्यामाय स्वाहा 卐 पाकलाय स्वाहा 卐 सुरूपाय स्वाहा 卐ऽनुरूपाय स्वाहा 卐 विरूपाय

स्वाहा ॐ सरूपाय स्वाहा ॐ प्रतिरूपाय स्वाहा ॐ शबलाय स्वाहा ॐ कमलाय स्वाहा ॐ पृश्ञये स्वाहा ॐ पृश्ञिसक्थाय स्वाहा ॐ सर्वस्मै स्वाहा।। 40।। (कृष्णाय षट्चत्वारिंशत्। 18।)

ॐओषधीभ्य स्स्वाहा ॐ मूलेभ्य स्स्वाहा ॐ तूलेभ्य स्स्वाहा ॐ काण्डेभ्य स्स्वाहा ॐ वल्शेभ्य स्स्वाहा ॐ पुष्पेभ्य स्स्वाहा ॐ फलेभ्य स्स्वाहा ॐ गृहीतेभ्य स्स्वाहाॐऽगृहीतेभ्य स्स्वाहाॐऽवपन्नेभ्य स्स्वाहा ॐ शयानेभ्य स्स्वाहा ॐ सर्वस्मै स्वाहा।। 41।। (ओषधीभ्य श्चतुर्विंशतिः। 19।)

ॐवनस्पतिभ्य स्स्वाहा ॐ मूलेभ्य स्स्वाहा ॐ तूलेभ्य स्स्वाहा ॐ स्कन्धोभ्य स्स्वाहा ॐ शाखाभ्य स्स्वाहा ॐ पर्णेभ्य स्स्वाहा ॐ पुष्पेभ्य स्स्वाहा ॐ फलेभ्य स्स्वाहा ॐ गृहीतेभ्य स्स्वाहा ॐऽगृहीतेभ्य स्स्वाहा ॐऽवपन्नेभ्य स्स्वाहा ॐ शयानेभ्य स्स्वाहा ॐ शिष्टाय स्वाहा ॐऽतिशिष्टाय स्वाहा ॐ परिशिष्टाय स्वाहा ॐ संशिष्टाय स्वाॐहोच्छिष्टाय स्वाहा ॐ रिक्ताय स्वाहा ॐऽरिक्ताय स्वाहा ॐ प्ररिक्ताय स्वाहा ॐ संरिक्ताय स्वाॐहोद्रिक्ताय स्वाहा ॐ सर्वस्मै स्वाहा।। 42।। (वनस्पतिभ्य स्स्कन्धोभ्य श्शिष्टाय रिक्ताय षट्चत्वारिंशत्। 20।)

(प्रजवं ब्रह्मवादिनः किमेष वा आप्त आदित्या उभयोः प्रजापति रन्वाय न्निन्द्रो वै सदृङ्ङिन्द्रो वै शिथिलः प्रजापति रकामयतान्नाद स्सा विराडसावादित्योऽर्वा ङ्गत मामेऽग्निना स्वाहाऽधि न्द्य्योऽश्येताय कृष्णायौषधीभ्यो वनस्पतिभ्यो विंशतिः। 20। प्रजवं प्रजापति र्यदछन्दोम न्ते हुवे सवाह मोषधीभ्यो द्विचत्वारिंशत्। 42। प्रजवं सर्वस्मै स्वाहा।)

## सप्तम काण्डे चतुर्थः प्रपाठकः

### वै।का। 7 सात्रायण ब्राह्मणम् – 4 (एकादशानुवाकाः 11।)

बृहस्पति रकामयत- श्रन्मे देवा दधीर- न्गच्छेयं पुरोधामिति, स एत ञ्चतुर्विंशतिरात्र मपश्य- त्तमाऽहर- त्तेनायजत, ततो वै तस्मै श्रद्देवा अदधता-ऽगच्छ.त्पुरोधाँ, य एवँ विद्वांस श्चतुर्विंशतिरात्र मासते- श्रदेभ्यो मनुष्या दधते- गच्छन्ति पुरोधा,ञ्ज्योति गौ.रायु.रिति त्र्यहा भव,न्तीयँ वाव ज्योति- रन्तरिक्ष.ङ्गौ-रसा.वायुः-।। 1।। इमा.नेव लोका.नभ्यारोह,न्त्यभिपूर्व न्त्र्यहो भव- न्त्यभिपूर्वमेव सुवर्गँ लोक.मभ्यारोह,न्त्यसत्रँ वा एत-द्यदछन्दोमँ, यच्छन्दोमा भवन्ति- तेन सत्र,न्देवता एव पृष्ठै रव रुन्धते- पशून्छन्दोमै,रोजो वै वीर्यं पृष्ठानि- पशव श्छन्दोमा- ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति, बृहद्रथन्तराभ्याँ य-न्तीयँ वाव रथन्तर-मसौ बृह-दाभ्यामेव।। 2।। य-न्त्यथो अनयो रेव

प्रति तिष्ठ,न्त्येते~ वै यज्ञस्याञ्जसायनी~ स्रुती~ ताभ्यामेव सुवर्गँ लोकँ यन्ति, चतुर्विं॰शतिरात्रो भवति - चतुर्विं॰शति रर्धमासा स्सँवथ्सर- स्सँवथ्सर स्सुवर्गो लोक- स्सँवथ्सरं एव सुवर्गे लोके प्रति तिष्ठ-न्त्यथो~ चतुर्विं॰शत्यक्षरा गायत्री- गायत्री ब्रह्मवर्चस-ङ्गायत्रियैव ब्रह्मवर्चस मव रुन्धते,ऽतिरात्रा.वभितो भवतो- ब्रह्मवर्चसस्य परिगृहीत्यै।। 1।। (गौरसावायु राभ्यामेव पञ्चचत्वारि॰शच्च। 1।)

❀ यथा वै मनुष्या- एव न्देवा अग्र आस,न्तेऽकामयन्ता-ऽवर्तिं पाप्मानं मृत्यु मपहत्य- दैवी॰ स॰सद.ङ्गच्छेमेति, तं एत ञ्चतुर्विं॰शतिरात्र मपश्य- न्तमाऽहर- न्तेनायजन्त- ततो वै तेऽवर्तिं पाप्मानं मृत्यु मपहत्य दैवी॰ स॰सद मगच्छन्, ये एवँ विद्वा॰स श्चतुर्विं॰शतिरात्र मासते-ऽवर्तिमेव पाप्मान मपहत्य- श्रिय.ङ्गच्छन्ति, श्रीर्हि मनुष्यस्य।। 4।। ❀ दैवी स॰स,ज्ज्योति.रतिरात्रो भवति- सुवर्गस्य लोकस्यानुख्यात्यै, पृष्ठ्य ष्षडहो भवति- षड्वा ऋतव स्सँवथ्सर-स्तं मासा अर्धमासा ऋतवः प्रविश्य- दैवी॰ स॰सद मगच्छन्, ये एवँ विद्वा॰स श्चतुर्विं॰शतिरात्र मासते- सँवथ्सरमेव प्रविश्य- वस्यसी॰ स॰सद.ङ्गच्छन्ति, त्रय.स्त्रयस्त्रिं॰शा अवस्ता द्भवन्ति- त्रय.स्त्रयस्त्रिं॰शाः परस्ता-त्त्रयस्त्रिं॰शै रेवोभयतोऽवर्तिं पाप्मान मपहत्य- दैवी॰ स॰सदं मध्यतः।। 5।। ❀ गच्छन्ति, पृष्ठानि हि दैवी स॰स,ज्जामि वा एतत्कुर्वन्ति- यत्त्रय.स्त्रयस्त्रिं॰शा अन्वञ्चो- मध्येऽनिरुक्तो भवति- तेनाजा,म्यूर्ध्वानि पृष्ठानि भव-न्त्यूर्ध्वा श्छन्दोमा- उभाभ्या॰ रूपाभ्या॰ सुवर्गँ लोकँ य,न्त्यसत्रँ वा एत- द्यदछन्दोमँ, यच्छन्दोमा भवन्ति- तेन सत्र, न्देवता एव पृष्ठै रव रुन्धते- पशून्छन्दोमै,रोजो वै वीर्यं पृष्ठानि- पशवः।। 6।। ❀ छन्दोमा- ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति, त्रय.स्त्रयस्त्रिं॰शा अवस्ता द्भवन्ति- त्रय स्त्रयस्त्रिं॰शाः परस्ता-न्मध्ये पृष्ठा-न्युरो वै त्रयस्त्रिं॰शा- आत्मा पृष्ठा-न्यात्मन एव तद्यजमाना श्शर्म नह्यन्तेऽनार्त्यै, बृहद्रथन्तराभ्याँ य-न्तीयँ वाव रथन्तर- मसौ बृह-द्राभ्यामेव य-न्त्यथो~ अनयो रेव प्रति तिष्ठ,न्त्येते~ वै यज्ञस्याञ्जसायनी~ स्रुती~ ताभ्यामेव।। 7।। ❀ सुवर्गँ लोकँ यन्ति, पराञ्चो वा एते सुवर्गँ लोक.मभ्यारोहन्ति- ये पराचीनानि पृष्ठान्युपयन्ति, प्रत्य'2'ङ्स्षडहो भवति- प्रत्यवरूढ्या- अथो~ प्रतिष्ठित्या- उभयो र्लोकयोर् ऋद्ध्वोत्तिष्ठन्ति, त्रिवृतोऽधि त्रिवृत.मुप यन्ति- स्तोमाना॰ सम्पत्त्यै प्रभवाय, ज्योति रग्निष्टोमो भव-त्ययँ वाव से क्षयो-ऽस्मादेव तेन क्षया.न्न यन्ति, चतुर्विं॰शतिरात्रो भवति- चतुर्विं॰शति रर्धमासा स्सँवथ्सर- स्सँवथ्सर स्सुवर्गो लोक- स्सँवथ्सरं एव सुवर्गे लोके प्रति तिष्ठ-न्त्यथो~ चतुर्विं॰शत्यक्षरा गायत्री- गायत्री ब्रह्मवर्चस-ङ्गायत्रियैव ब्रह्मवर्चस मव

रुन्धते,ऽतिरात्रावभितो भवतो- ब्रह्मवर्चसस्य परिगृहीत्यै।। 8।। (मनुष्यस्य मध्यतः पशव स्ताभ्यामेव सँवथ्सर श्चतुर्विꣳशतिश्च। 2।)

ऋक्षा वा इय मलोमकाऽऽसी-थ्सा कामय.तौषधीभि र्वनस्पतिभिः प्र जायेयेति, सैता स्त्रिꣳशतꣳ रात्री रपश्य- त्ततो वा इयमोषधीभि र्वनस्पतिभिः प्राजायत, ये प्रजाकामाः पशुकामा स्स्यु- स्त एता आसीर- न्प्रैव जायन्ते- प्रजया पशुभि,रियँ वा अक्षुध्य-थ्सैताँ विराज मपश्य-त्तामात्म न्धित्वाऽन्नाद्य मवारु.न्धौषधीः।। 9।। वनस्पती. न्प्रजां पशून्तेनावर्धत- सा जेमानं महिमान मगच्छ,द्य एवँ विद्वाꣳस एता आसते- विराज मेवाऽऽत्मन्धित्वाऽन्नाद्य.मव रुन्धते- वर्धन्ते प्रजया पशुभि र्जेमानं महिमान.ङ्गच्छन्ति, ज्योति रतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै, पृष्ठ्य ष्षडहो भवति- षड्वा ऋतव- ष्षट्पृष्ठानि- पृष्ठै रेवर्तू नन्वारोह-न्त्यृतुभि स्सँवथ्सर,न्ते सँवथ्सर एव।। 10।। प्रति तिष्ठन्ति, त्रयस्त्रिꣳशा त्त्रयस्त्रिꣳमुप यन्ति- यज्ञस्य सन्तत्या, अथो~ प्रजापतिर्वै त्रयस्त्रिꣳशः- प्रजापतिमेवाऽऽरभन्ते प्रतिष्ठित्यै, त्रिणवो भवति विजित्या, एकविꣳशो भवति प्रतिष्ठित्या- अथो~ रुच मेवाऽऽत्म न्दधते, त्रिवृ.दग्निष्टु द्भवति- पाप्मानमेव तेन निर्दहन्ते,ऽथो~ तेजो वै त्रिवृ.त्तेज~ एवाऽऽत्मन्दधते- पञ्चदश इन्द्रस्तोमो भव-तीन्द्रियमेवाव।। 11।। रुन्धते, सप्तदशो भव- त्यन्नाद्यस्यावरुद्ध्या- अथो~ प्रैव तेन जायन्त, एकविꣳशो भवति प्रतिष्ठित्या- अथो~ रुचमेवाऽऽत्मन्दधते, चतुर्विꣳशो भवति- चतुर्विꣳशति रर्धमासा स्सँवथ्सर- स्सँवथ्सर स्सुवर्गो लोक- स्सँवथ्सर एव सुवर्गे लोके प्रति तिष्ठ,न्त्यथो~ एषै वै विषूवान्- विषूवन्तो भवन्ति, य एवँ विद्वाꣳस एता आसते- चतुर्विꣳशात्पृष्ठान्युप यन्ति, सँवथ्सर एव प्रतिष्ठाय।। 12।। देवता अभ्यारोहन्ति, त्रयस्त्रिꣳशा.त्त्रयस्त्रिꣳश मुप यन्ति, त्रयस्त्रिꣳशद्वै देवता- देवतास्वेव प्रति तिष्ठन्ति, त्रिणवो भव-तीमे वै लोका स्त्रिणवे- एष्वेव लोकेषु प्रति तिष्ठन्ति, द्वा.वेकविꣳशौ भवतः प्रतिष्ठित्या- अथो~ रुचमेवाऽऽत्म न्दधते, बहव ष्षोडशिनो भवन्ति- तस्माद्बहवः प्रजासु वृषाणो, यदेते स्तोमा व्यतिषक्ता भवन्ति- तस्मादिय मोषधीभि र्वनस्पतिभि र्व्यतिषक्ता,।। 13।। व्यतिषज्यन्ते प्रजया पशुभि,र्य एवँ विद्वाꣳस एता आसते-ऽक्लृप्ता वा एते सुवर्गँ लोकँ य-न्त्युच्चावचान् हि स्तोमा नुपयन्ति, यदेत ऊर्ध्वाः क्लृप्ता स्स्तोमा भवन्ति - क्लृप्ता एव सुवर्गँ लोकँ य-न्त्युभयोरेभ्यो लोकयोः कल्पते, त्रिꣳशदेता स्त्रिꣳशदक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्य मव रुन्धते,ऽतिरात्रा.वभितो भवतो-ऽन्नाद्यस्य परिगृहीत्यै।। 14।। (ओषधी स्सँवथ्सर एवाव प्रतिष्ठाय व्यतिषक्तैकान्न पञ्चाशच्च। 3।)

प्रजापति स्सुवर्गँ लोक.मै-त्त न्देवा येनयेन छन्दसाऽनु प्रायुञ्जत- तेन नाऽऽप्नुव,न्ते एतौ द्वात्रि॰शत॰ रात्री रपश्य,न्द्वात्रि॰शदक्षराऽनुष्टु- गानुष्टुभः प्रजापति- स्स्वेनैव छन्दसा प्रजापति माप्त्वाऽभ्यारुह्य सुवर्गँ लोक मायन्, यँ एवँ विद्वा॰स एतौ आसते द्वात्रि॰शदेता- द्वात्रि॰शदक्षराऽनुष्टु-गानुष्टुभः प्रजापति- स्स्वेनैव छन्दसा प्रजापति माप्त्वा- श्रिय ङ्गच्छन्ति,।। 15।। श्रीर्हि मनुष्यस्य सुवर्गो लोको, द्वात्रि॰शदेतौ- द्वात्रि॰शदक्षराऽनुष्टु-ग्वागनुष्टु,प्सर्वामेव वाच माप्नुवन्ति - सर्वे वाचो वदितारो भवन्ति- सर्वे हि श्रिय ङ्गच्छन्ति, ज्योति र्गौ.रायु.रिति त्र्यहो भव,न्तीयँ वाव ज्योति-रन्तरिक्ष.ङ्गौ-रसा.वायु, रिमानेव लोका.नभ्यारोह-न्त्यभिपूर्वं त्र्यहो भव-न्त्यभिपूर्वमेव सुवर्गँ लोक मभ्यारोहन्ति, बृहद्रथन्तराभ्याँ यन्ति।। 16।। इयँ वाव रथन्तर- मसौ बृह- दाभ्यामेव य-न्त्यथो~ अनयो रेव प्रति तिष्ठ,न्त्येते~ वै यज्ञस्याञ्जसायनी~ स्रुती~ ताभ्यामेव सुवर्गँ लोकँ यन्ति, पराञ्चो वा एते सुवर्गँ लोक.मभ्यारोहन्ति- ये पराच स्त्र्यहा.नुपयन्ति, प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्यौ- अथो~ प्रतिष्ठित्यौ- उभयो र्लोकयोर् ऋद्ध्वोत्तिष्ठन्ति, द्वात्रि॰शदेता- स्तासाँ या स्त्रि॰श- त्त्रि॰श.दक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्य मव रुन्धते, ये~ द्वे~ अहोरात्रे~ एव ते~, उभाभ्या॰ रूपाभ्या॰ सुवर्गँ लोकँ य-न्त्यतिरात्रा.वभितो भवतः परिगृहीत्यै।। 17।। (गच्छन्ति यन्ति त्रि॰शदक्षरा द्वावि॰शतिश्च। 4।)

द्वे~ वाव देवसत्रे~ द्वादशाहश्चैव त्रयस्त्रि॰श.दहश्च, यँ एवँ विद्वा॰स स्त्रयस्त्रि॰शदह मासते- साक्षादेव देवता अभ्यारोहन्ति, यथा खलु वै श्रेया नभ्यारूढः कामयते - तथा करोति, यद्यवविध्यति पापीया.न्भवति, यदि नावविध्यति- सदृ,ङ्यँ एवँ विद्वा॰स स्त्रयस्त्रि॰शदह मासते- वि पाप्मना भ्रातृव्येणाऽऽवर्तन्ते,ऽहर्भाजो वा एतौ देवौ अग्र आऽहरन्न,।। 18।। अहरेकोऽभजता-ऽह रेक-स्ताभि र्वै ते प्रबाहु गार्ध्नुवन्, यँ एवँ विद्वा॰स स्त्रयस्त्रि॰शदह मासते- सर्व एव प्रबाहु गृध्नुवन्ति- सर्वे ग्रामणीयं प्राऽऽप्नुवन्ति, पञ्चाहो भवन्ति- पञ्च वा ऋतव स्सँवथ्सरे- ऋतुष्वेव सँवथ्सरे प्रति तिष्ठ,न्त्यथो~ पञ्चाक्षरा पङ्क्तिः- पाङ्क्तो यज्ञो- यज्ञ मेवाव रुन्धते, त्रीण्याश्विनानि भवन्ति- त्रय इमे लोका- एषु।। 19।। एव लोकेषु प्रति तिष्ठ,न्त्यथो~ त्रीणि वै यज्ञस्येन्द्रियाणि- तान्येवाव रुन्धते, विश्वजि. द्भव-त्यन्नाद्यस्यावरुद्ध्यै, सर्वपृष्ठो भवति- सर्वस्याभिजित्यै, वाग्वै द्वादशाहो- यत्पुरस्ता द्वादशाह मुपेयु-रनाप्ताँ वाच मुपेयु,रुपदासुकैषाँ वाक्स्या-दुपरिष्टा द्वादशाह मुप य-न्त्याप्तामेव वाचमुप यन्ति- तस्मा.दुपरिष्टा.द्वाचा वदामो,ऽवान्तरम्।। 20।। वै दशरात्रेण प्रजापतिः प्रजा असृजत, यद्दशरात्रो भवति- प्रजा एव तद्यजमाना स्सृजन्त, एता॰ ह वा उदङ्क श्शौल्बायन स्सत्रस्यर्द्धि मुवाच- यद्दशरात्रो,

यद्दशरात्रो भवति- सत्रस्यर्द्ध्यै- अथो~ यदेव पूर्वेष्वहस्सु विलोम क्रियते- तस्यैवैषा शान्ति,र्द्व्यनीका वा एतौ रात्रयो- यजमानौ विश्वजि- थ्सहातिरात्रेण पूर्वा ष्षोडश- सहातिरात्रेणोत्तरा ष्षोडश, य एवँ विद्वा॰स स्त्रयस्त्रि॰शदह मासते- ऐषा न्द्व्यनीका प्रजा जायते-ऽतिरात्रा.वभितो भवत॰ परिगृहीत्यै।। 21।। (अहर न्नेष्ववान्तर॰ षोडश सह सप्तदश च। 5।)

ॐ❀ आदित्या अकामयन्त सुवर्गँ लोकमियामेति, ते सुवर्गँ लोक.न्न प्राजान- न्न सुवर्गँ लोक माय,न्त एत॰ षड्त्रि॰शद्रात्र मपश्य- न्तमाऽहर- न्तेनायजन्त- ततो वै ते सुवर्गँ लोकं प्राजान'2'-न्थ्सुवर्गँ लोकमायन्, य एवँ विद्वा॰स ष्षड्त्रि॰शद्रात्र मासते- सुवर्गमेव लोकं प्र जानन्ति- सुवर्गँ लोकँ यन्ति- ज्योति रतिरात्रः।। 22।।❀ भवति- ज्योतिरेव पुरस्ता.द्दधते- सुवर्गस्य लोकस्यानुख्यात्यै, षडहो भवन्ति- षड्वा ऋतव -ऋतुष्वेव प्रति तिष्ठन्ति, चत्वारो भवन्ति- चतस्रो दिशो- दिक्ष्वेव प्रति तिष्ठ,न्त्यसत्रँ वा एत- द्यदछन्दोमँ, यच्छन्दोमा भवन्ति- तेन सत्र, न्देवता एव पृष्ठै रव रुन्धते- पशू न्छन्दोमै,रोजो वै वीर्य पृष्ठानि- पशव श्छन्दोमा- ओजस्येव।। 23।।❀ वीर्ये पशुषु प्रति तिष्ठन्ति, षड्त्रि॰शद्रात्रो भवति- षड्त्रि॰शदक्षरा बृहती- बार्हता॰ पशवो- बृहत्यैव पशूनव रुन्धते, बृहती छन्दसा॰ स्वाराज्य माश्ञुता,ऽश्ञुवते स्वाराज्यँ- य एवँ विद्वा॰स ष्षड्त्रि॰शद्रात्र मासते- सुवर्गमेव लोकँ य- न्त्यतिरात्रा.वभितो भवत- स्सुवर्गस्य लोकस्य परिगृहीत्यै।। 24।। (अतिरात्र ओजस्येव षड्त्रि॰शच्च। 6।)

ॐ❀ वसिष्ठो हतपुत्रोऽकामयत- विन्देय प्रजा- मभि सौदासा न्भवेयमिति, स एत मेकस्मा.न्नपञ्चाश मपश्य- त्तमाऽहर- त्तेनायजत- ततो वै सोऽविन्दत प्रजा- मभि सौदासा नभव,द्य एवँ विद्वा॰स एकस्मा.न्नपञ्चाश मासते- विन्दन्ते प्रजा- मभि भ्रातृव्या न्भवन्ति, त्रय स्त्रिवृतोऽग्निष्टोमा भवन्ति- वज्रस्यैव मुख॰ स॰श्यन्ति, दश पञ्चदशा भवन्ति- पञ्चदशो वज्रः-।। 25।।❀ वज्रमेव भ्रातृव्येभ्य॰ प्र हरन्ति, षोडशिम.द्दशम मह र्भवति- वज्र एव वीर्य न्दधति, द्वादश सप्तदशा भव-न्त्यन्नाद्यस्यावरुद्ध्यै- अथो~ प्रैव तै र्जायन्ते, पृष्ठ्य ष्षडहो भवति- षड्वा ऋतव- ष्षट्पृष्ठानि, पृष्ठैरेवर्तू नन्वारोह-न्त्यृतुभि स्सँवथ्सर,न्ते सँवथ्सर एव प्रति तिष्ठन्ति, द्वादशैकवि॰शा भवन्ति प्रतिष्ठित्यै- अथो~ रुच मेवाऽत्मन्न्।। 26।।❀ दधते, बहव ष्षोडशिनो भवन्ति विजित्यै, षडाश्विनानि भवन्ति- षड्वा ऋतव -ऋतुष्वेव प्रति तिष्ठ, न्त्यूनातिरिक्तौ वा एतौ रात्रये, ऊना- स्तद्यदेकस्यै न पञ्चाश,दतिरिक्ता- स्तद्यद्भूयसी रष्टाचत्वारि॰शतं, ऊनाच्च खलु वा अतिरिक्ताच्च प्रजापति॰ प्राजायत, ये प्रजाकामा॰

पशुकामा.स्स्यु-स्ते एता आसीर- न्नैव जायन्ते प्रजया पशुभि,वैराजो वा एष यज्ञो- यदेकस्मान्नपञ्चाशो, य एवँ विद्वा॰स एकस्मा.न्नपञ्चाश मासते- विराजमेव गच्छ-न्त्यन्नादा भव,न्त्यतिरात्रा.वभितो भवतो-ऽन्नाद्यस्य परिगृहीत्यै।। 27।। (वज्र आत्म न्प्रजया द्वावि॰शतिश्च। 7।)

❀ सँवथ्सराय दीक्षिष्यमाणा एकाष्टकाया न्दीक्षेर,न्नेषा वै सँवथ्सरस्य पत्नी- यदेकाष्ट,कैतस्याँ वा एष एता॰ रात्रिँ वसति, साक्षादेव सँवथ्सर मारभ्य दीक्षन्ते, आर्तँ वा एते सँवथ्सरस्याभि दीक्षन्ते- य एकाष्टकाया न्दीक्षन्ते,ऽन्तनामाना.वृतू भवतो, व्यस्तँ वा एते सँवथ्सरस्याभि दीक्षन्ते- य एकाष्टकाया न्दीक्षन्ते,ऽन्तनामाना वृतू भवतः, फल्गुनीपूर्णमासे दीक्षेर- न्मुखँ वा एतत्।। 28।। ❀ सँवथ्सरस्य-यत्फल्गुनीपूर्णमासो- मुखत एव सँवथ्सर मारभ्य दीक्षन्ते, तस्यैकैव निर्या- यथ्साम्मेघ्ये- विषूवा न्थसम्पद्यते, चित्रापूर्णमासे दीक्षेर- न्मुखँ वा एतथ्सँवथ्सरस्य- यच्चित्रापूर्णमासो- मुखत एव सँवथ्सर मारभ्य दीक्षन्ते- तस्य न का चन निर्या भवति, चतुरहे पुरस्ता.त्पौर्णमास्यै दीक्षेर- न्तेषा मेकाष्टकाया.क्रय स्सं पद्यते- तेनैकाष्टका.न्न छम्बट्कुर्वन्ति- तेषाम्।। 29।। ❀ पूर्वपक्षे सुत्या सं पद्यते-पूर्वपक्षं मासा अभि संपद्यन्ते, ते पूर्वपक्ष उत्तिष्ठन्ति- तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति-तान्कल्याणी कीर्ति रनूत्तिष्ठ- त्यराथ्सु रिमे यजमाना इति, तदनु सर्वे राध्नुवन्ति।। 30।। (एत च्छम्बट्कुर्वन्ति तेषा ञ्चतुस्त्रि॰शच्च। 8।)

❀ सुवर्गँ वा एते लोकँ यन्ति- ये सत्र मुपय,न्त्यभीन्धत एव दीक्षाभि- रात्मान॰, श्रपयन्त उपसद्भि-र्द्वाभ्याँ लोमाव द्यन्ति- द्वाभ्या न्त्वच- न्द्वाभ्या मसृ-द्वाभ्यां मा॰स- न्द्वाभ्या मस्थि- द्वाभ्यां मज्जान, मात्मदक्षिणँ वै सत्र,मात्मानमेव दक्षिणा न्नीत्वा सुवर्गँ लोकँ यन्ति, शिखामनु प्र वपन्त ऋद्ध्या- अथो~ रघीया॰स स्सुवर्गँ लोक मयामेति।। 31।। (सुवर्गं पञ्चाशत्। 9।)

❀ ब्रह्मवादिनो वद-न्त्यतिरात्रः परमो यज्ञक्रतूना,ङ्कस्मा.त्तं प्रथम मुप यन्ती,त्येतद्वा अग्निष्टोमं प्रथम मुप य-न्त्यथोक्थ्य- मथ षोडशिन- मथातिरात्र,मनुपूर्व.मेवैत द्यज्ञक्रतू नुपेत्य- तानालभ्य परिगृह्य-सोम मेवैतत्पिबन्त आसते, ज्योतिष्टोमं प्रथम मुप यन्ति- ज्योतिष्टोमो वै स्तोमानां मुखं- मुखत एव स्तोमा न्प्रयुञ्जते, ते।। 32।। ❀ स॰स्तुता विराज मभि सं पद्यन्ते- द्वे चर्चा.वति रिच्येते~ एकया गौ रतिरिक्त- एकयाऽऽयु रून- स्सुवर्गो वै लोको ज्योति- रूर्ग्विरा-ट्थ्सुवर्ग मेव तेन लोकँ यन्ति, रथन्तर न्दिवा भवति- रथन्तर न्नक्तमित्याहु,र्ब्रह्मवादिनः केन तदजामीति- सौभर न्तृतीयसवने ब्रह्मसामं- बृह त्त.न्मध्यतो दधति विधृत्यै- तेनाजामि।। 33।। (त एकान्न पञ्चाशच्च। 10।)

❀ ज्योतिष्टोमं प्रथम मुपयन्त्य-स्मिन्नेव तेन लोके प्रति तिष्ठन्ति, गोष्टोम.न्द्वितीय मुप य-न्त्यन्तरिक्ष एव तेन प्रति तिष्ठ,न्त्यायुष्टोम न्तृतीय मुप य-न्त्यमुष्मिन्नेव तेन लोके प्रति तिष्ठ,न्तीयँ वाव ज्योति-रन्तरिक्ष.ङ्गौ-रसा.वायु, र्यदेतान्थ्स्तोमा नुपय-न्त्येष्वेव तल्लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति, ते सङ्स्तुता विराजम्।। 34।। ❀ अभि सं पद्यन्ते- द्वे चर्चा.वति रिच्येते~ एकया गौ.रतिरिक्त-एकयाऽऽयु.रून,स्सुवर्गो वै लोको ज्योति- रूर्ग्विरा-डूर्जमेवाव रुन्धते, ते न क्षुधाऽऽर्ति माच्छे-न्त्यक्षोधुका भवन्ति - क्षुथ्सम्बाधा इव हि सत्रिणो,ऽग्निष्टोमावभितः प्रधी~ ता.वुक्थ्या- मध्ये नभ्य.न्त-त्तदेत त्परिय देवचक्रँ,यदेतेन।। 35।। ❀ षडहेन यन्ति- देवचक्रमेव समारोह.न्त्यरिष्ट्यै- ते स्वस्ति समश्नुवते, षडहेन यन्ति- षड्वा ऋतव -ऋतुष्वेव प्रति तिष्ठ,न्त्युभयतोज्योतिषा य-न्त्युभयत एव सुवर्गो लोके प्रतितिष्ठन्तो यन्ति, द्वौ षडहौ भवत- स्तानि द्वादशाहानि सं पद्यन्ते, द्वादशो वै पुरुषो- द्वे सक्थ्यौ-द्वौ बाहू~ आत्मा च शिरश्च चत्वार्यङ्गानि- स्तनौ द्वादशौ।। 36।। ❀ त-त्पुरुष मनु पर्यावर्तन्ते, त्रय ष्षडहा भवन्ति- तान्यष्टादशाहानि सं पद्यन्ते, नवान्यानि नवान्यानि- नव वै पुरुषे प्राणा स्त-त्प्राणा ननु पर्यावर्तन्ते, चत्वार ष्षडहा भवन्ति- तानि चतुर्विंशति रहानि सं पद्यन्ते, चतुर्विंशति रर्धमासा स्सँवथ्सर.स्त-थ्सँवथ्सरमनु पर्यावर्तन्ते,ऽप्रतिष्ठित स्सँवथ्सर इति खलु वा आहु- र्वर्षीया न्प्रतिष्ठाया इ,त्येतावद्वै सँवथ्सरस्य ब्राह्मणँ- यावन्मासो, मासिमास्येव प्रतितिष्ठन्तो यन्ति।। 37।। (विराज मेतेन द्वादशावेतावद्वा अष्टौ च। 11।)

**वै।का। 13 अश्वमेध मन्त्राः – 4 (एकादशानुवाकाः 11।)**

卐 मेषँ-स्त्वा पचतै- रवतु 卐 लोहितग्रीव--श्छागै-- 卐श्शल्मलि--र्वृद्ध्या-- 卐पर्णो-- ब्रह्मणा-- 卐 प्लक्षो-- मेधेन-- 卐न्यग्रोध-- श्चमसै-- 卐रुदुम्बर-- ऊर्जा-- 卐गायत्री-- छन्दोभि-- 卐स्त्रिवृ--थ्स्तोमै-- 卐 रवन्ती स्स्थावन्ती स्त्वाऽवन्तु- प्रियन्त्वा प्रियाणाँ- वर्षिष्ठ माप्याना- न्निधीनान्त्वा निधिपतिं हवामहे वसो मम।। 38।। (मेष ष्षड्विंशत्। 12।)

❀卐कूप्याभ्य स्स्वाहा 卐 कूल्याभ्य स्स्वाहा 卐 विकर्याभ्य स्स्वाहा 卐ऽवट्याभ्य स्स्वाहा 卐 खन्याभ्य स्स्वाहा 卐 ह्रद्याभ्य स्स्वाहा 卐 सूद्याभ्य स्स्वाहा 卐 सरस्याभ्य स्स्वाहा 卐 वैशन्तीभ्य स्स्वाहा 卐 पल्वल्याभ्य स्स्वाहा 卐 वर्ष्याभ्य स्स्वाहा 卐ऽवर्ष्याभ्य स्स्वाहा 卐 ह्रादुनीभ्य स्स्वाहा 卐 पृष्वाभ्य स्स्वाहा 卐 स्यन्दमानाभ्य स्स्वाहा 卐 स्थावराभ्य स्स्वाहा 卐 नादेयीभ्य स्स्वाहा 卐 सैन्धवीभ्य स्स्वाहा 卐 समुद्रियाभ्य स्स्वाहा 卐 सर्वाभ्य स्स्वाहा।। 39।। (कूप्याभ्य श्चत्वारिंशत्। 13।)

卐अद्भ्य स्स्वाहा卐 वहन्तीभ्य स्स्वाहा卐 परिवहन्तीभ्य स्स्वाहा卐 समन्तँ वहन्तीभ्य स्स्वाहा卐 शीघ्रँ वहन्तीभ्य स्स्वाहा卐 शीभँ वहन्तीभ्य स्स्वा卐होग्रँ वहन्तीभ्य स्स्वाहा卐 भीमँ वहन्तीभ्य स्स्वाहा 卐ऽम्भोभ्य स्स्वाहा卐 नभोभ्य स्स्वाहा卐 महोभ्य स्स्वाहा卐 सर्वस्मै स्स्वाहा।। 40।। (अद्भ्य एकान्न त्रि॰शत्। 14।)

卐यो अर्वन्त.ञ्जिघा॰सति तमभ्यमीति वरुणः। 卐परो मर्तः पर श्वा।।卐 अहञ्च त्वञ्च वृत्रह'2'न्थ्सं बभूव सनिभ्य आ। अरातीवा चिदद्रिवोऽनु नौ शूर म॰सतै भद्रा इन्द्रस्य रातयः।।

卐 अभि क्रत्वेन्द्र भू.रध ज्म.न्न ते विव्य.ङ्महिमान॰ रजा॰सि। स्वेना हि वृत्र॰ शवसा जघन्थ न शत्रु रन्तँ विविद.द्युधा ते।। 41।। (विविद् द्वे च। 15।)

卐नमो राज्ञे नमो वरुणाय नमोऽश्वाय नमः प्रजापतये卐 नमो ऽधिपतये卐ऽधिपति रस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं卐 मा न्धेहि मयि धे卐ह्युपाऽऽकृताय स्वाहा卐ऽऽलब्धाय स्वाहा卐 हुताय स्वाहा।। 42।। (नम एकान्न त्रि॰शत्। 16।)

卐मयोभू र्वातो अभि वातूस्रा ऊर्जस्वती रोषधी.रा रिशन्ताम्। पीवस्वती र्जीवधन्याः पिब.न्त्ववसाय पद्वते रुद्र मृड।।

卐 या.स्सरूपा विरूपा एकरूपा यासा मग्नि रिष्ट्या नामानि वेद। या अङ्गिरस स्तपसेह चक्रु स्ताभ्यः पर्जन्य महि शर्म यच्छ।।

卐 या देवेषु तनुव मैरयन्त यासा॰ सोमो विश्वा रूपाणि वेद। ता अस्मभ्यं पयसा पिन्वमानाः प्रजावती रिन्द्र।। 43।। ❀ गोष्ठे रिरीहि।।

卐 प्रजापति र्मह्यमेता रराणो विश्वै र्देवैः पितृभि स्सँविदानः। शिवा स्सती रुप नो गोष्ठ माऽक स्तासाँ वयं प्रजया स॰ सदेम।।

卐 इह धृति स्स्वा卐हेह विधृति स्स्वा卐हेह रन्ति स्स्वा卐हेह रमति स्स्वाहा卐 मही मूषु[143]❀ 卐 सुत्रामाणम्[144]❀।। 44।। (इन्द्राष्टात्रि॰शच्च। 17।)

卐किꣳ स्विदासी त्पूर्वचित्तिः किꣳ स्विदासी द्बृहद्वयः। किꣳ स्विदासी त्पिशङ्गिला किꣳ स्विदासी त्पिलिप्पिला।।

卐 द्यौ रासी त्पूर्वचित्ति रश्व आसी.द्बृहद्वयः। रात्रि रासी त्पिशङ्गिलाऽवि रासी त्पिलिप्पिला।।

143

144

卐 कस्स्वि.देकाकी चरति कँ उ स्विज्जायते पुनः। किँ स्वि.द्धिमस्य भेषज.ङ्किँ स्विदावपनं महत्।।
卐 सूर्य एकाकी चरति।। 45।। ❀ चन्द्रमा जायते पुनः। अग्निर् हिमस्य भेषजं भूमि रावपनं महत्।।
卐 पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम्। पृच्छामि त्वा वृष्णो अश्वस्य रेतः
पृच्छामि वाचः परमँ व्योम।।
卐 वेदिमाहुः परमन्तं पृथिव्यै यज्ञमाहु र्भुवनस्य नाभिम्। सोममाहु र्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः
परमँ व्योम।। 46।। (सूर्य एकाकी चरति षड्चत्वारिँशच्च। 18।)
❀卐 अम्बे अम्बाल्यम्बिके न मा नयति कश्चन। ससस्त्यश्वकः।।
卐 सुभगे काम्पीलवासिनि सुवर्गे लोके सं प्रोर्ण्वाथाम्। आऽह मजानि गर्भध मा त्वमजासि गर्भधम्।।
卐 तौ सह चतुरः पद स्सं प्र सारयावहै।।
卐 वृषा वाँ रेतोधा रेतो दधा卐तूथ्सक्थ्यो र्गृद न्धेह्यञ्जि मुदञ्जि मन्वज। यस्स्त्रीणा.ञ्जीवभोजनो यँ
आसाम्।। 47।। ❀ बिलधावनः। प्रिय स्स्त्रीणा मपीच्यः। यँ आसा.ङ्कृष्णे लक्ष्मणि सर्दिगृदिं
परावधीत्।।
卐 अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः।।
卐 ऊर्ध्वामेना मुच्छ्रयता द्वेणुभार.ङ्गिराविव। अथास्यै मध्य मेधताँ शीते वाते पुनन्निव।।
卐 अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः।।
卐 यद्धरिणी यवमत्ति न।। 48।। ❀ पुष्टं पशु मन्यते। शूद्रा यदर्यजारा न पोषाय धनायति।।
卐 अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः।।
卐 इयँ यका शकुन्तिकाऽऽहल.मिति सर्पति। आहत.ङ्गभे पसो निजल्गुलीति धाणिका।।
卐 अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः।।
卐 माता च ते पिता च तेऽग्रँ वृक्षस्य रोहतः।।। 49।। ❀ प्रसुलामीति ते पिता गभे
मुष्टि.मतँसयत्।।
卐 दधिक्राव्ण्णो अकारिष.ञ्जिष्णो रश्वस्य वाजिनः। सुरभि नो मुखा करत्प्रण आयुँषि तारिषत्।।
卐 आपो हि ष्ठा मयोभुव स्ता न ऊर्जे दधातन। महे रणाय चक्षसे।।
卐 यो व श्शिवतमो रस-स्तस्य भाजयतेह नः। उशतीरिव मातरः।।

卐 तस्मा अर.ङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः।। 50।। (आसा मत्ति न रोहतो जिन्वथ चत्वारि च। 19।)

卐भूर्भुवस्सुव 卐 वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा 卐 रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसा 卐ऽऽदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा 卐 यद्वातो अपो अगम-दिन्द्रस्य तनुवं प्रियाम्। एतꣳ स्तोत रेतेन पथा पुन.रश्व.मा वर्तयासि नः।।

卐 लाजी '3' ञ्छाची '3' न् यशो ममाँ~ '4'। यव्यायै गव्याया एतद्देवा अन्न.मत्तैत.दन्नमद्धि प्रजापते।।

卐 युञ्जन्ति ब्रध्न मरुष.ञ्चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि।।

卐 युञ्जन्त्यस्य काम्या हरी~ विपक्षसा रथे। शोणा धृष्णू~ नृवाहसा।।

卐 केतु.ङ्कृण्व.न्नकेतवे पेशो मर्या अपेशसे। समुषद्भि रजायथाः।। 51।। (ब्रध्नं पञ्चविꣳशतिश्च। 20।)

卐प्राणाय स्वाहा 卐 व्यानाय स्वाहा卐ऽपानाय स्वाहा 卐 स्नावभ्य स्स्वाहा 卐 सन्तानेभ्य स्स्वाहा 卐 परिसन्तानेभ्य स्स्वाहा 卐 पर्वभ्य स्स्वाहा 卐 सन्धानेभ्य स्स्वाहा 卐 शरीरेभ्य स्स्वाहा 卐 यज्ञाय स्वाहा 卐 दक्षिणाभ्य स्स्वाहा 卐 सुवर्गाय स्वाहा 卐 लोकाय स्वाहा 卐 सर्वस्मै स्वाहा।। 52।। (प्राणायाष्टाविꣳशतिः। 21।)

卐सिताय स्वाहा卐ऽसिताय स्वाहा卐ऽभिहिताय स्वाहा卐ऽनभिहिताय स्वाहा 卐 युक्ताय स्वाहा卐ऽयुक्ताय स्वाहा 卐 सुयुक्ताय स्वा卐होद्युक्ताय स्वाहा 卐 विमुक्ताय स्वाहा 卐 प्रमुक्ताय स्वाहा 卐 वञ्चते स्वाहा 卐 परिवञ्चते स्वाहा 卐 सँवञ्चते स्वाहा 卐ऽनुवञ्चते स्वा卐होद्वञ्चते स्वाहा 卐 यते स्वाहा 卐 धावते स्वाहा 卐 तिष्ठते स्वाहा 卐 सर्वस्मै स्वाहा।। 53।। (सितायाष्टात्रिꣳशत्। 22।)

(बृहस्पति श्श्रद्यथा वा ऋक्षा वै प्रजापति र्येनयेन द्वे वावाऽऽदित्या वसिष्ठ स्सँवथ्सराय सुवर्गं ब्रह्मवादिनोऽतिरात्रो ज्योतिष्टोमं मेषः कूप्याभ्योऽद्भ्यो यो नमो मयोभूः किꣳ स्विदम्बे भूः प्राणाय सिताय द्वाविꣳशतिः। 22। बृहस्पतिः प्रति तिष्ठन्ति वै दशरात्रेण सुवर्गं यो अर्वन्तं भूस्त्रिपञ्चाशत्। 53। बृहस्पति स्सर्वस्मै स्वाहा।।)

**वै।का। 7 सात्रायण ब्राह्मणम् – 5 (दशानुवाकाः 10।)**

❀ गावो वा एतथ्सत्र मासताऽशृङ्गा स्सती- श्शृङ्गाणि नो जायन्ता इति, कामेन तासा न्दश मासा निषण्णा आस- न्नथ शृङ्गाण्यजायन्त- ता उदतिष्ठ न्नराथ्स्मे,त्यथ यासा न्नाजायन्त- ता.स्सँवथ्सर माप्त्वोदतिष्ठ न्नराथ्स्मेति, यासा.ञ्चाजायन्त- यासाञ्च न- ता उभयी रुदतिष्ठ न्नराथ्स्मेति, गोसत्रँ वै।। 1।। ❀ सँवथ्सरो, य एवँ विद्वाꣳस स्सँवथ्सर मुपय-न्त्यृध्नुवन्त्येव, तस्मात्तूपरा वार्षिकौ मासौ पर्त्वा चरति- सत्राभिजितꣳ ह्यस्यै, तस्मा थ्सँवथ्सरसदो यत्किञ्च गृहे क्रियते- तदाप्त मवरुद्ध मभिजित.ङ्क्रियते, समुद्रँ वा एते प्र प्लवन्ते- ये सँवथ्सर मुपयन्ति, यो वै समुद्रस्य पार.न्न पश्यति- न वै स तत उदेति, सँवथ्सरः।। 2।। ❀ वै समुद्र- स्तस्यैतत्पारँ यदतिरात्रौ, य एवँ विद्वाꣳस स्सँवथ्सर मुपय-न्त्यनार्ता एवोद्दच ङ्च्छ,न्तीयँ वै पूर्वोऽतिरात्रो-ऽसा.वुत्तरो, मनः पूर्वो- वागुत्तरः, प्राणः पूर्वो-ऽपान उत्तरः, प्ररोधनं पूर्व- उदयन मुत्तरो, ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति, ज्योतिरेव पुरस्ताद्दधते- सुवर्गस्य लोकस्यानुख्यात्यै, चतुर्विꣳशः प्रायणीयो भवति- चतुर्विꣳशति रर्धमासाः।। 3।। ❀ सँवथ्सरः, प्रयन्त एव सँवथ्सरे प्रति तिष्ठन्ति, तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीया- स्तावती स्सँवथ्सरस्य रात्रय- उभे~ एव सँवथ्सरस्य रूपे~ आप्नुवन्ति, ते सꣳस्थित्या अरिष्ट्या उत्तरै रहोभि श्चरन्ति, षडहा भवन्ति- षड्वा ऋतव स्सँवथ्सर- ऋतुष्वेव सँवथ्सरे प्रति तिष्ठन्ति, गौश्चाऽऽयुश्च मध्यत.स्स्तोमौ भवत- स्सँवथ्सरस्यैव तन्मिथुनं मध्यतः।। 4।। ❀ दधति प्रजननाय, ज्योति रभितो भवति- विमोचनमेव त-च्छन्दाꣳस्येव तद्विमोकँ य,न्त्यथो~ उभयतोज्योतिषैव षडहेन सुवर्गँ लोकँ यन्ति, ब्रह्मवादिनो वद-न्त्यासते केन यन्तीति- देवयानेन पथेति ब्रूया,च्छन्दाꣳसि देवयानः पन्था- गायत्री त्रिष्टुब्जगती, ज्योति.र्वै गायत्री- गौस्त्रिष्टु-गायु र्जगती, यदेते स्तोमा भवन्ति- देवयानेनैव।। 5।। ❀ तत्पथा यन्ति, समानꣳ साम भवति, देवलोको वै साम- देवलोका.देव न य,न्त्यन्याअन्या ऋचो भवन्ति- मनुष्यलोको वा ऋचो- मनुष्यलोका.देवान्यमन्य न्देवलोक मभ्यारोहन्तो य,न्त्यभिवर्तो ब्रह्मसामं भवति- सुवर्गस्य लोकस्याभिवृत्त्या, अभिजिद्भवति- सुवर्गस्य लोकस्याभिजित्यै, विश्वजिद्भवति- विश्वस्य जित्यै, मासिमासि पृष्ठा.न्युप यन्ति- मासिमा.स्यतिग्राह्या गृह्यन्ते- मासिमास्येव वीर्यं दधति- मासां प्रतिष्ठित्या, उपरिष्टा न्मासां पृष्ठा.न्युप यन्ति- तस्मा.दुपरिष्टा दोषधयः

फल.ङ्गृह्णन्ति।। 6।। (गोसत्रँ वा एति सँवथ्सरोऽर्धमासा मिथुनं मध्यतो देवयानेनैव वीर्य न्त्रयोदश च। 1।)

ॐ❀ गावो वा एतथ्सत्र मासताश्शृङ्गा स्सती श्शृङ्गाणि सिषासन्ती, स्तासा न्दश मासो निषण्णा आस-न्नथ शृङ्गाण्यजायन्त, ता अब्रुव- न्नराथ्स्मोत्तिष्ठामा-ऽव तङ्काम मरुथ्स्महि- येन कामेन न्यषदामेति, तासामु त्वा अब्रुव- न्नर्धा वा यावती.र्वा-ऽऽसामहा एवेमौ द्वादशौ मासौ- सँवथ्सरꣳ सम्पाद्योत्तिष्ठा.मेति, तासाम्।। 7।। ❀ द्वादशे मासि शृङ्गाणि प्रावर्तन्त, श्रद्धया वा,ऽश्रद्धया वा- ता इमा- यास्तूपरा, उभय्यो वाव ता आर्ध्नुवन्- याश्च शृङ्गाण्यसन्वन्- याश्चोर्ज मवारुन्ध,तर्ध्नोति दशसु मा,सूत्तिष्ठ न्नृध्नोति द्वादशसु य एवँ वेद, पदेन खलु वै एते यन्ति- विन्दति खलु वै पदेन य,न्तद्वा एतदृद्ध मयन- न्तस्मा देत.द्गोसनि।। 8।। (तिष्ठामेति तासा न्तस्माद्द्वे च। 2।)

ॐ❀ प्रथमे मासि पृष्ठा.न्युप यन्ति- मध्यम उप य-न्त्युत्तम उप यन्ति, तदाहु- याँ वै त्रि.रेकस्याह्न उपसीदन्ति- दहँ वै साऽपराभ्या न्दोहाभ्या न्दुहे-ऽथ कुत.स्सा धोक्ष्यते- या न्द्वादश कृत्व उपसीदन्तीति, सँवथ्सरꣳ सम्पा.द्योत्तमे मासि सकृ.त्पृष्ठा.न्युपेयु-स्तद्यजमाना यज्ञं पशू नव रुन्धते, समुद्रँ वै।। 9।। ❀ एतेऽनवार.मपारं प्र प्लवन्ते- ये सँवथ्सर मुपयन्ति, यद्बृहद्रथन्तरे~ अन्वर्जेयु- र्यथा मध्ये समुद्रस्य प्लव मन्वर्जेयु- स्तादृक्त,दनुथ्सर्गं बृहद्रथन्तराभ्या.मित्वा प्रतिष्ठा.ङ्गच्छन्ति, सर्वेभ्यो वै कामेभ्य स्सन्धि.र्दुहे- तद्यजमाना.स्सर्वा न्कामा.नव रुन्धते।। 10।। (समुद्रँ वै चतुस्त्रिꣳशच्च। 3।)

ॐ❀ समान्य ऋचो भवन्ति- मनुष्यलोको वा ऋचो- मनुष्यलोकादेव न य,न्त्यन्यदन्यथ्साम भवति- देवलोको वै साम- देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति, जगती.मग्र उप यन्ति- जगतीँ वै छन्दाꣳसि प्रत्यवरोह,न्त्याग्रयण.ङ्ग्रहा- बृहत्पृष्ठानि- त्रयस्त्रिꣳशꣳ स्तोमा-स्तस्माज्ज्यायाꣳस.ङ्कनीया न्प्रत्यवरोहति, वैश्वकर्मणो गृह्यते- विश्वान्येव तेन कर्माणि यजमाना अव रुन्धते, आदित्यः।। 11।। ❀ गृह्यते- इयँ वा अदिति- रस्यामेव प्रति तिष्ठ,न्त्यन्योऽन्यो गृह्येते~ मिथुनत्वाय- प्रजात्या, अवान्तरँ वै दशरात्रेण प्रजापतिः प्रजा असृजत, यद्दशरात्रो भवति- प्रजा एव तद्यजमाना स्सृजन्ते, एताꣳ ह वा उदङ्क श्शौल्बायन स्सत्रस्यर्द्धि मुवाच- यद्दशरात्रो, यद्दशरात्रो भवति- सत्रस्यर्द्ध्या, अथो~ यदेव पूर्वेष्वहस्सु विलोम क्रियते- तस्यैवैषा शान्तिः।। 12।। (आदित्य स्तस्यैव द्वे च। 4।)

❀ यदि सोमौ सꣳसुतौ स्यातां- महति रात्रियै प्रातरनुवाक मुपाऽऽकुर्या,त्पूर्वो वाचं- पूर्वो देवता॰- पूर्व श्छन्दाꣳसि वृङ्क्ते, वृषण्वतीं प्रतिपद.ङ्कुर्या-त्प्रातस्सवना देवैषामिन्द्रँ वृङ्क्ते-ऽथो~ खल्वाहु, स्सवनमुखे.सवनमुखे कार्येति- सवनमुखाथ्सवनमुखा देवैषा.मिन्द्रँ वृङ्क्ते, 卐 सँवेशायोपवेशाय-गायत्रिया-- 卐 --स्त्रिष्टुभो-- 卐--जगत्यौ-- 卐--अनुष्टुभ॰-- 卐--पङ्क्त्यौ--अभिभूत्यै स्वाहा-, छन्दाꣳसि वै सँवेशे उपवेश-श्छन्दोभि रेवैषाम्।। 13।। ❀ छन्दाꣳसि वृङ्क्ते, सजनीयꣳ शस्यँ- विहव्यꣳ शस्य-मगस्त्यस्य कयाशुभीयꣳ शस्य,मेतावद्वा अस्ति- यावदेत-द्यावदेवास्ति- तदेषाँ वृङ्क्ते, यदि प्रातस्सवने कलशो दीर्येत- वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन्, यद्वै यज्ञस्यातिरिच्यते- विष्णु न्तच्छिपिविष्ट मभ्यति रिच्यते, तद्विष्णु श्शिपिविष्टोऽतिरिक्त एवातिरिक्त न्दधा-त्यथो~ अतिरिक्तेनैवातिरिक्त माप्त्वाऽव रुन्धते, यदि मध्यन्दिने दीर्येत- वषड्कारनिधनꣳ साम कुर्यु,र्वषड्कारो वै यज्ञस्य प्रतिष्ठा - प्रतिष्ठा मेवैन.द्गमयन्ति- यदि तृतीयसवने- एतदेव।। 14।। (छन्दोभि रेवैषा मवैकान्न विꣳशतिश्च। 5।)

❀ षडहै र्मासा न्थ्सम्पाद्याह रुत्सृजन्ति- षडहैर्हि मासा न्थ्सम्पश्य,न्त्यर्धमासै र्मासान्थ्सम्पाद्याह रुथ्सृज-न्त्यर्धमासैर्हि मासा न्थ्सम्पश्य,न्त्यमावास्यया मासान्थ्सम्पाद्याह रुथ्सृज-न्त्यमावास्यया हि मासा न्थ्सम्पश्यन्ति, पौर्णमास्या मासा.न्थ्सम्पाद्याह रुथ्सृजन्ति- पौर्णमास्या हि मासा न्थ्सम्पश्यन्ति, यो वै पूर्ण आसिञ्चति- परा स सिञ्चति, य॰ पूर्णा दुदचति-।। 15।। ❀ प्राण मस्मि'2'न्थ्स दधाति, यत्पौर्णमास्या मासान्थ्सम्पाद्याह रुथ्सृजन्ति- सँवथ्सरायैव तत्प्राण न्दधति-तदनु सत्रिण॰ प्राणन्ति, यदह.र्नोथ्सृजेयु- र्यथा दृति रुपनद्धो विपत-त्येवꣳ सँवथ्सरो वि पते- दार्ति मार्च्छेयु,र्यत्पौर्णमास्या मासा न्थ्सम्पाद्याह.रुथ्सृजन्ति- सँवथ्सरायैव तदुदान न्दधति- तदनु सत्रिण उत्।। 16।। ❀ अनन्ति- नाऽऽर्ति मार्च्छन्ति, पूर्णमासे वै देवानाꣳ सुतो- यत्पौर्णमास्या मासा न्थ्सम्पाद्याह रुथ्सृजन्ति- देवानामेव तद्यज्ञेन यज्ञं प्रत्यवरोहन्ति, वि वा एतद्यज्ञ.ञ्छिन्दन्ति-यथ्षडहसन्ततꣳ सन्त- मथाह रुथ्सृजन्ति, प्राजापत्यं पशु मालभन्ते- प्रजापति स्सर्वा देवता -देवताभिरेव यज्ञꣳ सन्तन्वन्ति, यन्ति वा एते सवना-द्येऽहः।। 17।। ❀ उथ्सृजन्ति, तुरीय.ङ्खलु वा एतथ्सवनँ- यथ्सान्नाय्यँ, यथ्सान्नाय्यं भवति- तेनैव सवना.न्न यन्ति, समुपहूय भक्षय,न्त्येतथ्सोमपीथा ह्येतर्हि, यथाऽऽयतनँ वा एतेषाꣳ सवनभाजो देवता गच्छन्ति- येऽह रुथ्सृज,न्त्यनुसवनं पुरोडाशा.न्निर्वपन्ति- यथाऽऽयतनादेव सवनभाजो देवता अवरुन्धते,ऽष्टाकपाला न्प्रातस्सवने -एकादशकपाला न्माध्यन्दिने सवने- द्वादशकपालाꣳ स्तृतीयसवने,- छन्दाꣳस्येवाऽऽप्त्वाऽव रुन्धते,

वैश्वदेव.ञ्चरु न्तृतीयसवने निर्वपन्ति- वैश्वदेवँ वै तृतीयसवन- न्तेनैव तृतीयसवना.न्न यन्ति।। 18।।
(उदचत्युद्येऽह राप्त्वा पञ्चदश च। 6।)

❀ उथ्सृज्या '3' न्नोथ्सृज्या '3' मिति मीमाꣳसन्ते, ब्रह्मवादिन स्तद्वाहु- रुथ्सृज्य मेवे,त्यमावास्यायाञ्च पौर्णमास्याञ्चोथ्सृज्य मित्याहु- रेते~ हि यज्ञँ वहत इति, ते~ त्वाव नोथ्सृज्ये~ इत्याहु- ये~ अवान्तरँ यज्ञं भेजाते~ इति, या प्रथमा व्यष्टका- तस्या मुथ्सृज्य मित्याहु,रेषे वै मासो विशरि इति- नाऽऽदिष्टम्।। 19।। ❀ उथ्सृजेयु,र्यदादिष्ट मुत्सृजेयु- र्यादृशे पुनꣳ पर्याप्लावे मध्ये षडहस्य सम्पद्येत- षडहै र्मासा न्थ्सम्पाद्य-यथ्सप्तम मह- स्तस्मि न्नुथ्सृजेयु, स्तदग्नये वसुमते पुरोडाश मष्टाकपाल न्निर्वपेयु- रैन्द्र न्द-धीन्द्राय मरुत्वते पुरोडाश मेकादशकपालँ- वैश्वदेव न्द्वादशकपाल,मग्ने र्वै वसुमतꣳ प्रातस्सवनँ- यदग्नये वसुमते पुरोडाश मष्टाकपाल न्निर्वपन्ति- देवतामेव तद्भागिनी ङ्कुर्वन्ति- ।। 20।। ❀ सवन मष्टाभि.रुप यन्ति, यदैन्द्र न्दधि भव-तीन्द्रमेव तद्भागधेयान्न च्यावय,न्तीन्द्रस्य वै मरुत्वतो माध्यन्दिनꣳ सवनँ- यदिन्द्राय मरुत्वते पुरोडाश मेकादशकपाल न्निर्वपन्ति- देवतामेव तद्भागिनी.ङ्कुर्वन्ति- सवन मेकादशभि रुप यन्ति, विश्वेषाँ वै देवाना मृभुमता न्तृतीयसवनँ- यद्वैश्वदेव न्द्वादशकपाल न्निर्वपन्ति- देवता एव तद्भागिनीꣳ कुर्वन्ति- सवन न्द्वादशभिः।। 21।। ❀ उप यन्ति, प्राजापत्यं पशु मा लभन्ते- यज्ञो वै प्रजापति- र्यज्ञस्याननुसर्गाया,-ऽभिवर्त इत ष्षण्मासो ब्रह्मसामं भवति, ब्रह्म वा अभिवर्तो- ब्रह्मणैव तथ्सुवर्गँ लोक मभिवर्तयन्तो यन्ति, प्रतिकूलमिव हीत.स्सुवर्गो लोकः ꠱इन्द्र क्रतुन्न आ भर पिता पुत्रेभ्यो यथा। शिक्षा नो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमही-त्यमुत आयताꣳ षण्मासो - ब्रह्मसामं भव,त्ययँ वै लोको ज्योतिꣳ- प्रजा ज्योति- रिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति।। 22।। (नाऽऽदिष्ट ङ्कुर्वन्ति द्वादशभिरिति विꣳशतिश्च। 7।)

❀ देवानाँ वा अन्त.ङ्गमुषा मिन्द्रियँ वीर्य मपाक्राम- त्तत्क्रोशेनावारुन्धत- तत्क्रोशस्य क्रोशत्वँ, यत्क्रोशेन चात्वालस्यान्ते स्तुवन्ति- यज्ञस्यैवान्त.ङ्गत्वेन्द्रियँ वीर्य मव रुन्धते, सत्रस्यर्द्ध्या ऽऽहवनीयस्यान्ते स्तुव-न्त्यग्नि मेवोपद्रष्टार.ङ्कृत्वर्द्धि मुप यन्ति, प्रजापतेर्हृदयेन हविर्धानेऽन्त स्तुवन्ति- प्रेमाण मेवास्य गच्छन्ति, श्लोकेन पुरस्ता.थ्सदसः।। 23।। ❀ स्तुव-न्त्यनुश्लोकेन पश्चा- द्यज्ञस्यैवान्त.ङ्गत्वा श्लोकभाजो भवन्ति, नवभि रध्वर्यु रुद्गायति - नव वै पुरुषे प्राणाꣳ- प्राणानेव यजमानेषु दधाति, सर्वा ऐन्द्रियो भवन्ति- प्राणेष्वेवेन्द्रिय न्दध,त्यप्रतिहृताभि रुद्गायति- तस्मात्पुरुष

स्सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यचति- शिर एव न, पञ्चदश॰ रथन्तरं भव-तीन्द्रिय मेवाव रुन्धते, सप्तदशम्।। 24।।❀ बृह दन्नाद्यस्यावरुद्ध्यै- अथो~ प्रैव तेन जायन्ते- एकवि॰शं भद्र- न्द्विपदासु प्रतिष्ठित्यै, पत्नय उप गायन्ति मिथुनत्वाय- प्रजात्यै, प्रजापतिः प्रजा असृजत- सोऽकामयताऽऽसा मह॰ राज्यं परीयामिति, तासा॰ राजनेनैव राज्यं पर्यै- त्तद्राजनस्य राजनत्वँ, यद्राजनं भवति- प्रजानामेव तद्यजमाना राज्यं परि यन्ति, पञ्चवि॰शं भवति- प्रजापतेः।। 25।।❀ आप्त्यै, पञ्चभि स्तिष्ठन्त.स्स्तुवन्ति- देवलोक. मेवाभि जयन्ति, पञ्चभि रासीना- मनुष्यलोक मेवाभि जयन्ति, दश सं पद्यन्ते- दशाक्षरा विरा-डन्नँ विरा-ड्विराजैवान्नाद्य मव रुन्धते, पञ्चधा विनिषद्य स्तुवन्ति- पञ्च दिशो- दिक्ष्वेव प्रति तिष्ठ,न्त्येकैकयाऽस्तुतया समायन्ति- दिग्भ्य एवान्नाद्य॰ सं भरन्ति, ताभि रुद्गातोद्गायति- दिग्भ्य एवान्नाद्यम्।। 26।।❀ सम्भृत्य- तेज आत्म न्दधते- तस्मादेकः प्राण स्सर्वा.ण्यङ्गान्यव,त्यथो~ यथा सुपर्ण उत्पतिष्य-न्छिर उत्तम.ङ्कुरुते- एवमेव तद्यजमानाः प्रजाना मुत्तमा भव,न्त्यासन्दी मुद्गाताऽऽरोहति- साम्राज्यमेव गच्छन्ति, प्लेङ्ख॰ होता- नाकस्यैव पृष्ठ॰ रोहन्ति, कूर्चावध्वर्यु- र्ब्रध्नस्यैव विष्टप.ङ्गच्छ,न्त्येतावन्तो वै देवलोका- स्तेष्वेव यथापूर्वं प्रति तिष्ठ,न्त्यथो~ आक्रमणमेव तथ्सेतुँ यजमानाः कुर्वते- सुवर्गस्य लोकस्य समष्ट्यै।। 27।। (सदस स्सप्तदशं प्रजापते र्गायति दिग्भ्य एवान्नाद्यं प्रत्येकादश च। 8।)

❀ अर्क्येण वै सहस्रशः प्रजापतिः प्रजा असृजत- ताभ्य इलान्देनेराँ लूतामवारुन्ध, यदर्क्यं भवति- प्रजा एव तद्यजमाना स्सृजन्ते, इलान्दं भवति- प्रजाभ्य एव सृष्टाभ्य इराँ लूता मव रुन्धते, तस्माद्या॰ समा॰ सत्र॰ समृद्ध.ङ्क्षोधुका- स्ता॰ समां प्रजा- इष॰ ह्यासा मूर्ज माददते, या॰ समाँ व्यृद्ध- मक्षोधुका.स्ता॰ समां प्रजाः।। 28।।❀ न- ह्यासा मिषमूर्ज माददते, उत्क्रोद.ङ्कुर्वते- यथा बन्धा.न्मुमुचाना उत्क्रोद.ङ्कुर्वत -एव.मेव तद्यजमाना देवबन्धा न्मुमुचाना उत्क्रोद.ङ्कुर्वते- इष मूर्ज मात्म न्दधाना, वाण श्शततन्तु र्भवति- शताऽऽयुः पुरुष श्शतेन्द्रिये- आयुष्येवेन्द्रिये प्रति तिष्ठ,न्त्याजि न्धाव- न्त्यनभिजितस्याभिजित्यै, दुन्दुभी न्थ्समाघ्नन्ति- परमा वा एषा वा-ग्या दुन्दुभौ- परमामेव।। 29।।❀ वाचमव रुन्धते, भूमिदुन्दुभिमा घ्नन्ति- यैवेमाँ वाक्प्रविष्टा- तामेवाव रुन्धते- ऽथो~ इमामेव जयन्ति, सर्वा वाचो वदन्ति- सर्वासाँ वाचा मवरुद्ध्यै, आर्द्रे चर्म.न्व्यायच्छेते~ इन्द्रियस्यावरुद्ध्यै, आऽन्यः क्रोशति- प्रान्य श्श॰सति, य आक्रोशति- पुनात्येवैना,न्थ्स यः प्रश॰सति- पूतेष्वेवान्नाद्य न्दधा,त्यृषिकृतञ्च।। 30।।❀ वा एते देवकृतञ्च पूर्वै र्मासै रव रुन्धते-

यद्भूतेच्छदा॰ सामानि भव-न्त्युभयस्यावरुद्ध्यै, यन्ति वा एते मिथुना-द्ये सँवथ्सर मुपय,न्त्यन्तर्वेदि मिथुनौ सं भवत- स्तेनैव मिथुना.न्न यन्ति।। 31।। (व्यृद्ध मक्षोधुकास्ता॰ समां प्रजा॰ परमामेव च त्रि॰शच्च। 9।)

❀ चर्माव भिन्दन्ति- पाप्मान मेवैषामव भिन्दन्ति, ꠲मा॒ऽप राथ्सी- र्माति व्याथ्सी-रित्याह सम्प्रत्येवैषां पाप्मानमव भिन्द,न्त्युदकुम्भा नधिनिधाय- दास्यो मार्जालीयं परि नृत्यन्ति- पदो निघ्नती ꠲रिदंमधु-- ङ्गायन्त्यो, मधु वै देवानां परम मन्नाद्यं- परम मेवान्नाद्य मव रुन्धते, पदो नि घ्नन्ति- महीयामेवैषु दधति।। 32।। (चर्मैकान्न पञ्चाशत्। 10।)

**वै।का। 13 अश्वमेध मन्त्राः – 5 (त्रयोऽनुवाकाः 3।)**

❀꠲पृथिव्यै स्वा꠲हाऽन्तरिक्षाय स्वाहा ꠲ दिवे स्वाहा ꠲ सम्प्लोष्यते स्वाहा ꠲ सम्प्लवमानाय स्वाहा ꠲ सम्प्लुताय स्वाहा ꠲ मेघायिष्यते स्वाहा ꠲ मेघायते स्वाहा ꠲ मेघिताय स्वाहा ꠲ मेघाय स्वाहा ꠲ नीहाराय स्वाहा ꠲ निहाकायै स्वाहा ꠲ प्रासचाय स्वाहा ꠲ प्रचलाकायै स्वाहा ꠲ विद्योतिष्यते स्वाहा ꠲ विद्योतमानाय स्वाहा ꠲ सँविद्योतमानाय स्वाहा ꠲ स्तनयिष्यते स्वाहा ꠲ स्तनयते स्वा꠲होग्रꣳ स्तनयते स्वाहा ꠲ वर्षिष्यते स्वाहा ꠲ वर्षते स्वाहा꠲ऽभिवर्षते स्वाहा ꠲ परिवर्षते स्वाहा ꠲ सँवर्षते।। 33।।❀ स्वाहा ꠲ऽनुवर्षते स्वाहा ꠲ शीकायिष्यते स्वाहा ꠲ शीकायते स्वाहा ꠲ शीकिताय स्वाहा ꠲ प्रोषिष्यते स्वाहा ꠲ प्रुष्णते स्वाहा ꠲ परिप्रुष्णते स्वा꠲होद्ग्रहीष्यते स्वा꠲होद्गृह्णते स्वा꠲होद्गृहीताय स्वाहा ꠲ विप्लोष्यते स्वाहा ꠲ विप्लवमानाय स्वाहा ꠲ विप्लुताय स्वाहा ꠲ऽऽतप्स्यते स्वाहा꠲ऽऽतपते स्वा꠲होग्र मातपते स्वा꠲हर्ग्भ्य स्स्वाहा ꠲ यजुर्भ्य स्स्वाहा ꠲ सामभ्य स्स्वाहा꠲ऽङ्गिरोभ्य स्स्वाहा ꠲ वेदेभ्य स्स्वाहा ꠲ गाथाभ्य स्स्वाहा ꠲ नाराश॰सीभ्य स्स्वाहा ꠲ रैभीभ्य स्स्वाहा ꠲ सर्वस्मै स्वाहा।। 34।। (सँवर्षते रैभीभ्य स्स्वाहा द्वे च। 11।)

❀꠲दत्वते स्वाहा꠲ऽदन्तकाय स्वाहा ꠲ प्राणिने स्वाहा꠲ऽप्राणाय स्वाहा ꠲ मुखवते स्वाहा ꠲ऽमुखाय स्वाहा ꠲ नासिकवते स्वाहा ꠲ऽनासिकाय स्वाहा꠲ऽक्षण्वते स्वाहा ꠲ऽनक्षिकाय स्वाहा ꠲ कर्णिने स्वाहा꠲ऽकर्णकाय स्वाहा ꠲ शीर्षण्वते स्वाहा꠲ऽशीर्षकाय स्वाहा ꠲ पद्वते स्वाहा ꠲ऽपादकाय स्वाहा ꠲ प्राणते स्वाहा ꠲ऽप्राणते स्वाहा ꠲ वदते स्वाहा ꠲ऽवदते स्वाहा ꠲ पश्यते स्वाहा꠲ऽपश्यते स्वाहा ꠲ शृण्वते स्वाहा꠲ऽशृण्वते स्वाहा ꠲ मनस्विने स्वाहा।। 35।। ❀꠲अमनसे स्वाहा ꠲ रेतस्विने स्वाहा꠲ऽरेतस्काय स्वाहा ꠲ प्रजाभ्य स्स्वाहा ꠲ प्रजननाय स्वाहा ꠲ लोमवते

स्वाहाऽलोमकाय स्वाहा त्वचे स्वाहाऽत्वक्काय स्वाहा चर्मण्वते स्वाहा ऽचर्मकाय स्वाहा लोहितवते स्वाहा ऽलोहिताय स्वाहा मा॒ꣳसन्वते स्वाहाऽमा॒ꣳसकाय स्वाहा स्नावभ्य स्स्वाहा ऽस्नावकाय स्वाहाऽस्थन्वते स्वाहाऽनस्थिकाय स्वाहा मज्जन्वते स्वाहा ऽमज्जकाय स्वाहा ऽङ्गिने स्वाहा ऽनङ्गाय स्वाहा ऽऽत्मने स्वाहाऽनात्मने स्वाहा सर्वस्मै स्वाहा।। 36।। (मनस्विने स्वाहाऽनात्मने स्वाहा द्वे च। 12।)

कस्त्वा युनक्ति- स त्वा युनक्तु- विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्ध्यै मह्य॒ꣳ सन्नत्या अमुष्मै कामायाऽऽयुषे त्वा- प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा- व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा।। 37।। (कोऽष्टात्रि॒ꣳशत्।13।)

**वै।का। 13 अश्वमेध ब्राह्मणम् – 7 (द्वावनुवाकौ 2।)**

अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायाष्टाकपाल- इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालो- विश्वेभ्यो देवेभ्यो जागतेभ्य स्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो- मित्रावरुणाभ्या मानुष्टुभाभ्या मेकवि॒ꣳशाभ्याँ वैराजाभ्या॒ꣳ शारदाभ्यां पयस्या- बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्कराय हैमन्तिकाय चरु- स्सवित्र आतिच्छन्दसाय त्रयस्त्रि॒ꣳशाय रैवताय शैशिराय द्वादशकपालो-ऽदित्यै विष्णुपत्न्यै चरु-रग्नये वैश्वानराय द्वादशकपालो-ऽनुमत्यै चरुः- काय एककपालः।। 38।। (अग्नयेऽदित्या अनुमत्यै सप्तचत्वारि॒ꣳशत्। 14।)

यो वा अग्ना.वग्निः प्रह्रियते- यश्च सोमो राजा- तयोरेष आतिथ्यँ- यदग्नीषोमीयो,ऽथैष रुद्रो यश्चीयते, यथ्सञ्चितेऽग्ना.वेतानि हवी॒ꣳषि न निर्वपे- देष एव रुद्रोऽशान्त उपोत्थाय प्रजां पशून् यजमानस्याभि मन्येत, यथ्सञ्चितेऽग्ना.वेतानि हवी॒ꣳषि निर्वपति- भागधेयेनैवैन॒ꣳ शमयति- नास्य रुद्रोऽशान्तः।। 39।। उपोत्थाय प्रजां पशूनभि मन्यते, दश हवी॒ꣳषि भवन्ति- नव वै पुरुषे प्राणा- नाभि र्दशमी- प्राणानेव यजमाने दधा,त्यथो~ दशाक्षरा विरा-डन्नँ विरा-ड्विराज्येवान्नाद्ये प्रति तिष्ठ,त्यृतुभि र्वा एष छन्दोभि स्स्तोमैः पृष्ठै श्चेतव्य इत्याहु,र्यदेतानि हवी॒ꣳषि निर्वप- त्यृतुभिरेवैन ञ्छन्दोभि स्स्तोमैः पृष्ठै श्चिनुते, दिश स्सुषुवाणेन।। 40।। अभिजित्या इत्याहु- र्यदेतानि हवी॒ꣳषि निर्वपति- दिशा.मभिजित्या, एतया वा इन्द्र न्देवा अयाजय- न्तस्मा.दिन्द्रसव, एतया मनुं मनुष्या- स्तस्मान्मनुसवो, यथेन्द्रो देवानाँ- यथा मनु र्मनुष्याणा- मेवं भवति य एवँ विद्वा नेतयेष्ट्या यजते,

दिग्वती॰ पुरोऽनुवाक्या भवन्ति- सर्वासा न्दिशा मभिजित्यै।। 41।। (अशान्त स्सुषुवाणेनैकचत्वारि॑॰शच्च। 15।)

**वै।का। 13 अश्वमेध मन्त्राः – 6 (पञ्चानुवाकाः 5।)**

卐य॰ प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपद श्चतुष्पद॰ कस्मै देवाय हविषा विधेम।।

卐 उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि 卐 तस्य ते द्यौर्महिमा- नक्षत्राणि रूप- मादित्यस्ते तेज- स्तस्मै त्वा महिम्ने प्रजापतये स्वाहा।। 42।। (य॰ प्राणतो द्यौरादित्यो ऽष्टात्रि॑॰शत्। 16।)

卐य आत्मदा बलदा यस्य विश्व उपाऽऽसते प्रशिषँ यस्य देवाः। यस्य छायाऽमृतँ यस्य मृत्यु॰ कस्मै देवाय हविषा विधेम।।

卐 उपयामगृहीतोऽसि प्रजापतये त्वा जुष्ट गृह्णामि 卐 तस्य ते पृथिवी महि-मौषधयो वनस्पतयो रूप- मग्निस्ते तेज-स्तस्मै त्वा महिम्ने प्रजापतये स्वाहा।। 43।। (य आत्मदा॰ पृथिव्यग्नि रेकान्न चत्वारि॑॰शत्। 17।)

卐आ- ब्रह्म न्ब्राह्मणो ब्रह्मवर्चसी- जायता 卐माऽस्मिन्राष्ट्रे राजन्य इषव्य श्शूरो महारथो जायता 卐 --न्दोग्ध्री धेनु- 卐--र्वोढाऽनड्वा- 卐--नाशु स्सप्ति॰- 卐--पुरन्धि र्योषा- 卐--जिष्णू रथेष्ठा- 卐-- स्सभेयो युवा- 卐ऽऽस्य यजमानस्य वीरो- जायता 卐 न्निकामे.निकामे न॰ पर्जन्यो वर्षतु 卐 फलिन्यो न ओषधय॰ पच्यन्ताँ 卐 योगक्षेमो न॰ कल्पताम्।। 44।। (आब्रह्म न्नेकचत्वारि॑॰शत्। 18।)

卐आऽक्रान् वाजी पृथिवी- मग्निँ युज मकृत वाज्यर्वा 卐ऽऽक्रान् वाज्यन्तरिक्षँ- वायुँ युज मकृत वाज्यर्वा 卐 द्याँ वाज्याऽक्रँ॰स्त- सूर्यँ युज मकृत वाज्यर्वा卐ऽग्नि स्ते वाजिन् युङ्ङ्नु त्वाऽऽरभे स्वस्ति मा सं पारय 卐 वायुस्ते वाजिन् युङ्ङ्नु त्वाऽऽरभे स्वस्ति मा सम्।। 45।। पारया 卐ऽऽदित्यस्ते वाजिन् युङ्ङ्नु त्वाऽऽरभे स्वस्ति मा सं पारय 卐 प्राणधृगसि प्राणं मे दृ॰ह 卐 व्यानधृगसि व्यानं मे दृ॰हा 卐ऽपानधृगस्यपानं मे दृ॰ह 卐 चक्षुरसि चक्षु र्मयि धेहि 卐 श्रोत्रमसि श्रोत्रं मयि धे卐ह्यायु रस्यायु र्मयि धेहि।। 46।। (वायुस्ते वाजिन् युङ्ङ्नु त्वाऽऽरभे स्वस्ति मा सन्त्रिचत्वारि॑॰शच्च। 19।)

卐जङ्घि बीजँ 卐वर्षा पर्जन्य॰ 卐 पक्ता सस्य॰ 卐 सुपिप्पला ओषधय 卐 स्स्वधिचरणेऽय॰ 卐 सूपसदनोऽग्नि 卐 स्स्वध्यक्ष मन्तरिक्ष॰ 卐 सुपाव॰ पवमान 卐 स्सूपस्थाना द्यौ 卐 श्शिव.मसौ तपन् 卐

यथापूर्वं महोरात्रे ॥ पञ्चदशिनोऽर्धमासा॥स्त्रि॰शिनो मासाः ॥ क्लृप्ता ऋतव ॥ श्शान्त स्सँवथ्सरः।। 47।। (जङ्घेकत्रि॰शत्। 20।)

**वै।का। 13 अश्वमेध ब्राह्मणम् – 8 (द्वावनुवाकौ 2।)**

आग्नेयोऽष्टाकपाल- स्सौम्य श्चरु- स्सावित्रोऽष्टाकपालः- पौष्ण श्चरू- रौद्र श्चरु- रग्नये वैश्वानराय द्वादशकपालो मृगाऽऽखरे यदि नाऽऽगच्छे-दग्नये॰होमुचेऽष्टाकपाल- स्सौर्यं पयो- वायव्य आज्यभागः ।। 48।। (आग्नेयश्चतुर्वि॰शतिः। 21।)

अग्नये॰होमुचेऽष्टाकपाले- इन्द्राया॰होमुच एकादशकपालो- मित्रावरुणाभ्या मागोमुग्भ्यां पयस्या- वायोसावित्रे आगोमुग्भ्या॰श्चरु- रश्विभ्या मागोमुग्भ्या न्धानो- मरुद्भ्य एनोमुग्भ्य स्सप्तकपालो- विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालो-ऽनुमत्यै चरु-रग्नये वैश्वानराय द्वादशकपालो- द्यावापृथिवीभ्या म॰होमुग्भ्या न्द्विकपालः।। 49।। ( अग्नये॰होमुचेऽनुमत्यै द्यावापृथिवीभ्या न्त्रि॰शत्। 22।)

**वै।का। 13 अश्वमेध मन्त्राः – 7 (द्वावनुवाकौ 2।।)**

॥ अग्नये समनम- त्पृथिव्यै समनम- द्यथाऽग्निः पृथिव्या- समनम-देवं मह्यं भद्रा स्सन्नतय स्सन्नमन्तु, ॥वायवे समनम- दन्तरिक्षाय समनम- द्यथा वायु रन्तरिक्षेण,- ॥सूर्याय समनम- द्दिवे समनम- द्यथा सूर्यो दिवा,- ॥चन्द्रमसे समनम- न्नक्षत्रेभ्य स्समनम- द्यथा चन्द्रमा नक्षत्रै,- ॥वरुणाय समनम- दद्भ्य स्समनम- द्यथा।। 50।। वरुणोऽद्भि,- ॥स्साम्ने समनम- दृचे समनम- द्यथा सामर्चा,- ॥ब्रह्मणे समनम- त्क्षत्राय समनम- द्यथा ब्रह्म क्षत्रेण,- ॥राज्ञे समनम- द्विशे समनम- द्यथा राजा विशा,- ॥रथाय समनम- दश्वेभ्य स्समनम- द्यथा रथोऽश्वैः,- ॥प्रजापतये समनम- द्भूतेभ्य स्समनम- द्यथा प्रजापति र्भूतै-स्समनम-देवं मह्यं भद्रा स्सन्नतय स्सन्नमन्तु।। 51।। (अद्भ्य स्समनम द्यथा मह्य श्चत्वारि च। 23।)

॥ये ते पन्थान स्सवितः पूर्व्यासोऽरेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभि स्सुगेभी रक्षा च नो अधि च देव ब्रूहि।।

॥ नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि ॥ नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि ॥ नम स्सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि।। 52।। (ये चतुश्चत्वारि॰शत्। 24।)

❀ यो वा अश्वस्य मेध्यस्य शिरो वेद- शीर्षण्वा न्मेध्यो भव,त्युषा वा अश्वस्य मेध्यस्य शिर-स्सूर्य.श्चक्षु- र्वातः प्राण- श्चन्द्रमा श्श्रोत्र- न्दिशः पादा-अवान्तरदिशाः पर्शवो-ऽहोरात्रे निमेषो-ऽर्धमासाः पर्वाणि- मासा स्सन्धाना-न्यृतवोऽङ्गानि- सँवथ्सर आत्मा- रश्मयः केशा- नक्षत्राणि रूप-न्तारका अस्थानि- नभो माꣳसा-न्योषधयो लोमानि- वनस्पतयो वाला- अग्नि.र्मुखँ- वैश्वानरो व्यात्तम्-।। 53।।❀ समुद्र उदर- मन्तरिक्षं पायु- र्द्यावापृथिवी~ आण्डौ- ग्रावा शेप- स्सोमो रेतो, यज्जञ्जभ्यते- तद्वि द्योतते, यद्विधूनुते- तथ्स्तनयति, यन्मेहति- तद्वर्षति, वागेवास्य वा,गह.वा अश्वस्य जायमानस्य महिमा पुरस्ता.ज्जायते, रात्रिरेनं महिमा पश्चादनु जायते, एतौ वै महिमाना.वश्व.मभित.स्सं बभूवतुर्, हयो देवा नवह- दर्वाऽसुरान्- वाजी गन्धर्वा- नश्वो मनुष्या-न्थ्समुद्रो वा अश्वस्य योनि-स्समुद्रो बन्धुः।। 54।। (व्यात्त मवह द्वादश च। 25।)

(गावो गाव स्सिषासन्तीः प्रथमे मासि समान्यो यदि सोमौ षडहैरुथ्सृज्या ‘3‘ न्देवाना मर्क्यण चर्माव पृथिव्यै दत्वते कस्त्वाऽग्नये यो वै यः प्राणतो य आत्मदा आ ब्रह्म न्नाऽक्रा न्जज्ञि बीज माग्नेयोऽष्टाकपालोऽग्नयेऽꣳहोमुचेऽष्टाकपालोऽग्नये समनम द्ये ते पन्थानो यो वा अश्वस्य मेध्यस्य शिरः पञ्चविꣳशतिः। 25। गाव स्समान्य स्सवन मष्टाभि र्वा एते देवकृत ञ्चाभिजित्या इत्याहु र्वरुणोऽद्भि स्साम्ने चतुःपञ्चाशत्।। 54।। गावो योनि स्समुद्रो बन्धुः।)



हरिः ओम्।।

ओम् तत्सत्।।

समाप्ता तैत्तिरीय संहिता

यदक्षर पदभ्रष्टं मात्राहीनन्तु यद्भवेत्।

तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तुते।।